श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

## प्रथमो भागः



अयं च

श्रीशैलादृङ्कि लक्ष्मीनरसिंहकुमार कुमारतातार्य

कविभूषणस्वामिभिः प्रत्यवेक्षितः






अ. वी. नरसिंहाचार्यैः, ति. वि. चे. नरसिंहाचार्यैश्च

परिशोधितः

आर्. वेङ्कटेश्वरकम्पन्यधिकारिभिः आनन्दमुद्रायन्त्रालये

पराङ्कुशयतिवरादिगुरुपरम्पराब्देषु ५०११ तम

सौम्यसंवत्सरचैत्रशुद्धदशम्यां बहिः प्रकाशितश्च

विजयतेतराम् ॥

१९०९.

श्रीः

श्रीमते रामानुजाय नमः

# उपोद्धातः

विदितमेव खलु—भगवान् भाष्यकारः अनवरततन्तन्यमानपरमपुरुषनियमनातिक्रमणजनिततन्निग्रहसंकल्पविषयतया दुरभिभवभवदहनदन्दह्यमानान् सरभसेन प्रतिकूलवातेन नीयमानानिव सांयात्रिकगणान् पवनाशनवराधिष्ठितभवनवासिन इव कुटुम्बिनः हुतवहपरीतकाष्ठमध्यवर्तिन इव कीटान् महाप्रवाहमध्यगतानिव जम्बूकान् जन्तूनवलोक्य निरवधिकरुणार्द्रहृदयः पुरुषोत्तमप्रसादमेव तेषां संसृतिनिस्तरणोपायं मन्वानः, तस्य च निग्रहसङ्कल्पशान्तिपूर्वकतया तस्याश्च भक्तिप्रपत्तिजन्यत्वेन "भक्त्या त्वनन्यया शक्यः" "भक्त्या त्वनन्यया लभ्यः प्रपत्त्या वा महामुने" "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इत्यादिप्रमाणगणप्रमिततया, तदनुष्ठानस्य च भगवत्स्वरूपरूपगुणविभवविद्यास्वरूपतद्भेदतादितिकर्तव्यताज्ञानाधीनतया अपेक्षितनिखिलार्थावबोधकं श्रीभाष्याख्यं प्रबन्धरत्नमेतत्प्रणिनाय—इति। तथाचोक्तमागमान्तगुरुभिः "पथ्यानि घोरभवसंज्वरपीडितानां हृद्यानि भान्ति यतिराजमुनेर्वचांसि" इति। सचायमाचार्यः कतमः, कस्मिन् देशे संजातः, कश्चायमस्य प्रबन्धस्य विषयः—इत्यत्र किंचिदुच्यते। स भगवान् श्रियः पतिर्निखिलहेयप्रत्यनीककल्याणैकतानस्वरूपः "यो ब्रह्मणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" "हर्तुं तमस्सदसतीच विवेक्तुमीशो मानं प्रदीपमिव कारुणिको ददाति" इत्युक्तरीत्या स्वस्वरूपरूपगुणविभूतिस्वाराधनतत्फलादिप्रदर्शकं वेदाख्यं प्रमाणं चतुर्मुखादिपरम्परया प्रवर्तयामास। एवं कृतेऽपि "किंचित्तदन्यथाभूतं त्रेतायां द्वापरेऽखिलम्" इत्युक्तरीत्या तत्तत्कर्मानुरूपमतिविलसितजनिताप्रतिपत्त्यादिभिर्निष्फलीकृते "तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः। अवतीर्णो महायोगी सत्यवत्यां पराशरात्॥ उत्सन्नान् भगवान्वेदानुज्जहार हरिस्स्वयम्। चकार ब्रह्मसूत्राणि येषां सूत्रत्वमञ्जसा" इति व्यासरूपेणावतीर्य वेदान् विशदीकर्तुं प्रवृत्तः स्वशिष्येण जैमिनिमुनिना स्वाराधनैकप्रधानपूर्वभागार्थविचाररूपपूर्वमीमांसासूत्राणि कारयित्वा स्वयमेव स्वस्वरूपादिप्रतिपादनेदंपरोपनिषदर्थविचाररूपशारीरकमीमांसासूत्राणि प्रणिनाय। तानि चेमानि सूत्राणि औपनिषदपरमपुरुषवरणीयताहेतुगुणविशेषविरहितैरनधिगतप्रत्यक्षादिप्रमाणयाथात्म्यैरयथायथं व्याख्यतानीति तदर्थयाथात्म्यप्रतिपादनकृतादरेण दामोदरेण नियुक्तः "नि-

वासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः । शरीरभेदैस्तव शेषतां गतैः यथोचितं शेष इतीरिते जनैः'' इति सर्वदेशसर्वकालसर्वावस्थोचितसर्वविधशेषवृत्तिकरणेनानितरसाधारणशेषसमाख्याविख्यातः सूरीणामग्रणीः श्रीकान्तचरणारुणाम्बुजपरिचरणतत्परजननिबिडतया प्रख्यातगुणसमाख्यायां श्रीभूतपुर्यभिख्यायां नगर्यां सन्ततविहितानभिसंहितफलसप्ततन्तुसमाराधितरमारमणस्य हारितकुलजलधिराकाशशाङ्कस्य केशवसोमयाजिनाम्नो विप्रवर्यस्य जायायां भूदेवीसमाह्वायां श्रीशैलपूर्णसहोदरायां पिङ्गलाब्दचैत्रशुक्लपञ्चम्यामार्द्रायुजि गुरोश्शुभे वासरेऽवततार ॥

अत्र केचिदेवं मन्यन्ते—एतन्महिमातिशयवर्णनेदंपरप्रवृत्ते संयमिसार्वभौमेणैव स्ववैभवप्रकटनमसम्मन्यमानेनापि कुरुकेशदाशरथिप्रभृतिभिस्सत्रिनयमभ्यर्थितेनाङ्गीकृत्य स्वशिष्येभ्यः प्रवर्तिते शतान्तादिप्रबन्धे पञ्चायुधावतारत्वमेवास्य वर्णितम् ; यतिराजसप्तत्यामपि ''प्रथयन् विमतेषु तीक्ष्णभावं प्रभुरस्मत्परिरक्षणे यतीन्द्रः । अपृथक्प्रतिपन्नयन्मयत्वैर्ववृधे पञ्चभिरायुधैर्मुरारेः'' इति पञ्चायुधावतारत्वम् , तत्रैवान्यत्र ''विश्वं त्रातुं विषयनियतं व्यञ्जितानुग्रहस्सन् विष्वक्सेनो यतिपतिरभूद्वेत्रधारस्त्रिदण्डः'' इति सेनेशांशत्वमपि प्रतिपादितम् , नानन्तावतारत्वम् ; अतः पञ्चायुधावतार एवायम्—इति । पञ्चायुधीसेनेशसमुच्चयवत् पन्नगेन्द्रसमुच्चयोऽपि सङ्घटेतेति नात्रातीव विवादः शोभत इति विरम्यते

एवमवतीर्णश्चायमाचार्यवर्यो यथाविधिविहितसंस्कारः काञ्चीपुरनिवासिनो विबुधाद्यादवप्रकाशाभिधात् कणभक्षाक्षचरणपाणिनिगुरुकुमारिलादिमतविशेषार्थानग्रहीत् । तदात्वे च तद्देशाधिपस्य पुत्रीं कश्चिद्ब्रह्मराक्षसो जग्राह । स तु नरपतिर्यादवप्रकाशं मन्त्रवित्तमं ज्ञात्वा तमाकारयामास । स च शिष्यैः परिवृतः क्षितिपतिसभां गत्वा तेन च यथार्हं विहितसपर्यः कन्यां तामाह्वापयामास । सा च कन्या भूताविष्टा साट्टहासं विहस्याह—अहो त्वमद्य मामुत्सारयितुमागतः, किं न श्रुतं त्वया—परश्शतं मान्त्रिका मदीयेन सरभसाट्टहासेन भीता यथागतं प्रदुद्रुवुः—इति । किं च त्वदीयं पूर्वजन्मवृत्तान्तम् अपि जानासि ?; त्वं किल गोधात्वमनुप्राप्य कस्मिंश्चिद्गुल्मे वसन् शेषाचलशिखशेखरायमाणस्य भगवतः श्रीनिवासस्य संसेवनाय प्रस्थितानां हरिदासानां भुक्तोच्छिष्टभक्षणेन विप्रत्वं प्राप्तः । अहं तु भगवद्दासः क्रतुभिः कैटभारिमाराधयन् तत्र स्वरादिभ्रेषेण ब्रह्मराक्षसोऽभवम् । परं तु योऽयं त्वदन्तेवासी लक्ष्मणाभिधानः भस्मच्छन्नानल इव स्वमहिमानमनवधिकमप्यनाविष्कुर्वन् प्राकृत इवास्ते, स यदि स्वचरणारुणाम्बुरुहयुगलं मदीये मूर्ध्नि विन्यस्य मामादिशेत् ; तदा यथानियोगमनुतिष्ठामि—इति । नरपतिश्चैतदाकर्ण्य सप्रश्रयं प्रणम्य गुरुवरं प्रार्थयामास । गुरु तल्लजश्चायमुररीचकार नरपालाभ्यर्थनाम् । कन्यायामाविष्टो ब्रह्मराक्षसश्च गुरुवरमेनं प्रणम्य तदीयं पदपङ्केरुहं स्वशिरसि धृत्वा 'कृतार्थोऽस्मि' 'धन्योऽस्मि' इत्युक्त्वा

तां कन्यां सन्त्यज्य गतः । तदनु मुदितेन राज्ञा कृताभ्यनुज्ञो यादवप्रकाशः सशिष्यः स्वाव सथमगात् । अथ कदाचिद्यादवप्रकाशस्याभ्यञ्जनं कुर्वति गुरुवरे तेनोक्तं "तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" इत्यस्याः श्रुतेः 'मर्कटपृष्ठसदृशे भगवतोऽक्षिणी' इत्यर्थं श्रुत्वा शोकेनाश्रुबिन्दून् व्यसृजत् । ते च वह्निकणा इव तदूर्वोर्न्यपतन् । तान् दृष्ट्वा यादवप्रकाश एनमाचार्यमपृच्छत्—कुतस्तवायं शोकः—इति । श्रुतेरस्यास्समीचीनेऽर्थे सम्भवति भवद्भिरुक्तमपार्थं श्रुत्वाहं दूये—इति प्रत्यवादीत् । सच 'कोऽयं समीचीनार्थः' इति पप्रच्छ । आचार्यशिखामणिरयं—'कं पिबतीति कपिस्सूर्यः, तेनास्यते विकसितं क्रियत इति; कमुदकं प्यास आसनम् उद्भवो वा यस्येति; कपिः नालम्, तस्मिन् आस आसनं यस्येति च व्युत्पत्त्या रविकरविकसितगम्भीराम्भस्समुद्भूतसुमृष्टनालपुण्डरीकदलामलायते भगवतोऽक्षिणी,—इत्यर्थत्रयमुपन्यस्योत्तरयांचकार । एवमस्य गुरोर्भगवत्प्रेमातिशयः, अनितरसाधारणं निगमान्ततत्त्वार्थनिरूपणकौशलं, तदितरविषयवैतृष्ण्यम्—इत्यादयो गुणा दिनेदिनेऽभिवृद्धा अभूवन् । एवं काञ्चीनगरे निवसति गुरुवरे यामुनार्यनामा गुरुवरः श्रीरङ्गनगरनिवासी लक्ष्मणार्यस्य गुणगणान् श्रुत्वा विषयेऽस्मिन् किञ्चित्कुर्वता मया भवितव्यमिति मन्यमानोऽपि शास्त्रान्तराभ्यासपरिसमाप्तिं प्रतीक्षमाणः तदात्व एव स्वस्य मुक्तिघण्टापथप्रस्थानवासरं प्रत्यासन्नं मन्वानः महापूर्णमेतदानयनाय प्राहिणोत् । निशम्य चैनमुदन्तं चिरकाङ्क्षितयामुनार्यशिष्यभावो गुरुवरस्त्वरया महत्या निरगाच्च काञ्चीनगरात् । स यावद्रङ्गनगरं नाससाद, तावदेव यामुनार्यस्समलञ्चकार मुरवैरिलोकममलम् । गच्छन्नेव कनकनिम्नगायास्तटे दक्षिणे पश्यन्नतिमहतीं परिषदं श्रीवैष्णवानां विदितयामुनार्यवृत्तान्तो नितान्ततान्त आकुलस्वान्तश्च आचार्यविप्रयोगजनिते महति शोकसागरे निममज्ज। चिराल्लब्धधृतिरुपसृत्य तच्चरमविग्रहमाचार्यस्यापादमौलि संसेवमानः दक्षिणे करे आकुञ्चितमङ्गुलित्रयमद्राक्षीत्; अप्राक्षीच्च तत्रत्यानन्तेवासिजनान्—कदानु पुनरिदमङ्गुलित्रयमाकुञ्चितम्; कीदृश्यस्य शरीरे रुजा सञ्जाता—इति । ते च प्रत्यब्रुवन्—न काचिदपि रुजाविरासीदस्य वपुषि, निर्याणानन्तरमेवाकुञ्चितमिदमङ्गुलित्रयम्—इति । पुनरपि तान् पप्रच्छ—किमस्यापूरितो मनोरथ आसीत्—इति । तेच प्रत्यूचुः—श्रीशारीरकमीमांसासूत्रस्य बोधायनमहर्षिप्रणीतवृत्तिग्रन्थानुसारिणी नातिसङ्क्षिप्ता नातिविस्तृता च व्याख्या प्रणेतव्या; व्यासपराशरयोरस्मत्सिद्धान्तप्रवर्तकयोर्नाम तत्कृतोपकारस्मृतिफलतया प्रकटनीयम्; प्रपन्नजनकूटस्थेन श्रीशठमथनमुनिना प्रवर्तिताया द्रमिडोपनिषदो व्याख्या च कर्तव्येति मुहुर्मुहुः कथयन्त एवासन्; एतत्त्रितयमपि न कृतमेव—इति । एतद्वचनमाकर्ण्य 'सर्वमहं करिष्ये' इति प्रत्यश्शृणोत् । अनन्तरं चाङ्गुलयो यथापूर्वमासन् । ततश्च यामु-

नार्यस्य अनन्तरकर्तव्यशेषे यथाक्रमं निर्वृत्ते लक्ष्मणार्योऽयं तुर्याश्रमश्रीपरिष्कृतः कूरनाथ-कुरुकेशदाशरथिप्रभृतिभिरन्तेवसद्भिः परिवृतस्तेषां तत्त्वार्थानुपदिदेश। अथ कदाचिद्दिगन्तवास्तव्यप्रतिमतकथकविजयाय प्रस्थितो वाराणस्यां सरस्वतीभण्डारमभ्ययात्। तत्र च भारती स्वयमेवास्याभिमुखमागत्य "तस्य यथा कप्यासं पुण्डरीकम्" इत्यस्याः श्रुतेरर्थं ब्रूहि—इत्यपृच्छत्। यतिपतिरयं सम्यगर्थं न्यरूपयत्। तच्छ्रुत्वातितुष्टा तुष्टाव तं शारदा। तत्कृतं च भाष्यं स्वशिरसा सम्भाव्य 'तवैवेदं श्रीभाष्यकार इति नाम युज्यते' इत्युक्त्वा सादरं तं व्यसृजत्। एवमयं संयमिसार्वभौमः "गाथा ताथागतानां गलति गमनिका कापिली क्वापि लीना क्षीणा काणादवाणी द्रुहिणहरगिरस्सौरभं नारभन्ते। क्षामा कौमारिलोक्तिर्जगति गुरुमतं गौरवाद्दूरवान्तं का शङ्का शङ्करादेर्भजति यतिपतौ भद्रवेदीं त्रिवेदीम्" इति विशिष्टाद्वैतसिद्धान्तं सर्वतोमुखयन् तत्परिपन्थिनश्च वादाहवैर्निरुन्धन्नुवास अस्य चाचार्याः पञ्च—महापूर्णः पञ्चसंस्कारादिसर्वार्थोपदेष्टा, श्रीशैलपूर्णः श्रीरामायणोपदेष्टा, गोष्ठीपूर्णः रहस्यार्थशिक्षकः, श्रीरङ्गनाथगुरुः द्रविडोपनिषदुपदेष्टा, श्रीमालाधरगुरुस्तदर्थोपदेष्टा; श्रीकाञ्चीपूर्णस्तु वार्तावट्कं हस्तिगिरिमस्तकभूषणाद्वरदादुपश्रुत्य कथनेनोपकारकतया स्वीकृतः। ताश्च वार्तास्संगृहीताः—"परं तत्त्वं सोऽहं प्रपदनमुपायोऽन्तिमदशास्मृतेर्नैवापेक्षा वपुरपगमे मोक्षगमनम्। विशिष्टाद्वैतं स्वं मतमपि महापूर्णभजनं षडप्यर्थानेतानुपनिषदिवाहौपनिषदः" इति। तत्कृताः प्रबन्धाश्च नव—(१) वेदान्तसारः (२) वेदान्तदीपः (३) वेदार्थसङ्ग्रहः (४) श्रीभाष्यम् (५) श्रीरङ्गगद्यम् (६) श्रीवैकुण्ठगद्यम् (७) शरणागतिगद्यम् (८) गीताभाष्यम् (९) नित्यग्रन्थश्च—इति। अस्य वैभवातिशयस्तु सहस्रवदनेनापि न निरूपयितुं शक्य इति ग्रन्थविस्तरभिया न लिख्यतेऽस्माभिः, गुरुपरम्पराप्रपन्नामृतादिग्रन्थेषु विशदमनुसन्धेयः॥

अथ विशिष्टाद्वैतसिद्धान्तशब्दस्य कोऽर्थः ?, कथमस्य यतीन्द्रमतस्य तच्छब्दवाच्यत्वम्? इति चेत्—अत्र किंचिदुच्यते—सिद्धान्तशब्दः प्रामाणिकतया परिगृहीतार्थवाची, तदुक्तं न्यायपरिशुद्धौ "अथ सिद्धान्तः प्रामाणिक इत्यभ्युपगतोऽर्थः" इति। न्यायसारे च "प्रामाणिकतयाभीष्टस्सिद्धान्तः स त्रिधा मतः" इति। स एव मतशब्दाभिलप्यः। तत्र द्वयोर्भावः द्विता, द्वितैव द्वैतम्; भेद इत्यर्थः। न द्वैतमद्वैतम् अभेदः। विशिष्टस्याद्वैतं विशिष्टाद्वैतं स्वव्यतिरिक्तसमस्तचेतनाचेतनविशिष्टं ब्रह्मैकमेव तत्त्वमिति प्रतिपादनात् रामानुजीयं मतं विशिष्टाद्वैतसिद्धान्त इति व्यपदिश्यते॥

शङ्करादिभिः 'ब्रह्मैकमेव तत्त्वम्, तद्व्यतिरिक्तमखिलं मिथ्या' इति निरूपणात्तेषां मतम् अद्वैतसिद्धान्त इति व्यवह्रियते। आनन्दतीर्थीयं मतं द्वैतमिति, तैः जगतो ब्रह्मणश्च पाल्यपालकभावसंबन्धादृते ऐक्यव्यपदेशयोग्यसम्बन्धविशेषानभ्युपगमात्, उभयोस्सत्यत्वाङ्गीकारा-

च।एतन्मते चिदचिदात्मकप्रपञ्चस्य ब्रह्मणश्च सत्यत्वमङ्गीकृत्य तयोश्शरीरशरीरिभावसम्बन्धाभ्युपगमेन लोके शरीरस्य जीवात्मनश्चात्यन्तभेदेऽपि 'चैत्र एकः' इत्यादिरेकत्वव्यवहारो यथा दृश्यते, तथेहापि चिदचिच्छरीरकस्य ब्रह्मण एकत्वव्यपदेशः परस्परं स्वरूपभेदश्च युज्यते । तदुक्तं श्रीमन्न्यायसिद्धाञ्जने—"अशेषचिदचिदचित्प्रकारं ब्रह्मैकमेव तत्त्वम्,इदमेवचेत्थम्भूतं सामान्यतः प्रमाविषयतया विशेषतः प्रकर्षेण मेयतया च प्रमेयमित्युच्यते । तत्र प्रकारप्रकारिणोः प्रकाराणां च मिथोऽत्यन्तभेदेऽपि विशिष्टैक्यादिविवक्षया ऐक्यव्यपदेशः, तदितरनिषेधश्च"—इति। एतेन विशिष्टाद्वैतशब्दार्थोऽर्थाद्विवृतो भवति। नन्वस्मिन्मते मतान्तरवादिभिरनभ्युपगता अनेकेऽर्था नित्यसूरिसद्भावादयोऽङ्गीकृताः, तत्किमित्येभिर्न व्यपदिश्यते । उच्यते—तेष्वभ्युपगतेष्वस्यैव शरीरशरीरिभावसम्बन्धस्य प्रधानप्रतितन्त्रत्वात्; तत्र प्रतिनियतं तन्त्रमिति व्युत्पत्त्या अन्यसिद्धान्तिभिरनभ्युपगततत्तन्मतासाधारणार्थः प्रतितन्त्रशब्दाभिधेयः ; तदुक्तं न्यायसारे—"स्वतन्त्रमात्रसिद्धस्तु प्रतितन्त्रोऽभिधीयते" इति । ते चास्मिन्मते नित्यसूरिसद्भावादिकाः; तेष्वप्यस्य सम्बन्धस्य प्रधानत्वात् प्रधानप्रतितन्त्रमिति व्यवह्रियते । किं नाम प्राधान्यमस्यार्थस्येति चेत्—सर्वश्रुत्यर्थतत्त्वावबोधकत्वं सर्ववादिविजयावहत्वं चेति ब्रूमः । तच्चोक्तम्—"आधेयत्वप्रभृतिनियमैरादिकर्तुश्शरीरं सत्तास्थेमप्रयतनफलेष्वेतदायत्तमेतत् । विश्वं पश्यन्निति भगवति व्यापकादर्शदृष्टे गम्भीराणामकृतकगिरां गाहते चित्तवृत्तिम् ॥ यद्येतं यति सार्वभौमकथितं विद्यादविद्यातमः प्रत्यूषं प्रतितन्त्रमन्तिमयुगे कश्चिद्विपश्चित्तमः । तत्रैकत्र झडित्युपैति विलयं तत्तन्मतस्थापनाहेवाकप्रथमानहैतुककथाकल्लोलकोलाहलः"—इति । अस्यार्थस्य सर्वश्रुत्यर्थतत्त्वावबोधकत्वमित्थमुपवर्णितम्—"मिथो भेदं तत्त्वेष्वभिलपति भेदश्रुतिरथो विशिष्टैक्यादैक्यश्रुतिरपि च सार्था भगवती । इमावर्थौ गोप्तुं निखिलजगदन्तर्यमयिता निरीशो लक्ष्मीशः श्रुतिभिरपराभिः प्रणिदधे"—इति । इदमत्राकूतम्—"पृथगात्मानं प्रेरितारं च मत्वा" "ज्ञाज्ञौ द्वावजावीशनीशौ" "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इत्यादिका भेदश्रुतिः, "नेह नानास्ति किञ्चन" "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" "सर्वं खल्विदं ब्रह्म" इत्यादिका अभेदश्रुतिः, "यस्यात्मा शरीरम्" यस्य पृथिवी शरीरम्" "य आत्मनि तिष्ठन्" इत्यादिका घटकश्रुतिः । आसुच श्रुतिषु अद्वैतिभिः भेदश्रुतयः औपचारिकाः बाधितार्था वा स्वीकर्तव्याः; तथा द्वैतिभिभेदश्रुतयोऽङ्गीकर्तव्याः ; उभयैरपि घटकश्रुतयस्तथैव वर्णनीयाः। विशिष्टाद्वैतिमतेतु लोकदृष्टशरीरशरीरिन्यायेन शरीरस्य शरीरिणश्च परस्परं भेदस्यानुभाविकतया तादृशभेदबोधकत्वेन भेदश्रुतयः, 'चैत्र एकः' इतिवत् विशिष्टस्य शरीरिण एकत्वेन अभेदश्रुतयः, एतादृशसम्बन्धबोधकत्वेन घटकश्रुतयश्च मुख्या अबाधिताश्चाङ्गीकृताः—इति । अतः सर्वश्रुतिमुख्यार्थावबो-

धकत्ववादिविजयप्रयोजकत्वाभ्यां शारीरशरीरिभावसम्बन्धः प्रधानप्रतितन्त्रमित्युच्यते
थाच 'प्रधानेन व्यपदेशा भवन्ति' इति न्यायेन तादृशसम्बन्धबोधकेन विशिष्टाद्वैत
व्यपदिश्यते । एतेनेदमपि प्रत्युक्तम्, यदुत सूक्ष्मचिदचिद्विशिष्टब्रह्मणः स्थूलचिद
शिष्टब्रह्मणश्चाभेदस्य सिद्धान्तसिद्धतया विशिष्टाद्वैतशब्दस्य विशिष्टयोरद्वैतमिति व्यु
तादृशार्थबोधकत्वम्—इति ; चेतनाचेतनयोश्शरीरत्वे सिद्ध एव तादृशार्थसिद्धिरिति
रशरीरिभाव सम्बन्धोपजीवित्वाच्चास्यार्थस्येति । अयं च विशिष्टाद्वैतसिद्धान्तः पूर्वं परा
श्रीविष्णुपुराणे प्रतिपादितः । अनन्तरं च पाराशर्येण महाभारतशारीरकसूत्रादिषु वर्णित
ततश्च बोधायनेन मुनिना वृत्तिग्रन्थेन विस्तृतः । अथ च टङ्कद्रमिडादिभिः द्रमिड
ष्यादिषु सङ्क्षिप्तः । एवं युगान्तरेषु प्रचुरोऽप्ययमस्मिन् कलियुगे प्रथमं श्रीपराङ्कुशमु
स्वीयद्रविडोपनिषदि साधिकविंशतिभिर्गाथाभिस्सङ्गृह्य प्रवर्तितः । तथाचोक्तम् "द्विका
द्यष्टाब्दिर्दुरधिगमनीतिस्थपुटिता यदन्त्या मीमांसा श्रुतिशिखरतत्त्वं व्यवृणुत । तदादौ
थाभिर्मुनिरधिकविंशाभिरिह नः कृती सारग्राहं व्यतरदिह सङ्गृह्य कृपया" इति ।
परं च श्रीमन्नाथमुनिभिर्न्यायतत्त्वाख्यप्रबन्धेन निरूपितः, यामुनमुनिभिरागमप्रामाण्यसि
त्रयादिभिः प्रबन्धैः विवृतश्च; भगवद्भाष्यकारैः कुमतिमतविततितूलवातूलायमानयुक्तिनि
रपरिकर्मितेनानेन श्रीभाष्याभिख्येन ग्रन्थेन सम्यक् प्रतिष्ठापितश्च । तच्चोक्तम्—"नाथो
प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धैस्त्रातं सम्यग्यतीन्द्रैरिदमखिलतमःकर्शनं दर्शनं न
इति । तत्तद्ग्रन्थानुसारीचायं ग्रन्थ इति प्रदर्शनाय—'तदाह वृत्तिकारः' इति, 'भाष्य
इति च बोधायनवृत्तिद्रविडभाष्यसंवादः,सिद्धित्रयसंवादश्च दर्शितः । प्रतिज्ञातं च प्र
न्धारम्भे ग्रन्थकृता—'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याःसञ्चिक्षिपु
तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते'—इति । व्याख्यातं च श्रुतप्रकाशिकायाम्
"इह तु वृत्त्यनुसारः प्रतिज्ञातः, न च तत्प्रतिज्ञानमहृदयमिति शङ्कनीयम्, दुष्परिहरबा
कानुपलम्भादिति, परमर्षिप्रणीतानि व्याख्येयानि,तेषां महर्षिप्रणीतानि व्याख्यानानि च
न्ति चेत्—तान्येवानुरोद्धव्यानि ; नह्यनृषेस्सूक्ष्मदर्शित्वम् ; ऋषेरभिप्रायमृषिरेव च स्व
वेदितुमर्हति,न तु जडमतिरितरो जनः"—इत्यादि । इतरेषां च व्याख्यातॄणामार्षव्याख्
तिलङ्घित्वम् "उपासात्रैविध्यात्" "सर्वत्र प्रसिद्धोपदेशात्" "भूमा सम्प्रसादादध्युप
शात्" "दहर उत्तरेभ्यः" इत्यादिषु स्पष्टतरमिति च । अतः "निराबाधा बोधायन
णितिनिष्यन्दसुभगा विशुद्धोपन्यासव्यतिभिदुरशारीरकनयाः । अकुण्ठैः कल्पन्ते यतिप
निबन्धा निजमुखैरनिद्राणप्रज्ञारसधमनिवेधाय सुधियाम्' इत्युक्तरीत्या शारीरकसूत्रा
मियं संयमीन्द्रकृतैव व्याख्या महर्षिमतानुसारिणी सम्यग्ज्ञानविवृद्धिजननी सुतरामादर्त
ति च सुस्पष्टम् । अत्र च प्रबन्धे 'स्वप्राप्तेः स्वयमेव साधनं ब्रह्म' इत्ययमर्थः चतुर्ष्वध्या

षु प्रतिपाद्यते। तत्र च द्विकद्वयभिन्ने पूर्वद्विकं ब्रह्मशब्दार्थत्वप्रतिपादनपरम्। जगज्जन्मादिकारणत्वेन हि ब्रह्मत्वं श्रुतिप्रतिपादितम्—"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति" इति। अतो जगज्जन्मादिकारणत्वसमर्थनपरं पूर्वद्विकं ब्रह्मशब्दार्थत्वप्रतिपादनपरं सिद्धोपायोपेयप्रतिपादनपरं विषयप्रतिपादनपरमिति तात्पर्यभेदवर्णनं कृतम्। उत्तरद्विकं तु प्रापकत्वप्राप्यत्वप्रतिपादनपरं साध्योपायोपेयप्रतिपादनपरं विषयिप्रतिपादनपरमिति च भिदा वर्णिता। तत्र च प्रथमाध्यायः ब्रह्मणि जगत्कारणत्वान्वयं प्रतिपादयति। द्वितीयश्च ब्रह्मणो निखिलजगदेककारणत्वे वेदान्तवाक्यविरोधशङ्काया यौक्तिकविरोधशङ्कायाः केषांचिन्नित्यत्वश्रुतिविरोधशङ्कायाश्च निवर्तकः। तृतीयश्च साधनप्रतिपादकः। चतुर्थश्च प्राप्तिचिन्तापरः—इति चतुर्णामध्यायानामर्थभेदो निरूपितः। पादानां च षोडशसंख्याकानामर्थभेदश्च इत्थं वर्णितः—प्रथमेऽध्याये प्रथमपादे अस्पष्टतरजीवादिलिङ्गकानि वाक्यानि विचारितानि। द्वितीये पुनरस्पष्टजीवादिलिङ्गकानि; तृतीये स्पष्टतल्लिङ्गकानि, चतुर्थे स्पष्टतरजीवादिलिङ्गकानि। द्वितीयस्य प्रथमे पादे—सांख्यादिस्मृतिभिर्बाधस्य परिहारः; द्वितीये—प्रतिपक्षतर्काणां वेदान्तवाक्यानुसारिभिस्सत्तर्कैर्निराकरणम्; तृतीये—आकाशादेः कार्यत्वनिरूपणम्; चतुर्थे—इन्द्रियादेः कार्यत्वनिरूपणं च कृतम्। अथ तृतीयस्य प्रथमे—जाग्रदाद्यवस्थावस्थितस्य जीवस्य दोषादिनिरूपणम्; द्वितीये—पुरुषोत्तमस्य सर्वदा हेयप्रत्यनीकत्वकल्याणगुणाकरत्वरूपोभयलिङ्गत्वप्रतिपादनम्; तृतीये—साधनभेदनिरूपणम्; चतुर्थे—अङ्गनिरूपणं च कृतम्। अथ चतुर्थस्य प्रथमे—उपासनारोहमाहात्म्यमुत्तरपूर्वाघाश्लेषविनाशरूपम्; द्वितीये—उत्क्रान्तिप्रकारः; तृतीये—अर्चिरादिगतिः; चतुर्थे—ब्रह्मप्राप्तिरूपमपुनरावृत्तिलक्षणं च निरूपितम्—इति। तदुक्तं निगमान्तगुरुभिः—"शास्त्रं चैतत्समन्वित्यविहतिकरणप्राप्तिचिन्ताप्रधानैरध्यायैः षोडशाङ्घ्रिद्विकयुगभिदुरं षट्भेदादिनीत्या। तत्राद्यं वक्ति सिद्धं विषयमपि परं तत्प्रतिद्वन्द्वियुग्मं स्वप्राप्तेस्साधनं च स्वयमिति हि परं ब्रह्म तत्रापि चिन्त्यम्॥ तत्राद्येऽत्यन्तगूढाविशदविशदसुस्पष्टजीवादिवाचः पश्चात्स्मृत्यादिकैरक्षतिरहितहतिः कार्यताश्चेन्द्रियादेः। दोषादोषौ तृतीये भवभृदितरयोर्भक्तिरङ्गानि चाथोपासारोहप्रभावोत्क्रमसरणिफलान्यन्तिमे चिन्तितानि" इति॥ तत्र च आद्याधिकरणचतुष्टयं शास्त्रारम्भसमर्थनरूपम्। तत्र च पूर्वद्विकमुत्तरद्विकमिति पेटिकाभेदः। प्रतीतिजनकत्वस्थापनपरा पूर्वपेटिका। उत्तरा तु वैफल्यशङ्कापरिहारपरा। तत्र सिद्धपरशब्दसामान्यस्य बोधकत्वं प्रथमाधिकरणे न समर्थितम्। द्वितीयेन सिद्धपरशब्दविशेषस्य ब्रह्मरूपार्थविशेषबोधकत्वम्। तृतीयेन मानान्तरावगतत्वाद्ब्रह्मणः शास्त्रस्य वैफल्यमिति शङ्का निराकृता। चतुर्थेन शास्त्रजन्यज्ञानस्य प्रवृत्तिनिवृत्त्यबोधकत्वाद्वैफल्यमिति शङ्का। तच्चोक्तं—"द्वाभ्यामादौ प्रतीतिप्रजननमुदितं सिद्धरूपे परस्मिन्

द्वाभ्यां वैफल्यशङ्का तदनु परिहृता शास्त्रतजन्यबुद्ध्योः"—इति ; "व्युत्पत्त्यभावः प्रतिपत्तिदौस्स्थ्यमन्येन लभ्यत्वमथाफलत्वम् । एतानि वै सूत्रचतुष्टयेनानारम्भमूलानि निराकृतानि"—इति च ॥ अत्र ग्रन्थे समुदितसूत्रसंख्या पञ्चचत्वारिंशदधिकपञ्चशती (५४५) अधिकरणसंख्या षट्पञ्चाशदधिकं शतम् (१५६) । तचोक्त—सौत्री संख्या शुभाशीरधिकृतिगणना चिन्मयी ब्रह्मकाण्डे—इति । सूत्रलक्षणं तु—"अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः" इति प्रतिपादितम् । भाष्यलक्षणं तु—"सूत्रार्थो वर्ण्यते यत्र वाक्यैस्सूत्रानुकारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः"—इति । अत्र च 'एतदुक्तं भवति' इत्यादिवाक्यैः स्ववाक्यविवरणात् सूत्रार्थनिरूपणाच्च भाष्यलक्षणवत्त्वं स्फुटम् । 'संक्षिप्तस्य च विस्तारः संक्षेपो विस्तृतस्य च । एतदुक्तं भवतिना समाधिर्व्याकुलस्य च" इति; 'एतदुक्तं भवति' इत्यादिग्रन्थस्य प्रयोजननिरूपणात् स्ववाक्यविवरणरूपत्वं स्पष्टम् । इदं च शास्त्रं शारीरकमिति व्यपदिश्यते । शरीरसम्बन्धी शारीरः । जगच्छरीरक इत्यर्थः । शारीरं कायति प्रतिपादयतीति शारीरकम्; 'कै गै शब्दे' इति धातोः "आतोऽनुपसर्गे कः"इति कप्रत्ययः । जगच्छरीरकब्रह्मप्रतिपादकमित्यर्थः । उक्तं च श्रुतप्रकाशिकायां—"शारीरकं ब्रह्ममीमांसा; जगच्छरीरकः परमात्मा शारीरः "तस्यैष एव शारीर आत्मा" इति श्रुतेः । तद्विषयकं शास्त्रं शारीरकमित्युच्यते" इति ॥

उक्तं च तत्त्वटीकायां "सर्वशरीरगोचरत्वं दर्शयताशारीरकशब्देन" इति। प्रत्येकमधिकरणस्याङ्गानि पञ्चेति केचिद्वदन्ति; तानि च—विषयवाक्यनिरूपणम्, संशयप्रतिपादनम्, पूर्वपक्षसिद्धान्तयुक्तिनिरूपणम्, निश्चयः, पूर्वपक्षसिद्धान्तयोः प्रयोजननिरूपणं च—इति । तदुक्तं "विषयस्संशयश्चैव विचारो निर्णयस्तथा । प्रयोजनंच पञ्चाङ्गं प्राञ्चोऽधिकरणं विदुः" इति । दशाङ्गानीति केचित्; तचोक्तं "संगतिर्विषयश्चैव संशयोत्थानकारणम् । संशयस्य प्रकारश्च तदर्थाच विचारणा । तस्यां फलफलित्वंच न्यायौ द्वौ पक्षयोर्द्वयोः। निर्णयस्तत्फलं चेति बोध्यान्यधिकृतौ दश" इति ॥ एतद्ग्रन्थस्येदंभागमुद्रणसमये समानीताः श्रीकोशाः श्री. उ. वे. परवस्तु रामानुजाचार्याणां, श्री. उ. वे. ति. घटाम्बु. राघवाचार्याणां, श्रीरङ्गवासिनां, ए. वि. गोपालाचार्याणां, अहीन्द्रपुरवासिनां विदुषां,चे.नरसिंहाचार्याणां,राजकीयप्राचीनलिखितपुस्तकशालायाश्च तालपत्रलिखिताः पञ्च प्रकृतैः, श्रीपरवस्तुरामानुजाचार्यैः लेखकप्रमादादिरहितं विद्वत्साहाय्येन परिशोधितः वेदान्तसारवेदान्तदीपाभ्यां श्रुतप्रकाशिकया च सहितः प्रमाणाकरनिर्देशपरिष्कृतश्चैकः परमुपाकार्षुः। मुद्रितकोशोऽयमक्षरसंयोजनायोपपयुक्तो मातृकात्वेन च। अन्ये पुनस्संमित्यानुवाच्चिताः।

तत्र प्रायः श्रुतप्रकाशिकानुसारी सरलश्च पाठो मूले संयोजितः । अन्ये पाठभेदाः यथोपलम्भं तत्तत्पुटेष्वधस्साङ्कविन्यासं प्रादर्शिषत । वेदान्तदीपवेदान्तसारमुद्रणे च श्रीपरवस्तुरामानुजाचार्यमुद्रितकोश एव मातृकासीत्। सरस्वतीभाण्डारसभिकैर्मुद्रित एकः, राजकीयप्राच्यलिखितपुस्तकशालाया द्वौ तालपत्रकोशौ च परं साहाय्यमाचरन् । इत्थमुपकृतवतामेषां विषये वयं सधन्यवादं कृतज्ञतामाविष्कुर्मः । इदंपरिशोधनेन सादरं सावधानं च प्रमाणाकरपरिशीलनेन च परमुपकृतवतां परमहंसपरिव्राजकाचार्याणां श्रीमदयोध्यारामानुजसंयमिसार्वभौमाणां चरणारविन्दयोस्साञ्जलिबन्धं सकार्तज्ञ्यञ्चावेदयामः प्रणतिपरम्पराम् ॥

यद्यपि मुद्रिता एव चिरादपि श्रीभाष्यकोशा आन्ध्रगैर्वाणलिपिषु लभ्याः, तथापि ते श्रुतप्रकाशिकासहिततया ग्रन्थविस्तरेण पृथुला दुर्भराश्चेति पठितॄणां न तथा पारायणे सौकर्यं बिभ्रतीति मूलमात्रोऽयं कोशः महार्हेषु दृढतरेषु लघुषु च पत्रेषु लिप्यन्तराणां प्रादेशिकतया प्रायस्सार्वत्रिकैः प्रकृतिसुन्दरैर्नागराक्षरैः संमुद्रितः ; झडिति सूत्रार्थपरिज्ञानाय तत्तदधिकरणावसाने वेदान्तसारवेदान्तदीपाभ्यां, विशकलितानां तत्तदधिकरणपूर्वपक्षसिद्धान्तार्थानाम् अध्यायादिसङ्गतिविशेषाणां च प्रदर्शिकया श्लोकरूपया अधिकरणसारावल्या च संयोजितः ; प्रेक्षकाणां सौकर्याय तत्तेषु पुटेष्वधः प्रमाणानामाकरनिर्देशेन अन्ततोऽधिकरणसूत्रसूचिकया च परिष्कृतः ॥

इति

**ति. चे. नरसिंहाचार्यः.**

श्रीः.

# श्रीशारीरकमीमांसाभाष्यवेदान्तसारदीपानां प्रथमाध्यायस्य अधिकरणानां सूची.

| अधिकरणानि. | शारीरकमीमांसाभाष्ये | | वेदान्तसारे | | वेदान्तदीपे | |
|---|---|---|---|---|---|---|
| | आरम्भ. | समाप्ति. | आरम्भ. | समाप्ति. | आरम्भ. | समाप्ति. |
| देवताधिकरणम् | ३२१ | ३२७ | ३२७ | ३२८ | ३२८ | ३३१ |
| मध्वधिकरणम् | ३३१ | ३३२ | ३३३ | ३३३ | ३३३ | ३३४ |
| अपशूद्राधिकरणम् | ३३४ | ३४२ | ३४२ | ३४३ | ३४३ | ३४५ |
| प्रमिताधिकरणशेषः | ३४५ | ३४६ | ३४६ | ३४६ | ३४६ | ३४७ |
| अर्थान्तरत्वादिव्यपदेशाधिकरणम् | ३४७ | ३५० | ३५० | ३५१ | ३५१ | ३५२ |
| **चतुर्थपादे.** | | | | | | |
| आनुमानिकाधिकरण | ३५३ | ३६० | ३६१ | ३६२ | ३६२ | ३६४ |
| चमसाधिकरणम् | ३६४ | ३६९ | ३७० | ३७० | ३७० | ३७२ |
| संख्योपसंग्रहाधिकरण | ३७२ | ३७५ | ३७५ | ३७५ | ३७५ | ३७७ |
| कारणत्वाधिकरणम् | ३७७ | ३८० | ३८० | ३८० | ३८० | ३८१ |
| जगद्वाचित्वाधिकरणम् | ३८१ | ३८७ | ३८७ | ३८७ | ३८७ | ३८८ |
| वाक्यान्वयाधिकरणम् | ३८९ | ३९७ | ३९७ | ३९७ | ३९८ | ३९९ |
| प्रकृत्यधिकरणम् | ३९९ | ४०८ | ४०९ | ४१० | ४१० | ४११ |
| सर्वव्याख्यानाधिकरण | ४१२ | ४१२ | ४१२ | ४१२ | ४१२ | ४१२ |

## उपरितनसंकेतानां विवरणम्.

अ-सं = अध्यायसंख्या ॥

पा-सं = पादसंख्या ॥

सू-सं = सूत्रसंख्या ॥

शा-भा. पु-सं = शारीरकमीमांसाभाष्यपुटसंख्या ॥

वे-सा. पु-सं = वेदान्तसारपुटसंख्या ॥

वे-दी. पु-सं = वेदान्तदीपपुटसंख्या ॥

श्रीः.

# श्रीशारीरकमीमांसाभाष्यवेदान्तसारदीपानां प्रथमाध्यायस्य अकारादिक्रमेण सूत्राणां सूची ॥

| सूत्राणि. | अ-सं. | पा-सं. | सू-सं. | शा·भा· पु-सं. | वे-सा· पु-सं. | वे·दी· पु-सं. |
|---|---|---|---|---|---|---|
| जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपा- | १ | १ | ३२ | २२३ | २२६ | २२८ |
| ज्योतिर्दर्शनात्. | १ | ३ | ४१ | ३४६ | ३४६ | ३४७ |
| ज्योतिरुपक्रमातु- | १ | ४ | ९ | ३६६ | ३७० | ३७१ |
| ज्योतिश्चरणाभि- | १ | १ | २५ | २१४ | २१५ | २१८ |
| ज्योतिषिभावाच्च. | १ | ३ | ३१ | ३३१ | ३३३ | ३३४ |
| ज्योतिषैकेषामस- | १ | ४ | १३ | ३७४ | ३७५ | ३७७ |
| ज्ञेयत्वावचनाच्च. | १ | ४ | ४ | ३५८ | ३६१ | ३६३ |
| त. | | | | | | |
| तत्तु समन्वयात्. | १ | १ | ४ | १३९ | १५८ | १५८ |
| तदधीनत्वादर्थवत्. | १ | ४ | ३ | ३५७ | ३६१ | ३६३ |
| तदभावनिर्धारणे च. | १ | ३ | ३७ | ३३९ | ३४३ | ३४४ |
| तदुपर्यपि बादराय- | १ | ३ | २५ | ३२१ | ३२७ | ३२८ |
| तद्धेतुव्यपदेशाच्च. | १ | १ | १५ | १९२ | १९७ | १९९ |
| तन्निष्ठस्य मोक्षोप- | १ | १ | ७ | १६२ | १६८ | १७१ |
| त्रयाणामेव चैवमु- | १ | ४ | ६ | ३५९ | ३६१ | ३६३ |
| द. | | | | | | |
| दहर उत्तरेभ्यः. | १ | ३ | १३ | ३०४ | ३१४ | ३१६ |
| द्युभ्वाद्यायतनं स्व- | १ | ३ | १ | २८१ | २८४ | २८५ |
| ध. | | | | | | |
| धर्मोपपत्तेश्च. | १ | ३ | ८ | २९३ | २९५ | २९५ |
| धृतेश्च महिम्नो- | १ | ३ | १५ | ३०८ | ३१४ | ३१७ |
| न. | | | | | | |
| न च स्मार्तमतद्धर्मा- | १ | २ | २० | २५९ | २६१ | २६२ |
| न वक्तुरात्मोपदेशा- | १ | १ | ३० | २२१ | २२५ | २२७ |
| न संख्योपसंग्रहा- | १ | ४ | ११ | ३७२ | ३७५ | ३७५ |
| नानुमानमतच्छ- | १ | ३ | ३ | २८३ | २८५ | २८६ |
| नेतरोऽनुपपत्तेः. | १ | १ | १७ | १९३ | १९७ | २०० |
| प. | | | | | | |
| पत्यादिशब्देभ्यः. | १ | ३ | ४४ | ३४९ | ३५१ | ३५२ |
| परिणामात्. | १ | ४ | २७ | ४०४ | ४०९ | ४११ |
| प्रकरणाच्च. | १ | २ | १० | २४३ | २४७ | २४८ |
| प्रकरणात्. | १ | ३ | ५ | २८४ | २८५ | २८६ |
| प्रकृतिश्च प्रतिज्ञा- | १ | ४ | २३ | ३९९ | ४०५ | ४१० |
| प्रतिज्ञाविरोधात्. | १ | १ | ९ | १६३ | १६८ | १७१ |



श्रीमते रामानुजाय नमः ॥

श्रीभगवद्रामानुजविरचितं

# शारीरकमीमांसाभाष्यम् ॥

---

अखिलभुवनजन्मस्थेमभङ्गादिलीले
विनतविविधभूतव्रातरक्षैकदीक्षे ।
श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे
भवतु मम परस्मिञ्शेमुषी भक्तिरूपा ॥

पाराशर्यवचस्सुधामुपनिषद्दुग्धाब्धिमध्योद्धृतां
संसाराग्निविदीपनव्यपगतप्राणात्मसञ्जीवनीम् ।
पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थिता-
मानीतां तु निजाक्षरैस्सुमनसो भौमाः पिबन्त्वन्वहम् ॥

( प्रथमाध्याये—प्रथमपादे—जिज्ञासाधिकरणम् ॥ )

भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्सञ्चिक्षिपुः, तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते—

## ॐ ॥ अथातो ब्रह्मजिज्ञासा ॥ १ ॥

अत्रायमथशब्द आनन्तर्ये भवति। अतश्शब्दो वृत्तस्य हेतुभावे। अधीतसाङ्गसशिरस्कवेदस्याधिगताल्पास्थिरफलकेवलकर्मज्ञानतया संजातमोक्षाभिलाषस्यानन्तस्थिरफलब्रह्मजिज्ञासा ह्यनन्तरभाविनी ॥

ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा । ब्रह्मण इति कर्मणि षष्ठी, [१]"कर्तृकर्मणोः कृति" इति विशेषविधानात् । यद्यपि सम्बन्धसामान्यपरिग्रहेऽपि जिज्ञासायाः कर्मापेक्षत्वेन कर्मार्थत्वसिद्धिः, तथाऽप्याक्षेपतः प्राप्तादाभिधानिकस्यैव ग्राह्यत्वात् कर्मणि षष्ठी गृह्यते । न च [२]"प्रतिपदविधाना षष्ठी न समस्यते" इति कर्मणि षष्ठ्यास्समासनिषेधश्शङ्कनीयः, [३]"कृद्योगा च षष्ठी समस्यते" इति प्रतिप्रसवसम्भवात् ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयते । सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः । बृहत्त्वं च स्वरूपेण गुणैश्च यत्रानवधिकातिशयं सोऽस्य मुख्योऽर्थः; स च सर्वेश्वर एव । अतो ब्रह्मशब्दस्तत्रैव मुख्यवृत्तः । तस्मादन्यत्र तद्गुणलेशयोगादौपचारिकः, अनेकार्थकल्पनायोगात्, भगवच्छब्दवत् । तापत्रयातुरैरमृतत्वाय स एव जिज्ञास्यः । अतस्सर्वेश्वर एव जिज्ञासाकर्मभूतं ब्रह्म ॥

ज्ञातुमिच्छा जिज्ञासा । इच्छाया इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिह विधीयते ॥

मीमांसापूर्वभागज्ञातस्य कर्मणोऽल्पास्थिरफलत्वादुपरितनभागावसेयस्य ब्रह्मज्ञानस्यानन्ताक्षयफलत्वाच्च पूर्ववृत्तात्कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्म ज्ञातव्यमित्युक्तं भवति । तदाह वृत्तिकारः— [४]"वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषा" इति । वक्ष्यति च कर्मब्रह्ममीमांसयोरैकशास्त्र्यं—[५]"संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः" इति । अतः प्रतिपिपादयिषितार्थभेदेन षट्कभेदवदध्यायभेदवच्च पूर्वोत्तरमीमांसयोर्भेदः । मीमांसाशास्त्रम्— [६]"अथा

१. अष्टा. २. अ. ३. पा. ६५. सू.
२. अष्टा. २. अ. २. पा. १० सू. वा.
३. अष्टा. २. अ. २. पा. ८. सू. वा.
४. बोधायनवृत्तिः
५. बोधायनवृत्तिः
६. कर्ममी. १. अ. १. पा. १. सू.

धर्मजिज्ञासा" इत्यारभ्य [1]"अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्" इत्येवमन्तं सङ्गतिविशेषेण विशिष्टक्रमम्। तथाहि—प्रथमं तावत् [2]"स्वाध्यायोऽध्येतव्यः" इत्यध्ययनेनैव स्वाध्यायशब्दवाच्यवेदाख्याक्षरराशेर्ग्रहणं विधीयते ॥

तच्चाध्ययनं किंरूपं कथं च कर्तव्यमित्यपेक्षायाम् [3]"अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयेत्" इत्यनेन,

[4]"श्रावण्यां प्रोष्ठपद्यां वा उपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान् ॥"

इत्यादिव्रतनियमविशेषोपदेशैश्चापेक्षितानि विधीयन्ते ॥

एवं सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्याऽचार्योच्चारणानूच्चारणरूपमक्षरराशिग्रहणफलमध्ययनमित्यवगम्यते ॥

अध्ययनं च स्वाध्यायसंस्कारः, [5]"स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायस्य कर्मत्वावगमात्। संस्कारो हि नाम कार्यान्तरयोग्यताकरणम्। संस्कार्यत्वं च स्वाध्यायस्य युक्तम्, धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयतत्साधनावबोधित्वात्, जपादिना स्वरूपेणापि तत्साधनत्वाच्च ॥

एवमध्ययनविधिर्मन्त्रवत् नियमवदक्षरराशिग्रहणमात्रे पर्यवस्यति। अध्ययनगृहीतस्य स्वाध्यायस्य स्वभावत एव प्रयोजनवदर्थावबोधित्वदर्शनात्, गृहीतात्स्वाध्यायादवगम्यमानान् प्रयोजनवतोऽर्थानापाततो दृष्ट्वा तत्स्वरूपप्रकारविशेषनिर्णयफलवेदवाक्यविचाररूपमीमांसाश्रवणे-

१. शारीरकमी ४. अ. ४. पा. २२. सू.
२. यजुरारण्यके २. प्र. १५. अनु.
३. शतपथब्राह्मणम्.
४. मनुस्मृ. ४. अ. ९५. श्लो.
५. यजुरारण्यके २. प्र. १५. अनु.

ऽधीतवेदः पुरुषस्स्वयमेव प्रवर्तते। तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वाऽध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु चामृतत्वरूपानन्तस्थिरफलापातप्रतीतेस्तन्निर्णयफलवेदान्तवाक्यविचाररूपशारीरकमीमांसायामधिकरोति। तथा च वेदान्तवाक्यानि केवलकर्मफलस्य क्षयित्वं ब्रह्मज्ञानस्य चाक्षयफलत्वं दर्शयन्ति— [१]"तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्र पुण्यचितो लोकः क्षीयते" [२]"अन्तवदेवास्य तद्भवति" [३]"न ह्यध्रुवैः प्राप्यते" [४]"प्लवा ह्येते अदृढा यज्ञरूपाः" [५]"परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठं। तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" [६]"ब्रह्मविदाप्नोति परम्" [७]"न पुनर्मृत्यवे तदेकं पश्यति" [८]"न पश्यो मृत्युं पश्यति" [९]"स स्वराड्भवति" [१०]"तमेवं विद्वानमृत इह भवति" [११]"पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति"—इत्यादीनि॥

ननु च—साङ्गवेदाध्ययनादेव कर्मणां स्वर्गादिफलत्वम्, स्वर्गादीनां च क्षयित्वं, ब्रह्मोपासनस्यामृतत्वफलत्वं च ज्ञायत एव। अनन्तरं मुमुक्षुर्ब्रह्मजिज्ञासायामेव प्रवर्तताम्; किमर्था धर्मविचारापेक्षा?। एवं त[र्हि] शारीरकमीमांसायामपि न प्रवर्तताम्, साङ्गाध्ययनादेव कृत्स्नस्य ज्ञा[त]त्वात्। सत्यम्; आपातप्रतीतिर्विद्यत एव, तथाऽपि न्यायानुगृहीत[...]

१. छान्दोग्ये. ८. प्रपाठके. १. खण्डे. ६. वा.
२. बृहदारण्यके.५.अध्याये.८.ब्राह्मणे. १०.वा.
३. कठे. २. वल्ल्यां. १०. वा.
४. मुण्डकोपनिषदि.१.मुण्डके. २. ख. ७. वा.
५. मुण्ड-उ. १. मुण्ड. २. ख. १२.१३.वा.
६. तैत्तिरीये. आनन्द. २.अ. १. अनु.१.वा.
७.
८. छा-उ. ७. प्र. २६. ख. २. वा.
९. छा-उ. ७. प्र. २५. ख. २. वा.
१०. पुरुषसूक्ते. २०. वा.
११. श्वेताश्वतरे. १. अ. ६. वा.

ाक्यस्यार्थनिश्चायकत्वादापातप्रतीतोऽप्यर्थस्संशयविपर्ययौ नातिवर्तते; ातस्तन्निर्णयाय वेदान्तवाक्यविचारः कर्तव्यः—इति चेत्; तथैव धर्म- िचारोऽपि कर्तव्य इति पश्यतु भवान् ॥

( लघुपूर्वपक्षः )

ननु च—ब्रह्मजिज्ञासा यदेव नियमेनापेक्षते, तदेव पूर्ववृत्तं वक्त- यम्। न धर्मविचारापेक्षा ब्रह्मजिज्ञासायाः, अधीतवेदान्तस्यानधिगत- र्मणोऽपि वेदान्तवाक्यार्थविचारोपपत्तेः। कर्माङ्गाश्रयाण्युद्गीथाद्युपास- ान्यत्रैव चिन्त्यन्ते; तदनधिगतकर्मणो न शक्यं कर्तुम्—इति चेत्; ानभिज्ञो भवान् शारीरकशास्त्रविज्ञानस्य। अस्मिन् शास्त्रे अनाद्यविद्या- तविविधभेददर्शननिमित्तजन्मजरामरणादिसांसारिकदुःखसागरनिम- स्य निखिलदुःखमूलमिथ्याज्ञाननिबर्हणायाऽत्मैकत्वविज्ञानं प्रतिपिपाद- ाषितम्। अस्य हि भेदावलम्बि कर्मज्ञानं क्वोपयुज्यते?। प्रत्युत विरुद्धमेव। द्गीथादिविचारस्तु कर्मशेषभूत एव ज्ञानरूपत्वाविशेषादिहैव क्रियते। तु न साक्षात्सङ्गतः। अतो यत्प्रधानं शास्त्रं, तदपेक्षितमेव पूर्ववृत्तं कमपि वक्तव्यम् ॥

बाढम्; तदपेक्षितं च कर्मविज्ञानमेव, कर्मसमुच्चितात् ज्ञानादपवर्ग- तेः। वक्ष्यति च—[1] " सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् " इति। अपेक्षिते कर्मण्यज्ञाते केन समुच्चयः केन नेति विभागो न शक्यते ज्ञातुम्। ातस्तदेव पूर्ववृत्तम् ॥

नैतद्युक्तं, सकलविशेषप्रत्यनीकचिन्मात्रब्रह्मविज्ञानादेवाविद्या- वृत्तेः; अविद्यानिवृत्तिरेव हि मोक्षः। वर्णाश्रमविशेषसाध्यसाधनेति- र्तव्यताद्यनन्तविकल्पास्पदं कर्म सकलभेददर्शननिवृत्तिरूपाज्ञाननि- त्तेः कथमिव साधनं भवेत्?। श्रुतयश्च कर्मणामनित्यफलत्वेन मोक्षविरो- त्वं, ज्ञानस्यैव मोक्षसाधनत्वं च दर्शयन्ति—[2] " अन्तवदेवास्य

१. शारीरकमी. ३. अ. ४. पा. २६. सू. | २. बृ-उ. ५. अ. ८. ब्रा. १०. वा.

तद्भवति" १"तद्यथेह कर्मचितो लोकः क्षीयते। एवमेवामुत्र पुण्यचितो लोकः क्षीयते" २"ब्रह्मविदाप्नोति परम्" ३"ब्रह्म वेद ब्रह्मैव भवति" ४"तमेव विदित्वाऽतिमृत्युमेति"-- इत्याद्याः ॥

यदपि चेदमुक्तं—यज्ञादिकर्मापेक्षा विद्येति। तद्वस्तुविरोधात् श्रुत्यक्षरपर्यालोचनया चान्तःकरणनैर्मल्यद्वारेण विविदिषोत्पत्तावुपयुज्यते; न फलोत्पत्तौ, "विविदिषन्ति" इति श्रवणात्। विविदिषायां जातायां ज्ञानोत्पत्तौ शमादीनामेवान्तरङ्गोपायतां श्रुतिरेवाऽह— ५"शान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वाऽऽत्मन्येवाऽत्मानं पश्येत्"—इति ॥

तदेवं जन्मान्तरशतानुष्ठितानभिसंहितफलविशेषकर्ममृदितकषायस्य विविदिषोत्पत्तौ सत्यां ६"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" ७"सत्यं ज्ञानमनन्तं ब्रह्म" ८"निष्कलं निष्क्रियं शान्तम्" ९"अयमात्मा ब्रह्म" १०"तत्त्वमसि" इत्यादिवाक्यजन्यज्ञानादविद्या निवर्तते। वाक्यार्थज्ञानोपयोगीनि च श्रवणमनननिदिध्यासनानि। श्रवणं नाम वेदान्तवाक्यानि आत्मैकत्वविद्याप्रतिपादकानीति तत्त्वदर्शिनअ र्यान्न्याययुक्तार्थग्रहणम्। एवमाचार्योपदिष्टस्यार्थस्य स्वात्मन्येवमेव यु मिति हेतुतः प्रतिष्ठापनं मननम्। एतद्विरोध्यनादिभेदवासनानिरसः यास्यैवार्थस्यानवरतभावना निदिध्यासनम्। श्रवणादिभिर्निरस्तसम भेदवासनस्य वाक्यार्थज्ञानमविद्यां निवर्तयतीत्येवंरूपस्य श्रवणस्य श्यापेक्षितमेव पूर्ववृत्तं ११वक्तव्यम्। तच्च नित्यानित्यवस्तुविवेकः, श

१. छा-उ. ८. प्र. १. ख. ६. वा.
२. तै-उ. आन. २. अ. १. अनु. १. वा.
३. मुण्ड-उ. ३. मुण्ड. २. ख. ९. वा.
४. श्वे-उ. ३. अ. ८. वा.
५. बृ-उ. ६. अ. ४. ब्रा. २३. वा.
६. छा-उ. ६. प्र. २. ख. १. वा.
७. तै-उ. आन. २. अ. १. अनु. १. व
८. श्वे-उ. ६. अ. १९. वा.
९. बृ-उ. ६. अ. ४. ब्रा. ५. वा.
१०. छा-उ. ६. प्र. ८. ख. ७. वा.
११. किमपि॥ इत्यधिकं क्वचित्पुस्तके दृश्य

दिसाधनसम्पत्, इहामुत्रफलभोगविरागः, मुमुक्षुत्वं चेत्येतत्साधनतुष्टयम्। अनेन विना जिज्ञासानुपपत्तेः, अर्थस्वभावादेवेदमेव पूर्वतमिति ज्ञायते॥

एतदुक्तं भवति — ब्रह्मस्वरूपाच्छादिकाविद्यामूलमपारमार्थिकं ददर्शनमेव बन्धमूलम्। बन्धश्चापारमार्थिकः। स च समूलोऽपारर्थिकत्वादेव ज्ञानेनैव निवर्त्यते। निवर्तकं च ज्ञानं तत्त्वमस्यादिवाक्यन्यम्। तस्यैतस्य वाक्यजन्यस्य ज्ञानस्य स्वरूपोत्पत्तौ कार्ये वा र्मणो नोपयोगः। विविदिषायामेव तु कर्मणामुपयोगः। स च पापलरजस्तमोनिबर्हणद्वारेण सत्त्वविवृद्ध्या भवतीतीममुपयोगमभिप्रेत्य ब्राह्मणा विविदिषन्ति" इत्युक्तमिति॥

अतः कर्मज्ञानस्यानुपयोगात् उक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति तव्यम्॥

( लघुसिद्धान्तः )

अत्रोच्यते—यदुक्तमविद्यानिवृत्तिरेव मोक्षः; सा च ब्रह्मविज्ञानाभवति॥ इति। तदभ्युपगम्यते। अविद्यानिवृत्तये वेदान्तवाक्यैर्विधितं ज्ञानं किंरूपमिति विवेचनीयम्—किं वाक्याद्वाक्यार्थज्ञानमात्रम्, उत ुतलमुपासनात्मकं ज्ञानम्?—इति। न तावद्वाक्यजन्यं ज्ञानं, तस्य विधान रेणापि वाक्यादेव सिद्धेः; तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्च। न णाच्यं—भेदवासनायामनिरस्तायां वाक्यमविद्यानिवर्तकं ज्ञानं न जनअ, जातेऽपि सर्वस्य सहसैव भेदज्ञानानिवृत्तिर्न दोषाय; चन्द्रैकज्ञातेऽपि द्विचन्द्रज्ञानानिवृत्तिवत्। अनिवृत्तमपि छिन्नमूलत्वेन न ाय भवति॥—इति, सत्यां सामग्र्यां ज्ञानानुत्पत्त्यनुपपत्तेः; सत्यामपि रीतवासनायामाप्तोपदेशलिङ्गादिभिर्बाधकज्ञानोत्पत्तिदर्शनात्। सप वाक्यार्थज्ञाने अनादिवासनया मात्रया भेदज्ञानमनुवर्तत इति ा न शक्यते वक्तुम्; भेदज्ञानसामग्र्या अपि वासनाया मिथ्यारू-

पत्वेन ज्ञानोत्पत्त्यैव निवृत्तत्वात् ज्ञानोत्पत्तावपि मिथ्यारूपायास्तस्या अनिवृत्तौ निवर्तकान्तराभावात् कदाचिदपि नास्या वासनाया निवृत्तिः। वासनाकार्यं भेदज्ञानं छिन्नमूलमथ चानुवर्तत इति बालिशभाषितम्। द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः परमार्थतिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेनाविनष्टत्वात् [1]मिथ्याज्ञानानुवृत्तिरविरुद्धा। प्रबलप्रमाणबाधितत्वेन भयादिकार्यं तु निवर्तते। अपि च भेदवासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति; भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात्, तद्विरोधिभावनायाश्चाल्पत्वादनया तन्निरसनानुपपत्तेः। अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितम्। तथा च श्रुतयः — [2]"विज्ञाय प्रज्ञां कुर्वीत" [3]"अनुविद्य विजानाति" [4]"ओमित्येवाऽऽत्मानं ध्यायथ" [5]"निचाय्य तं मृत्युमुखात्प्रमुच्यते" [6]"आत्मानमेव लोकमुपासीत" [7]"आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" [8]"सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः"—इत्येवमाद्याः॥

अत्र "निदिध्यासितव्यः" इत्यादिनैकार्थ्यात् "अनुविद्य विजानाति" "विज्ञाय प्रज्ञाङ्कुर्वीत" इत्येवमादिभिर्वाक्यार्थज्ञानस्य ध्यानोपकारकत्वात् "अनुविद्य" "विज्ञाय" इत्यनूद्य "प्रज्ञाङ्कुर्वीत" "विजानाति" इति ध्यानं विधीयते। "श्रोतव्यः" इति चानुवादः— स्वाध्यायस्यार्थपरत्वेनाधीतवेदः पुरुषः प्रयोजनवदर्थावबोधित्वदर्शनात्त-

१. मिथ्याज्ञानानिवृत्तिरिति. पा.
२. बृ-उ. ६. अ. ४. ब्रा. २१. वा.
३. छा-उ. ८. प्र. १२. ख. ६. वा.
४. मुण्ड-उ. २. मुण्ड. २. मु. ६. वा.
५. कठ-उ. १. अ. ३. वल्ली. १५. वा.
६. बृ-उ. ३. अ. ४. ब्रा. १५. वा.
७. बृ-उ. ६. अ. ५. ब्रा. ६. वा.
८. छा-उ. ८. प्र. ७. ख. १. वा.

न्निर्णयाय स्वयमेव श्रवणे प्रवर्तते—इति श्रवणस्य प्राप्तत्वात् । श्रवणप्रतिष्ठार्थत्वान्मननस्य "मन्तव्यः" इति चानुवादः। तस्माद्ध्यानमेव विधीयते। वक्ष्यति च—[1]"आवृत्तिरसकृदुपदेशात्" इति। तदिदमपवर्गोपायतया विधित्सितं वेदनमुपासनमित्यवगम्यते, विद्युपास्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनात्—[2]"मनो ब्रह्मेत्युपासीत"इत्यत्र—"भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद," [3]"न स वेद अकृत्स्नो ह्येषः—आत्मेत्येवोपासीत",[4]"यस्तद्वेद यत्स वेद स मयैतदुक्तः"इत्यत्र—[5]"अनुम एतां भगवो देवतां शाधि यां देवतामुपास्से"—इति ॥

ध्यानं च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपम्—[6]"ध्रुवा स्मृतिः। स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः"—इतिध्रुवायास्स्मृतेरपवर्गोपायत्वश्रवणात्। सा च स्मृतिर्दर्शनसमानाकारा—

[7]"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥"—

इत्यनेनैकार्थ्यात् । एवं च सति [8]"आत्मा वा अरे द्रष्टव्यः"—इत्यनेन निदिध्यासनस्य दर्शनसमानाकारता विधीयते। भवति च स्मृतेर्भावनाप्रकर्षाद्दर्शनरूपता । वाक्यकारेणैतत्सर्वं प्रपञ्चितं—[9]"वेदनमुपासनं स्यात्तद्विषये श्रवणात्"—इति । सर्वासूपनिषत्सु मोक्षसाधनतया विहितं वेदनमुपासनमित्युक्तम्। [10]"सकृत्प्रत्ययं कुर्याच्छब्दार्थस्य कृतत्वात्प्रयाजादिवत्" इति पूर्वपक्षं कृत्वा—[11]"सिद्धं तूपासनशब्दात्" इति वेदनमसकृदावृत्तं मोक्षसाधनमिति निर्णीतम्। [12]"उपासनं स्याद्ध्रुवानुस्मृति-

---

१. शारीर. ४. अ. १. पा. १. सू.
२. छा-उ. ३. प्र. १८. ख. १. वा.
३. बृ-उ. ३. अ. ४. ब्रा. ७. वा.
४. छा-उ. ४. प्र. १. ख. ४. वा.
५. छा-उ. ४. प्र. २. ख. २. वा.
६. छा-उ. ७. प्र. २६. ख २. वा.
७. मुण्ड-उ. २. मु. २. ख. ८. वा.
८. बृ-उ. ६. अ. ५. ब्रा. ६. वा.
९. १०. ११. १२. बोधायनवृत्तिः.

र्दर्शनान्निर्वचनाच्च" इति तस्यैव वेदनस्योपासनरूपस्यासकृदावृत्तस्य ध्रुवानुस्मृतित्वमुपवर्णितम् ॥

सेयं स्मृतिर्दर्शनरूपा प्रतिपादिता। दर्शनरूपता च प्रत्यक्षतापत्तिः। एवं प्रत्यक्षतापन्नामपवर्गसाधनभूतां स्मृतिं विशिनष्टि— [1]"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्"—इति। अनेन केवलश्रवणमनननिदिध्यासनानामात्मप्राप्त्यनुपायत्वमुक्त्वा यमेवैष आत्मा वृणुते तेनैव लभ्य इत्युक्तम्। प्रियतम एव हि वरणीयो भवति। यस्यायं निरतिशयप्रियस्स एवास्य प्रियतमो भवति। यथाऽयं प्रियतम आत्मानं प्राप्नोति, तथा स्वयमेव भगवान् प्रयतत इति भगवतैवोक्तं—

[2]"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥"—

इति,

[3]"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः।"—

इति च॥

अतस्साक्षात्काररूपा स्मृतिस्स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य, स एव परेणाऽत्मना वरणीयो भवतीति तेनैव लभ्यते पर आत्मेत्युक्तं भवति। एवंरूपा ध्रुवानुस्मृतिरेव भक्तिशब्देनाभिधीयते, उपासनपर्यायत्वाद्भक्तिशब्दस्य। अतएव श्रुतिस्मृतिभिरेवमभिधीयते— [4]"तमेव विदित्वाऽतिमृत्युमेति" [5]"तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते",

१. मुण्ड-उ. ३. मु. २. ख. ३. वा.
२. गीता. १०. अ. १०. श्लो.
३. गी. ७. अ. १७. श्लो.
४. श्वे-उ. ३. अ. ८. वा.
५. पुरुषसूक्तम्. १७. वा.

[१]"नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन! ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ! ॥"
[२]"पुरुषस्स परः पार्थ! भक्त्या लभ्यस्त्वनन्यया ॥" इति ॥

एवंरूपाया ध्रुवानुस्मृतेस्साधनानि यज्ञादीनि कर्माणीति—[३]"यज्ञादिश्रुतेरश्ववत्"— इत्यभिधास्यते। यद्यपि—विविदिषन्तीति यज्ञादयो विविदिषोत्पत्तौ विनियुज्यन्ते, तथाऽपि तस्यैव वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्याऽप्रयाणादनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वात्तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानि । वक्ष्यति च—[४]"आप्रयाणात्तत्रापि हि दृष्टम्" [५]"अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्"[६]"सहकारित्वेन च"—इत्यादिषु । वाक्यकारश्च ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह— [७]"तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यस्संभवान्निर्वचनाच्च"—इति । विवेकादीनां स्वरूपं चाऽह—[८]"जात्याश्रयनिमित्तादुष्टादन्नात्कायशुद्धिर्विवेकः"—इति । अत्र निर्वचनम्—[९]"आहारशुद्धौ सत्त्वशुद्धिस्सत्त्वशुद्धौ ध्रुवा स्मृतिः"—इति। [१०]"विमोकः कामानभिष्वङ्गः"इति।[११]"शान्त उपासीत"इति निर्वचनम् । [१२]" आरम्भणसंशीलनं पुनःपुनरभ्यासः" इति । निर्वचनं च

१. गीता. ११. अ. ५३, ५४. श्लो.
२. गी. ८. अ. २२. श्लो.
३. शारीरकमी. ३. अ. ४.पा. २६. सू.
४. शा. ४. अ. १. पा १२. सू.
५. शा. ४. अ. १. पा. १६. सू.
६. शा. ३. अ. ४. पा. ३३. सू.
७. बोधायनवृत्तिः.
८. वृत्तिः.
९. छा-उ. ७. प्र. २६. ख. २. वा.
१०. वृत्तिः.
११. छा-उ. ३. प्र. १४. ख. १. वा.
१२. वृत्तिः.

स्मार्तमुदाहृतं भाष्यकारेण—[१]“सदा तद्भावभावितः”—इति। [२]“पञ्चमहायज्ञाद्यनुष्ठानं शक्तितः क्रिया” इति। निर्वचनं—[३]“क्रियावानेष ब्रह्मविदां वरिष्ठः”[४]“तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन”—इति च। [५]“सत्यार्जवदयादानाहिंसानभिध्याः कल्याणानि” इति। निर्वचनं—[६]“सत्येन लभ्यः” [७]“तेषामेवैषः—विरजो ब्रह्मलोकः”—इत्यादि। [८]“देशकालवैगुण्याच्छोकवस्त्वाद्यनुस्मृतेश्च तज्जं दैन्यमभास्वरत्वं मनसोऽवसादः” इति। तद्विपर्ययोऽनवसादः। निर्वचनं—[९]“नायमात्मा बलहीनेन लभ्यः”—इति। [१०]“तद्विपर्ययजा तुष्टिरुद्धर्षः”इति। तद्विपर्ययोऽनुद्धर्षः। अतिसन्तोषश्च विरोधीत्यर्थः। निर्वचनमपि—[११]“शान्तो दान्तः”—इति। एवंनियमयुक्तस्याऽश्रमविहितकर्मानुष्ठानेनैव विद्यानिष्पत्तिरित्युक्तं भवति॥

तथा च श्रुत्यन्तरम्—

*[१२]“विद्यां चाविद्यां च यस्तद्वेदोभयँ सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥”—इति॥

अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म। अविद्यया-कर्मणा। मृत्युं-ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म। तीर्त्वा-अपोह्य। विद्यया-ज्ञानेन। अमृतं-ब्रह्म। अश्नुते-प्राप्नोतीत्यर्थः। मृत्युतरणोपायतया प्रतीता अविद्या विद्येतरद्विहितं कर्मैव, यथोक्तम्—

[१३]“इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः।

---

१. गीता. ८. अ. ६. श्लो.
२. वृत्तिः.
३. मु-उ. ३. मु. १. ख. ४. वा.
४. बृ-उ. ६. अ. ४. ब्रा. २२. वा.
५. वृत्तिः.
६. मु-उ. ३. मु. १. ख. ५. वा.
७. प्रश्न-उ. १. प्रश्ने. १५. १६. वा.
८. वृत्तिः.
९. मु-उ. ३. मु. २. ख. ४. वा.
१०. वृत्तिः.
११. बृ-उ. ६. अ. ४. ब्रा. २३. वा.
१२. ईशा-उ ११. वा.

*विद्यां-ब्रह्मोपासनरूपाम् अविद्यां-तदङ्गभूतकर्मात्मिकां च एतदुभयं सह वेद अङ्गाङ्गिभावेन सहानुष्ठेयं वेदेत्यर्थः.

१३. विष्णुपुराणे. ६. अंशे. ६. अध्याये. १२ [illegible].

ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥"—इति ॥

ज्ञानविरोधि च कर्म पुण्यपापरूपम्। ब्रह्मज्ञानोत्पत्तिविरोधित्वेनानिष्टफलतयोभयोरपि पापशब्दाभिधेयत्वम्। अस्य च ज्ञानविरोधित्वं ज्ञानोत्पत्तिहेतुभूतशुद्धसत्त्वविरोधिरजस्तमोविवृद्धिद्वारेण। पापस्य च ज्ञानोदयविरोधित्वम्—[१]"एष एवासाधु कर्म कारयति। तं यमधो निनीषति—"इति श्रुत्याऽवगम्यते। रजस्तमसोर्यथार्थज्ञानावरणत्वं, सत्त्वस्य च यथार्थज्ञानहेतुत्वं भगवतैव प्रतिपादितं—[२]"सत्त्वात्सञ्जायते ज्ञानम्"—इत्यादिना। अतश्च ज्ञानोत्पत्तये पापं कर्म निरसनीयम्। तन्निरसनं च अनभिसंहितफलेनानुष्ठितेन धर्मेण। तथा च श्रुतिः—[३]"धर्मेण पापमपनुदति"—इति। तदेवं ब्रह्मप्राप्तिसाधनं ज्ञानं सर्वाश्रमकर्मापेक्षम्। अतोऽपेक्षितकर्मस्वरूपज्ञानं, केवलकर्मणामल्पास्थिरफलत्वज्ञानं च कर्ममीमांसावसेयमिति, सैवापेक्षिता ब्रह्मजिज्ञासायाः पूर्ववृत्ता वक्तव्या ॥

अपि च नित्यानित्यवस्तुविवेकादयश्च, मीमांसाश्रवणमन्तरेण न संपत्स्यन्ते, फलकरणेतिकर्तव्यताधिकारिविशेषनिश्चयादृते, कर्मस्वरूपतत्फलतत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोधत्वात्। एषां साधनत्वं च विनियोगावसेयम्। विनियोगश्च श्रुतिलिङ्गादिभ्यः। स च तार्तीयः। उद्गीथाद्युपासनानि कर्मसमृद्ध्यर्थान्यपि ब्रह्मदृष्टिरूपाणि, ब्रह्मज्ञानापेक्षाणीति इहैव चिन्तनीयानि। तान्यपि कर्माण्यनभिसंहितफलानि ब्रह्मविद्योत्पादकानीति तत्साद्गुण्यापादनान्येतानि सुतरामिहैव सङ्गतानि। तेषां च कर्मस्वरूपाधिगमापेक्षा सर्वसम्मता ॥

( महापूर्वपक्षः )

यदप्याहुः—अशेषविशेषप्रत्यनीकचिन्मात्रं ब्रह्मैव परमार्थः, तदतिरेकिनानाविधज्ञातृज्ञेयतत्कृतज्ञानभेदादि सर्वं तस्मिन्नेव परिकल्पितं

१. कौषीतक्यां. ३. अध्याये. ९. वा.
२. गीता. १४. अ. १७. श्लो.
३. तैत्ति. ६. प्रश्न. नारायणे. ५०. अनु.

मिथ्याभूतं—[१]"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" [२]"अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" [३]"सत्यं ज्ञानमनन्तं ब्रह्म" [४]"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" [५]"यस्यामतं तस्य मतं मतं यस्य न वेद सः। अविज्ञातं विजानतां विज्ञातमविजानताम्" [६]"न दृष्टेर्द्रष्टारं पश्येः—न मतेर्मन्तारं मन्वीथाः" [७]"आनन्दो ब्रह्म" [८]"इदं सर्वं यदयमात्मा" [९]"नेह नानाऽस्ति किंचन। मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" [१०]"यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्तत्केन कं विजानीयात्" [११]"वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" [१२]"यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" [१३]"न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि" [१४]"मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्",

[१५]"प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम्।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्॥"
[१६]"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः।
तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥"
[१७]"परमार्थस्त्वमेवैको नान्योस्ति जगतः पते!॥"

१. छा-उ. ६. प्र. २. ख. १. वा.
२. मु-उ. १. मु. १. ख. ६. वा.
३. तै-उ. आन. १. अनु. १. वा.
४. श्वे-उ. ६. अ. १९. वा.
५. के-उ. २. ख. ३. वा.
६. बृ-उ. ५. अ. ४. ब्रा. २. वा.
७. तै-उ. भृगु. ६. अनु.
८. बृ-उ. ४. अ. ४. ब्रा. ६. वा.
९. बृ-उ. ६. अ. ४. ब्रा. १९. वा.
१०. बृ-उ. ४. अ. ४. ब्रा. १४. वा.
११. छा. ६. प्र. १. ख. ४. वा.
१२. तै-उ. आन. ७. अनु. २. वा.
१३. शारी. ३. अ. २. पा. ११. सू.
१४. शा. ३. अ. २. पा. ३. सू.
१५. वि. पु. ६. अंश. ७. अ. ५३. श्लो.
१६. वि. पु. १. २. ६.
१७. वि. पु. १. ४. ३८.

१" यदेतद्दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव ।
भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥
ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः ।
अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे ॥
ये तु ज्ञानविदश्शुद्धचेतसस्तेऽखिलं जगत् ।
ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर! ॥ "
२" तस्याऽत्मपरदेहेषु सतोऽप्येकमयं हि यत् ।
विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः ॥"
३" यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम! ।
तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ॥"
४" वेणुरन्ध्रविभेदेन भेदष्षड्जादि संज्ञितः ।
अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः ॥"
५" सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ।
इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ॥"
६" विभेदजनके ज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥"
७" अहमात्मा गुडाकेश! सर्वभूताशयस्थितः ॥"
८" क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ! ॥"
९" न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥"

१. वि. पु. १. ४. ३९. ४०. ४१.
२. वि. पु. २. १४. ३१.
३. वि. पु. २. १३. ९०.
४. वि. पु. २. १४. ३२.
५. वि. पु. २. १६. २३.
६. वि. पु. ६. ७. ९६.
७. गी. १०. २०. श्लो.
८. गी. १३. ३.
९. गी. १०. ३९.

इत्यादिभिर्वस्तुस्वरूपोपदेशपरैश्शास्त्रैः— निर्विशेषचिन्मात्रं ब्रह्मैव सत्यमन्यत्सर्वं मिथ्या—इत्यभिधानात् ॥

मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वम्, यथा रज्ज्वाद्यधिष्ठानसर्पादेः। दोषवशाद्धि तत्र तत्कल्पनम्। एवं चिन्मात्रवपुषि परे ब्रह्मणि दोषपरिकल्पितमिदं देवतिर्यङ्मनुष्यस्थावरादिभेदं सर्वं जगद्यथावस्थितब्रह्मस्वरूपावबोधबाध्यं मिथ्यारूपम् । दोषश्च स्वरूपतिरोधानविविधविचित्रविक्षेपकरी सदसदनिर्वचनीयाऽनाद्यविद्या । [१]"अनृतेन हि प्रत्यूढाः" [२]"तेषां सत्यानां सतामनृतमपिधानम्" [३]"नासदासीन्नो सदासीत्तदानीं तम आसीत्तमसा गूढमग्रे प्रकेतम्" [४]"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" [५]"इन्द्रो मायाभिः पुरुरूप ईयते" [६]"मम माया दुरत्यया" [७]"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते" —इत्यादिभिः निर्विशेषचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वरूपं स्वगतनानात्वं पश्यतीत्यवगम्यते। यथोक्तम्—

[८]"ज्ञानस्वरूपो भगवान्यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः ।
ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि ॥
यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम् ।
तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः ॥"

[९]"तस्मान्न विज्ञानमृतेऽस्ति किञ्चित्क्वचित्कदाचिद्द्विज ! वस्तुजातम् ।
विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥
ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
एकं सदैकं परमः परेशस्स वासुदेवो न यतोऽन्यदस्ति ॥

१. छा-उ. ८. प्र. ३. ख. २. वा.
२. छा-उ. ८. प्र. ३. ख. १. वा.
३. यजु. २. अष्ट. ८. प्र.९. अनु.
४. श्वे-उ. ४. अ. १०. वा.
५. बृ-उ. ४. अ. ५. ब्रा. १९.
६. गी. ७. १४.
७. माण्डू-उ. २. ख. २१. वा.
८. वि. पु. २. १२. ३९. ४०
९. वि.पु.२. १२. ४३, ४४.

[१] सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत् ।
एतत्तु यत्संव्यवहारभूतं तत्रापि चोक्तं भुवनाश्रितं ते॥"—इति॥

अस्याश्चाविद्याया निर्विशेषचिन्मात्रब्रह्मात्मैकत्वविज्ञानेन निवृत्तिं वदन्ति—*"न पुनर्मृत्यवे तदेकं पश्यति" *"न पश्यो मृत्युं पश्यति" *"यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति" [२]"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" [३]"ब्रह्म वेद ब्रह्मैव भवति" [४]"तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः"—इत्याद्याश्श्रुतयः। अत्र मृत्युशब्देनाविद्याऽभिधीयते। यथा सनत्सुजातवचनं—[५]"प्रमादं वै मृत्युमहं ब्रवीमि सदा प्रमादममृतत्वं ब्रवीमि"—इति। [६]"सत्यं ज्ञानमनन्तं ब्रह्म" [७]"विज्ञानमानन्दं ब्रह्म" इत्यादिशोधकवाक्यावसेयनिर्विशेषस्वरूपब्रह्मात्मैकत्वविज्ञानं च—[८]"अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद" [९]"अकृत्स्नो ह्येषः" [१०]"आत्मेत्येवोपासीत" [११]"तत्त्वमसि" [१२]"त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते तद्योऽहं सोऽसौ योऽसौ सोऽहमस्मि" इत्यादिवाक्यसिद्धम्। वक्ष्यति चैतदेव—[१३]"आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति। तथा च वाक्यकारः— [१४]"आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः" इति॥ अनेन च ब्रह्मात्मैकत्वविज्ञानेन मिथ्यारूपस्य सकारणस्य बन्धस्य निवृत्तिर्युक्ता॥

१. वि-पु. २. १२. ४५. श्लो.
२. मु-२. मु. २. ख. ८. वा.
३. मु-३. मु. २. ख. ९. वा.
४. श्वे-३. अ. ८. वा.
५. भारत. उद्योगपर्व. ४१. अ. ४. श्लो.
६. तै-आनं. १. अनु. १. वा.
७. बृ-५. अ ९. ब्रा. २८. वा.
८. बृ-३. अ. ४. ब्रा. १०. वा.
९. बृ-३. अ. ४. ब्रा. ७. वा.
१०. बृ-३. अ. ४. ब्रा. ७. वा.
११. छा. ६. प्र. ८. ख. ७. वा.
१२.
१३. शारी. ४. अ. १. पा. ३. सू.
१४. वाक्यम्.

ननु च—सकलभेदनिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रजन्यविज्ञानेन क्रियते?। कथं वा 'रज्जुरेषा न सर्पः' इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते?। तत्र द्वयोः प्रत्यक्षयोर्विरोधः; इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य च—इति चेत्; तुल्ययोर्विरोधे वा कथं बाध्यबाधकभावः?। पूर्वोत्तरयोर्दुष्टकारणजन्यत्वतदभावाभ्याम्—इति चेत्; शास्त्रप्रत्यक्षयोरपि समानमेतत् ॥

एतदुक्तं भवति—बाध्यबाधकभावे तुल्यत्वसापेक्षत्वनिरपेक्षत्वादि न कारणम्, ज्वालाभेदानुमानेन प्रत्यक्षोपमर्दायोगात्। तत्र हि ज्वालैक्यं प्रत्यक्षेणावगम्यते। एवं च—सति द्वयोः प्रमाणयोर्विरोधे यत्संभाव्यमानान्यथासिद्धि, तद्बाध्यम्; अनन्यथासिद्धमनवकाशमितरद्बाधकम्—इति सर्वत्र बाध्यबाधकभावनिर्णयः—इति ॥

तस्मादनादिनिधनाविच्छिन्नसम्प्रदायासम्भाव्यमानदोषगन्धानवकाशशास्त्रजन्यनिर्विशेषनित्यशुद्धमुक्तबुद्धस्वप्रकाशचिन्मात्रब्रह्मात्मभावावबोधेन सम्भाव्यमानदोषसावकाशप्रत्यक्षादिसिद्धविविधविकल्परूपबन्धनिवृत्तिर्युक्तैव। सम्भाव्यते च विविधविकल्पभेदप्रपञ्चग्राहिप्रत्यक्षस्यानादिभेदवासनादिरूपाविद्याख्यो दोषः। ननु—अनादिनिधनाविच्छिन्नसम्प्रदायतया निर्दोषस्यापि शास्त्रस्य—[1]"ज्योतिष्टोमेन स्वर्गकामो यजेत"—इत्येवमादेर्भेदावलम्बिनो बाध्यत्वं प्रसज्येत। सत्यम्; पूर्वापरापच्छेदे पूर्वशास्त्रवन्मोक्षशास्त्रस्य निरवकाशत्वात्तेन बाध्यत एव। वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनपराणां शास्त्राणामयमेव न्यायः, निर्गुणत्वात्परस्य ब्रह्मणः। ननु च—[2]"यस्सर्वज्ञस्सर्ववित्" [3]"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" [4]"सत्यकामः

१.
२. मु. २. मु. २. ख. ७. वा.
३. श्वे. ६. अ. ८. वा.
४. छा. ८. प्र. १. ख. ५. वा.

श्रुतेर्नित्यत्वाच्च ताभ्यः” इत्यात्मन उत्पत्त्यभावश्चोक्तो नित्यत्वं च ; स्वाभ्युपगमविरोधश्च।आ मोक्षाज्जीवभेदस्यानादित्वं सर्वैरेव हि वेदान्तिभिरभ्युपगम्यते। अतश्श्रुतिविरोधात्सूत्रविरोधात्स्वाभ्युपगमविरोधाच्च सृष्टेः प्रागेकत्वावधारणं नामरूपविभागाभावाभिप्रायम्। नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशक्तिभेदसहं चेति सर्वैरभ्युपगम्यते । इयांस्तु विशेषः—अविद्यापरिकल्पनेऽप्युपाधिपरिकल्पनेऽपि ब्रह्मव्यतिरिक्तस्याविद्यासम्बन्धिनश्चोपाधिसम्बन्धिनश्चेतनस्याभावादविद्योपाधिसम्बन्धौ,तत्कृताश्च दोषा ब्रह्मण एव भवेयुः—इति॥

सन्मात्रब्रह्मवादेऽपि प्राक्सृष्टेस्सन्मात्रं ब्रह्मैकमेव सृष्ट्युत्तरकालं भोक्तृभोग्यनियन्तृरूपेण त्रिधा भूतश्चेत्, घटशरावमणिकवज्जीवेश्वरयोरुत्पत्तिमत्त्वमनित्यत्वञ्च स्यात्। अथैकत्वापत्तिवेलायामपि भोक्तृभोग्यनियन्तृशक्तित्रयमवस्थितमितिचेत्, किमिदं शक्तित्रयशब्दवाच्यमिति विवेचनीयम्। यदि सन्मात्रस्यैकस्यैव भोक्तृभोग्यनियन्तृरूपेण परिणामसामर्थ्यं शक्तित्रयशब्दवाच्यम्; एवं तर्हि मृत्पिण्डस्य घटशरावादिपरिणामसमर्थस्य तदुत्पादकत्वमिव ब्रह्मण ईश्वरादीनामुत्पादकत्वमिति तेषामनित्यत्वमेव।अथेश्वरादीनां सूक्ष्मरूपेणावस्थितिरेव शक्तिरित्युच्येत;तर्हि तदतिरिक्तस्य सन्मात्रस्य ब्रह्मणः, प्रमाणा भावात्तदभ्युपगमे च तदुत्पाद्यतयेश्वरादीनामनित्यत्वप्रसङ्गाच्च त्रयाणां नामरूपविभागानर्हसूक्ष्मदशापत्तिरेव प्राक्सृष्टेरेकत्वावधारणावसेयेति वक्तव्यम्। [1]न तदा तेषां ब्रह्मात्मकत्वादेकत्वावधारणं विरुध्येत। अतस्सर्वावस्थावस्थितस्य चिदचिद्वस्तुनः ब्रह्मशरीरत्वश्रुतेस्सर्वदा सर्वशब्दैर्ब्रह्मैव तत्तच्छरीरकतया तत्तद्विशिष्टमेवाभि[2]धीयत इति स्थूलचिदचिद्वस्तुविशिष्टं ब्रह्मैव कार्यभूतं जगत्, नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुविशिष्टं ब्रह्म कारणमिति तदेव मृत्पिण्डस्थानीयं [3]“सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्”इत्युच्यते। तदेव विभक्तनामरूपचिदचिद्वस्तुविशिष्टं ब्रह्म कार्यमिति सर्वं समञ्जसम्। श्रुतिन्यायविरोधस्तु तेषां भाष्ये प्रपञ्चितइति नेह प्रतन्यते॥

भाष्योदितोऽधिकरणार्थस्ससूत्रविवरणस्सुखग्रहणाय सङ्क्षेपेणोपन्यस्यते।तत्र प्रथमे पादे प्रधानपुरुषावेव जगत्कारणतया वेदान्ताः प्रतिपादयन्तीत्याशङ्क्य सर्वज्ञं सत्यसङ्कल्पं निरवद्यं समस्तकल्याणगुणाकरं ब्रह्मैव जगत्कारणतया प्रतिपादयन्तीत्युक्तम्। द्वितीयतृतीय[4]चतुर्थपादेषु कानिचिद्वेदान्तवा-

१. तदा तेषां बहुत्वादेकत्वाव. पा.
२. धेयमिति. पा.
३. छा. ६-२-१.
४. चतुर्थेषु पादेषु. पा.

क्यानि प्रधानादिप्रतिपादनपराणीति तन्मुखेन सर्वाक्षेपमाशङ्क्य तान्यपि ब्रह्मपराणीत्युक्तम्। तत्रास्पष्टजीवादिलिङ्कानि वाक्यानि द्वितीये निरूपितानि, स्पष्टलिङ्कानि तृतीये।चतुर्थे तु प्रधानादिप्रतिपादनच्छायानुसारीणीति विशेषः। अतः प्रथमेऽध्याये सर्वं वेदान्तवाक्यजातं सार्वज्ञ्यसत्यसङ्कल्पत्वादियुक्तं ब्रह्मैव जगत्कारणतया प्रतिपादयतीति स्थापितम्।द्वितीयेऽध्याये तस्यार्थस्य दुर्धर्षणत्वप्रतिपादनेन द्रढिमोच्यते। तत्र प्रथमे पादे साङ्ख्यादिस्मृतिविरोधाद्न्याय-विरोधाच्च १प्रसक्तो दोषः परिहृतः। द्वितीये तु साङ्ख्यादिवेदबाह्यपक्षप्रतिक्षेप-२मुखेन तस्यैवादरणीयता स्थिरीकृता।तृतीयचतुर्थयोर्वेदान्तवाक्यानामन्योन्यविप्रतिषेधादिदोषगन्धाभावख्यापनाय वियदादीनां ब्रह्मकार्यताप्रकारो विशोध्यते। तत्र तृतीये ३पादे च चिदचित्प्रपञ्चस्य ब्रह्मकार्यत्वे सत्यप्यचिदंशास्य स्वरूपान्यथाभावेन कार्यत्वम् ; चिदंशस्य स्वभावान्यथाभावेन ज्ञानसङ्कोचविकासरूपेण कार्यतोदिता। चतुर्थे तु जीवोपकरणानामिन्द्रियादीनामुत्पत्तिप्रकार इति प्रथमेनाध्यायद्वयेन मुमुक्षुभिरुपास्यं निरस्तनिखिलदोषगन्धम् अनवधिकातिशयासङ्ख्येयकल्याणगुणगणं निखिलजगदेककारणं ब्रह्मेति प्रतिपादितम् । उत्तरेण द्वयेन ब्रह्मोपासनप्रकारस्तत्फलभूतमोक्षस्वरूपञ्च चिन्त्यते । तत्र तृतीयस्य प्रथमे पादे ब्रह्मोपासिसिषोत्पत्तये जीवस्य संसरतो दोषाः कीर्तिताः।द्वितीये च उपासिसिषोत्पत्तय एव ब्रह्मणो निरस्तनिखिलदोषताकल्याणगुणाकरतारूपोभयलिङ्गता प्रतिपाद्यते । तृतीये तु ब्रह्मोपासनैकत्व४नानात्वविचारपूर्वकमुपासनेषूपसंहार्यानुपसंहार्यगुणविशेषाः प्रपञ्चिताः । चतुर्थे तूपासनस्य वर्णाश्रमधर्मेतिकर्तव्यताकत्वमुक्तम् । चतुर्थेऽध्याये ब्रह्मोपासनफलचिन्ता क्रियते । तत्र प्रथमे पादे ब्रह्मोपासनफलं वक्तुम् उपासनस्वरूपपूर्वकोपासनानुष्ठानप्रकारो विद्यामाहात्म्यञ्चोच्यते । द्वितीये तु ब्रह्मोपासीनानां ब्रह्मप्राप्तिगत्युपक्रमप्रकारश्चिन्तितः । तृतीये तु अर्चिरादिगतिस्वरूपम् , अर्चिरादिनैव ब्रह्मप्राप्तिरिति च प्रतिपाद्यते।चतुर्थे तु मुक्तस्य ब्रह्मानुभवप्रकारश्चिन्त्यते। अतो मुमुक्षुभिः ज्ञातव्यं निरस्तनिखिलदोषगन्धम् अनवधिकातिशयासङ्ख्येयकल्याणगुणगणाकरं निखिलजगदेककारणं परं ब्रह्म, तज्ज्ञानञ्च मोक्षसाधनमसकृदावृत्तस्मृतिसन्तानरूपमुपासनात्मकम् । उपासनफलं च अर्चिरादिना परं ब्रह्मोपसम्पद्य स्वस्वरूप-

१. प्रसक्तदोषः. पा.
२. मुखेनास्यैवा. पा.
३.
४. नानात्वपूर्वक. पा.

भूतज्ञानादिगुणाविर्भावपूर्वकानन्तमहाविभूत्यनवधिकातिशयानन्दब्रह्मानुभवोऽपुनरावृत्तिरूप इति शारीरकशास्त्रेणोक्तं भवति ॥

# अथातो ब्रह्मजिज्ञासा ॥ १ ॥

ब्रह्ममीमांसा विषयः, सा किमारम्भणीया? उतानारम्भणीया? इति संशयः। तदर्थं परीक्ष्यते—वेदान्ताः किं ब्रह्मणि प्रमाणम्? उत न? इति। तदर्थं परिनिष्पन्नेऽर्थे शब्दस्य बोधनसामर्थ्यावधारणं सम्भवति नेति। न सम्भवतीति पूर्वः पक्षः। सम्भवतीति राद्धान्तः।यदा न सम्भवति, तदा परिनिष्पन्नेऽर्थे शब्दस्य बोधनसामर्थ्याभावात्सिद्धरूपे ब्रह्मणि न वेदान्ताः प्रमाणमिति तद्विचाराकारा ब्रह्ममीमांसा नारम्भणीया। यदा सम्भवति, तदा सिद्धेऽप्यर्थे शब्दस्य बोध[1]नसामर्थ्यसम्भवाद्वेदान्ताः ब्रह्मणि प्रमाणमिति सा चारम्भणीया स्यात्। अत्र पूर्वपक्षवादी मन्यते—वृद्धव्यवहारादन्यत्र व्युत्पत्त्यसम्भवात्, व्यवहारस्य च कार्यबुद्धिपूर्वकत्वेन कार्य एवार्थे शब्दशक्त्यवधारणात्, परिनिष्पन्नेऽर्थे ब्रह्मणि न वेदान्ताः प्रमाणमिति तद्विचाररूपा ब्रह्ममीमांसा नारम्भणीयेति। [2]सिद्धान्तस्तु—बालानां मातापितृप्रभृतिभिरम्बाताततमातुलशशिपशुपक्षिमृगादिषु अङ्गुल्या निर्दिश्य तत्तदभिधायिनश्शब्दान्प्रयुञ्जानैः क्रमेण बहुशश्शिक्षितानां तत्तच्छब्दश्रवणसमनन्तरं स्वात्मनामेव तदर्थबुद्ध्युत्पत्तिदर्शनात्, शब्दार्थयोस्सम्बन्धान्तरादर्शनात्, सङ्केतयितृपुरुषाज्ञानाच्च, बोध्यबोधकभाव एव शब्दार्थयोस्सम्बन्ध इति निश्चिन्वानानां परिनिष्पन्नेऽर्थे शब्दस्य बोधकत्वावधारणं सम्भवतीति ब्रह्मणि[3]वेदान्तवाक्यानां प्रामाण्यात्तदर्थविचाराकारा ब्रह्ममीमांसा आरम्भणीया—इति ॥

सूत्रार्थस्तु—'अथ' इत्यानन्तर्ये। 'अतः' इतिच वृत्तस्य हेतुभावे। ब्रह्मणो जिज्ञासा ब्रह्मजिज्ञासा, ज्ञातुमिच्छा जिज्ञासा। इच्छायाः इष्यमाणप्रधानत्वादिष्यमाणं ज्ञानमिहाभिप्रेतम्। पूर्ववृत्तादल्पास्थिरफलकेवलकर्माधिगमादनन्तरं तत एव हेतोरनन्तास्थिरफलब्रह्माधिगमः कर्तव्यइति ॥

इति श्रीवेदान्तदीपे जिज्ञासाधिकरणम् ॥ १ ॥

---

१. जननसा. पा.  २. राद्धान्त. पा. | ३. वेदान्तानां. पा.

'किं पुनस्तद्ब्रह्म, यज्जिज्ञास्यमुच्यते' इत्यत्राह—

## जन्माद्यस्य यतः । १ । १ । २ ॥

जन्मादीति-सृष्टिस्थितिप्रलयम्। तद्गुण[1]संविज्ञानो बहुव्रीहिः।अस्य-अचिन्त्यविविधविचित्ररचनस्य नियतदेशकालफलभोगब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रस्य जगतः । यतः-यस्मात्सर्वेश्वरान्निखिलहेयप्रत्यनीकस्वरूपात्सत्यसंकल्पात् ज्ञानानन्दाद्यनन्तकल्याणगुणात् सर्वज्ञात् सर्वशक्तेः परमकारुणिकात् परस्मात्पुंसः सृष्टिस्थितिप्रलयाः प्रवर्तन्ते ; तत् ब्रह्मेति सूत्रार्थः ॥

( पूर्वःपक्षः )

[2]"भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्म" इत्यारभ्य [3]"यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व। तद्ब्रह्म"इति श्रूयते । तत्र संशयः—किमस्माद्वाक्यात् ब्रह्म लक्षणतः प्रतिपत्तुं शक्यते, न वा—इति। किं प्राप्तम् ? न शक्यमिति । न तावज्जन्मादयो विशेषणत्वेन ब्रह्म लक्षयन्ति , अनेकविशेषणव्यावृत्तत्वेन ब्रह्मणोऽनेकत्वप्रसक्तेः । विशेषणत्वं हि व्यावर्तकत्वम् ॥

ननु 'देवदत्तश्श्यामो युवा लोहिताक्षस्समपरिमाणः' इत्यत्र विशेषणबहुत्वेऽप्येक एव देवदत्तः प्रतीयते।एवमत्राप्येकमेव ब्रह्म भवति। नैवम्—तत्र प्रमाणान्तरेणैक्यप्रतीतेरेकस्मिन्नेव विशेषणानामुपसंहारः । अन्यथा तत्रापि व्यावर्तकत्वेनानेकत्वमपरिहार्यम् । अत्र त्वनेनैव विशेषणेन लिलक्षयिषितत्वात् ब्रह्मणः प्रमाणान्तरेणैक्यमनवगतमिति व्यावर्तकभेदेन ब्रह्मबहुत्वमवर्जनीयम् ॥

---

१. संविज्ञानबहुव्रीहिः. पा.        २. ३-तै. भृ. १. अनु.

ब्रह्मशब्दैक्यादत्राप्यैक्यं प्रतीयत इति चेत् ; न, अज्ञातगोव्यक्तेः जिज्ञासोः पुरुषस्य 'खण्डो मुण्डः पूर्णशृङ्गो गौः' इत्युक्ते गोपदैक्येऽपि खण्डत्वादिव्यावर्तकभेदेन गोव्यक्तिबहुत्वप्रतीतेः ब्रह्मव्यक्तयोऽपि बह्वयस्स्युः।अत एव लिलक्षयिषिते वस्तुनि एषां विशेषणानां संभूय लक्षणत्वमप्यनुपपन्नम् ॥

नाप्युपलक्षणत्वेन लक्षयन्ति, आकारान्तराप्रतिपत्तेः । उपलक्षणानामेकेनाकारेण प्रतिपन्नस्य केनचिदाकारान्तरेण प्रतिपत्तिहेतुत्वं हि दृष्टं 'यत्रायं सारसः, स देवदत्तकेदारः' इत्यादिषु ॥

ननु च [1]'सत्यं ज्ञानमनन्तं ब्रह्म' इति प्रतिपन्नाकारस्य जगज्जन्मादीन्युपलक्षणानि भवन्ति। न, इतरेतरप्रतिपन्नाकारापेक्षत्वेन उभयोर्लक्षणवाक्ययोरन्योन्याश्रयणात्। अतो न लक्षणतो ब्रह्म प्रतिपत्तुं शक्यत इति॥

( सिद्धान्तः )

एवं प्राप्तेऽभिधीयते—जगत्सृष्टिस्थितिप्रलयैरुपलक्षणभूतैर्ब्रह्म प्रतिपत्तुं शक्यते।न च उपलक्षणोपलक्ष्याकारव्यतिरिक्ताकारान्तराप्रतिपत्तेर्ब्रह्माप्रतिपत्तिः । उपलक्ष्यं ह्यनवधिकातिशयबृहत् ,बृंहणं च ; बृहतेर्धातोस्तदर्थत्वात् । तदुपलक्षणभूताश्च जगज्जन्मस्थितिलयाः । 'यतो,येन,यत्' इति [2]प्रसिद्धवन्निर्देशेन यथाप्रसिद्धि जन्मादिकारणमनूद्यते । प्रसिद्धिश्च *"सदेवसोम्येदमग्र आसी देकमेवाद्वितीयं" "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत"इत्येकस्यैव सच्छब्दवाच्यस्य निमित्तोपादानरूपकारणत्वेन तदपि 'सदेवेदमग्रे एकमेवासीत्'इत्युपादानतां प्रतिपाद्य 'अद्वितीयम्'इत्यधिष्ठात्रन्तरं प्रतिषिध्य [3]"तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत"इत्येकस्यैव प्रतिपादनात् । तस्मात् यन्मूला जगज्जन्मस्थितिलयाः तद्ब्रह्मेति जन्मस्थितिलयाः स्वनिमित्तोपादानभूतं वस्तु ब्रह्मेति लक्षयन्ति। जगन्निमित्तोपादानताक्षिप्तसर्वज्ञत्वसत्यसङ्कल्पत्वविचित्रशक्तित्वाद्याकारबृहत्त्वेन

१. तै. आनन्द. १.१. २. प्रसिद्धवज्जन्मादिकारणनिर्देशेन.पा. *३. छा.उप. ६.२.१.३

प्रतिपन्नं ब्रह्मेति च जन्मादीनां तथा प्रतिपन्नस्य लक्षणत्वेन नाकारान्तराप्रतिपत्तिरूपानुपपत्तिः ॥

जगज्जन्मादीनां विशेषणतया लक्षणत्वेऽपि न कश्चिद्दोषः। लक्षणभूतान्यपि विशेषणानि स्वविरोधिव्यावृत्तं वस्तु लक्षयन्ति। अज्ञातरूपे वस्तुन्येकस्मिन् लिलक्षयिषितेऽपि परस्पराविरोध्यनेकविशेषणलक्षणत्वं न भेदमापादयति। अत्र तु कालभेदेन जन्मादीनां न विरोधः।

[१]"*यतो वा इमानि भूतानि जायन्ते" इत्यादिकारणवाक्येन प्रतिपन्नस्य जगज्जन्मादिकारणस्य ब्रह्मणस्सकलेतरव्यावृत्तं स्वरूपमभिधीयते-[२]"सत्यं ज्ञानमनन्तं ब्रह्म" इति। तत्र सत्यपदं-निरुपाधिकसत्तायोगि ब्रह्माह। तेन विकारास्पदमचेतनं तत्संसृष्टश्चेतनश्च व्यावृत्तः। नामान्तरभजनार्हावस्थान्तरयोगेन तयोर्निरुपाधिकसत्तायोगरहितत्वात्। ज्ञानपदं-नित्यासङ्कुचितज्ञानैकाकारमाह। तेन कदाचित् सङ्कुचितज्ञानत्वेन मुक्ता व्यावृत्ताः। अनन्तपदं -देशकालवस्तुपरिच्छेदरहितं स्वरूपमाह। सगुणत्वात्स्वरूपस्य स्वरूपेण गुणैश्चानन्त्यम्। तेन पूर्वपदद्वयव्यावृत्तकोटिद्वयविलक्षणास्सातिशयस्वरूपस्वगुणाः नित्याः व्यावृत्ताः। विशेषणानां व्यावर्तकत्वात्। ततः [२]"सत्यं ज्ञानमनन्तं ब्रह्म" इत्यनेन वाक्येन जगज्जन्मादिनाऽवगतस्वरूपं ब्रह्म सकलेतरवस्तुविसजातीयमिति लक्ष्यत इति नान्योन्याश्रयणम्। अतस्सकलजगज्जन्मादिकारणं निरवद्यं सर्वज्ञं [३]सत्यसङ्कल्पं सर्वशक्ति ब्रह्म लक्षणतः प्रतिपत्तुं शक्यत इति सिद्धम् ॥

ये तु निर्विशेषवस्तु जिज्ञास्यमिति वदन्ति। तन्मते "ब्रह्मजिज्ञासा" "जन्माद्यस्य यतः" इत्यसङ्गतं स्यात्; निरतिशयबृहत् बृंहणं च ब्र-

१. तै-भृ. १. १.
२. तै-आनन्द, १. १.
*"यतो वा इमानि" इत्यादि. पा.
३. सर्वशक्ति सत्यसंकल्पं. पा.

ेति निर्वचनात् ; तच्च ब्रह्म जगज्जन्मादिकारणमितिवचनाच्च । एवमु-
वपि सूत्रगणेषु सूत्रोदाहृतश्रुतिगणेषु च ईक्षणाद्यन्वयदर्शनात् सूत्रा-
ण-सूत्रोदाहृतश्रुतयश्च न तत्र प्रमाणम् । तर्कश्च-साध्यधर्माव्यभिचारि-
स्व-धर्मान्वितवस्तुविषयत्वान्न निर्विशेषवस्तुनि प्रमाणम्। जगज्जन्मादि-
क्षते यतस्तद्ब्रह्मेति स्वोत्प्रेक्षा[२]पक्षेऽपि न निर्विशेषवस्तुसिद्धिः, भ्रममूल-
म् , अज्ञानसाक्षि ब्रह्मेत्यभ्युपगमात् । साक्षित्वं हि-प्रकाशैकरसत-
ते । प्रकाशत्वं तु जडाद्व्यावर्तकं, स्वस्य परस्य च व्यवहारयो-
नस्वभावेन भवति । तथा सति सविशेषत्वम् । तदभावे प्रका-
न स्यात् । तुच्छतैव स्यात् ॥

इति श्रीशारीरकमीमांसाभाष्ये जन्माद्यधिकरणम् ॥ २ ॥

---

( वेदान्तसारे जन्माद्यधिकरणम् ॥ २ ॥)

## जन्माद्यस्य यतः ।१।१।२॥

[३]अस्य—विचित्रचिदचिन्मिश्रस्य व्यवस्थितसुखदुःखोपभोगस्य जगतः, न्मस्थितिलयाः यतः,तत् ब्रह्मेति प्रतिपादयति श्रुतिरित्यर्थः,[४]"यतो वा इमानि तानि जायन्ते ...तद्ब्रह्म" इति। सूत्रे 'यत' इति हेतौ पञ्चमी, जनिस्थितिलया-नां साधारणत्वात् । जनिहेतुत्वञ्च निमित्तोपादानरूपं विवक्षितम्, *'यतः' इति हि [५]श्रुतिः । इहोभयविषया कथमिति चेत्, *"यतो वा इमानि" इति [६]प्रसिद्धवन्निर्देशात्,प्रसिद्धेश्च उभयविषयत्वात्। [७]"सदेव सोम्येदमग्र आसीत्, क्रमेवाद्वितीयम्...तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्यत्र, 'स-व इदम् अग्रे एकमेव आसीत्' इति उपादानतां प्रतिपाद्य, 'अद्वितीयम्' ते अधिष्ठात्रन्तरनिवारणात् सच्छब्दवाच्यं ब्रह्मैव निमित्तमुपादानञ्चेति वि-

---

१. भ्रमा यतः. पा. २. पक्षे. च.
३. अस्य चिदचिन्मिश्रस्य. पा.
४. * तै. भृ. अनु .१.
५. श्रुतिरुभयविषया. पा.
६. प्रसिद्धनिदर्शात् . पा.
७. छा. ६. २. १.

ज्ञायते। तथा *"तदैक्षत बहु स्यां प्रजायेय" इत्यात्मन एव विचित्रस्थिरत्रसरूपेण बहुभवनं सङ्कल्प्य तथैव सृष्टिवचनाच्च (अतश्श्रुतावपि 'यतः' इति हेतौ पञ्चमी अत्रैव ब्रह्मणो जगन्निमित्तत्वमुपादानत्वञ्च प्रतिपादितम् । अर्थविरोधात् १"ः स्मान्मायी सृजते विश्वमेतत्" इत्यादि विशेषश्रुत्या चाक्षिप्य, २"प्रकृतिश्च तिज्ञादृष्टान्तानुपरोधात्" ३"अभिध्योपदेशाच्च" ४" साक्षाच्चोभयाम्नानात् ५ "आत्मकृतेः" इत्यादिभिः सूत्रैः परिहरिष्यते। ननु च सर्वज्ञं सर्वशक्ति सः सङ्कल्पं निरवद्यतया निरस्तसमस्तापुरुषार्थगन्धं ब्रह्मैवाऽऽत्मानं विचित्रचिः चिन्मिश्रं जगद्रूपमिदं सर्वमसृजतेति कथमुपपद्यते ? ।तदेतत् सूत्रकारस्स्व यमेव परिचोद्य परिहरिष्यति। ६"अपीतौ तद्वत् प्रसङ्गादसमञ्जसम्" ७"इतर-व्यपदेशाद्धिताकरणादिदोषप्रसक्तिः" इति चोद्यम्; परिहारस्तु ८"न तु दृष्टान्त-भावात्" ९"अधिकन्तु भेदनिर्देशात्" इति च। १०"क्षरन्त्वविद्या ह्यमृतन्तु विद्या, विद्याविद्ये ईशते यस्तु सोऽन्यः" ११"स कारणं करणाधिपाधिपो चास्य कश्चिज्जनिता न चाधिपः" १२"क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावी शते देव एकः" अचिद्वर्गं स्वात्मनो भोग्यत्वेन हरतीति भोक्ता हर इत्युच्यते। १३"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः। यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः॥ अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः" इत्यादिश्रुतिस्मृति१४गणैः प्रत्यगात्मनो ब्रह्मणो भेदेन निर्देशात् परमपुरुषार्थभागिनः प्रत्यगात्मनोऽधिकमर्थान्तर-भूतं ब्रह्म। तच्च प्रत्यगात्मशरीरतया तदात्मभूतम्। १५प्रत्यगात्मनस्त-च्छरीरत्वं ब्रह्मणस्तदात्मत्वञ्च १६"य आत्मनि तिष्ठन्...यस्यात्मा शरी-रम्" १७"एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादिश्रुतिशतसमधिगतम्। सशरीरस्यात्मनः कार्यावस्थाप्राप्तावपि गुणदोष-

---

* छा.उप.६.२.३. १. श्वे. ४.९.
२.३.४.५.शारी.१-४.२३,२४,२५,२६.
६. शारी. २-१-८.
७. शारी. २-१. २१.
८. शारी. २. १. ९.
९. शारी. २. १. २२.
१०. श्वे. ५. १.
११. श्वे. ६. ९. १२. श्वे. १.१०.
१३. गी. १५. १६, १७. १८.
१४. गणेन प्रत्यगात्मनो भेदनिर्देशात्, पुरुषार्थभागिनः पा.
१५. प्रत्यगत्मनस्तु शरीरत्वं. पा.
१६. माध्यन्दिनपाठे.
१७. सुबालोप. ७-ख.

व्यवस्थितेर्दृष्टान्तभावात् ब्रह्मणि न दोषप्रसक्तिः इति नासामञ्जस्यं वेदान्तवाक्य-जिग्रेति १"न तु दृष्टान्तभावात्"इत्युक्तम् । दृष्टान्तश्च-देवमनुष्यादिशब्दवाच्यस्य शरीरस्याऽऽत्मनः 'मनुष्यो बालो युवा स्थविरः' इति नानावस्थाप्राप्तावपि लत्वयुवत्वस्थविरत्वादयः शरीरगता दोषाः नात्मानं स्पृशन्ति, आत्मगताश्च स्नसुखादयः न शरीरमिति । अतः कार्यावस्थं कारणावस्थं च ब्रह्म प्रत्यगात्म-रीरतया तदात्मभूतमिति प्रत्यगात्मवाचिना शब्देन ब्रह्माभिधाने तच्छब्द-मानाधिकरण्ये च हेतुं वक्तुम्, निरसनीयमतद्वयम् २"प्रतिज्ञासिद्धेर्लिङ्ग-श्मरथ्यः,"३"उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः"इत्युपन्यस्य ४"अवस्थिते-ति काशकृत्स्नः"इति हेतुरुक्तः। ५"तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत्" इत्यादिना प्रत्यगात्मन आत्मतयाऽवस्थानात् ब्रह्मणस्तच्छब्दे-नाभिधानम्, तत्सामानाधिकरण्येन व्यपदेशश्चेत्युक्तम् । तथा ६"वैषम्यनैर्घृण्ये सापेक्षत्वात्" ७"न कर्माविभागादिति चेन्नानादित्वादुपपद्यते चाप्युपलभ्यते " इति देवमनुष्यादिविषमसृष्टेर्जीवकर्मनिमित्तत्वम्, जीवानां तत्तत्कर्मप्रवा-णाश्चानादित्वं प्रतिपाद्य,तदनादित्वं च ८"नित्यो नित्यानां चेतनश्चेतनानाम्" ९"ज्ञाज्ञौ द्वौ"इत्यादिश्रुतिषूपलभ्यत इत्युक्त्वा,तदनादित्वेऽपि प्रलयकाले चिद-चिद्वस्तुनोर्भोक्तृभोग्ययोर्नामरूपविभागाभावात् , १०"आत्मा वा इदमेकएवाग्र आसीत् नान्यत् किञ्चन मिषत्"इत्यादावेकत्वावधारणमुपपद्यतइति सूत्रकारेण स्वयमेवोक्तम् । तथा च—११"नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः" इति प्रत्यगात्मनो नित्यत्वादनुत्पत्तिमुक्त्वा १२"ज्ञोऽत एव"इति तस्य ज्ञातृत्वमेव स्वरूपमित्युक्तम्। १३"उत्क्रान्तिगत्यागतीनाम्" इत्यादिनाऽणुत्वञ्चोक्तम् । १४"तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्"१५"यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्"इति ज्ञातु-रेवात्मनो ज्ञानशब्देन व्यपदेशो ज्ञानगुणसारत्वात् ज्ञानैकनिरूपणीयस्वभावत्वा-च्चेत्युक्तम् । १६"नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा" इति ज्ञानमात्रस्वरूपात्मवादे हेत्वन्तरायत्तज्ञानवादे, सर्वगतात्मवादे च दोष उक्तः।

---

१. शारी. २. १. ९.
२. ३. ४. शारी. १. ४. २०. २१. २२.
५. तै. आ. ६. २. ३.
६. ७. शारी २. १-३४., ३५.
८. श्वे. ६. १३.
९. श्वे. १-९.
१०. ऐतरेये. १. १. १.
११. १२. शारी-२ ३. १८, १९.
१३. शारी. २. ३. २०.
१४. १५. शारी. २. ३. २९. ३०.
१६. शारी. २. ३. ३२.

१'कर्ता शास्त्रार्थवत्त्वात्' २ 'उपादानाद्विहारोपदेशाच्च' ३"व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः" ४"उपलब्धिवदनियमः" ५"शक्तिविपर्ययात्" ६"समाध्यभावाच्च" ७ "यथा च तक्षोभयथा" इत्यात्मन एव शुभाशुभेषु कर्मसु कर्तृत्वम्,प्रकृतेरकर्तृत्वम्,प्रकृतेश्च कर्तृत्वे तस्यास्साधारणत्वेन सर्वेषां फलानुभव८प्रसङ्गादिच प्रतिपादितम्।९"परात्तु तच्छ्रुतेः"१०"कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः"इत्यात्मन एव कर्तृत्वं परमपुरुषानुमतिसहकृतमित्युक्तम्। ११"अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके" १२"मन्त्रवर्णात्"१३"अपि स्मर्यते"१४"प्रकाशादिवत्तु नैवं परः"१५"स्मरन्ति च" इति १६"अनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" १७"क्षरन्त्वविद्या ह्यमृतन्तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः" १८"प्राज्ञेनाऽत्मना संपरिष्वक्तो न बाह्यङ्किञ्चन वेद नान्तरम्" १९" तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति"२०" ज्ञाज्ञौ द्वावजावीशनीशौ" २१"पृथगात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" २२"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्।तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति"२३"स कारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता न चाधिपः"२४'यस्सर्वज्ञस्सर्ववित्'२५"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"२६"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्"२७"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" [नित्यानां चेतनानां यः एकः नित्यश्चेतन२८नस्स कामान्विदधातीत्यर्थः]२९"पतिं विश्वस्याऽत्मेश्वरम्" इत्यादिषु प्रत्यगात्मनः परमात्मनश्च कर्मवश्यत्वेन शोचि

---

१. २. ।३. ४, ५, ६, ७, शारी. २-३. ३३, ३४, ३५, ३६, ३७, ३८,३९.

८. प्रसङ्गादिति प्राति. पा.

९.१०.११.१२.१३.१४.१५.शारी. २. ३. ४०, ४१, ४२, ४३, ४४, ४५, ४६.

१६. मुण्डक.३.१. २.

१७. श्वे. उप. ५. १.

१८. बृ. ६. ३. २१.

१९. मुण्डक. ३. १. १.

२०. श्वे. १. ९. २१. श्वे. १. ६.

२२. मुण्डक. ३. १. ३.

२३. श्वे. ६. ९.

२४. मुण्ड. १. १. ९.

२५. श्वे. ६. ८.

२६. श्वे. ६. १९.

२७. श्वे. ६. १३.

२८. नः कामान् . पा.

२९. तै. नारयणे. ६. ११. ३.

तृत्वेनासर्वज्ञत्वेन उपासनायत्तमुक्तित्वेन निरवद्यत्वेन सर्वज्ञत्वेन सत्यसङ्कल्पत्वेन सर्वेश्वरत्वेन समस्तकल्याणगुणाकरत्वादिना च स्वरूपस्य स्वभावस्य नानात्वव्यपदेशात् तयोरेव१ "तत्त्वमसि" २ "अयमात्मा ब्रह्म" ३ "योऽसौ सोऽहं योऽहं सोऽसौ" ४ "अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद" ५ "अकृत्स्नो ह्येषः...आत्मेत्येवोपासीत" ६ "ब्रह्म दाशा ब्रह्म दासा ब्रह्म मे कितवाः" इति च सर्वजीवात्मव्यापित्वेनाभेदव्यपदेशाच्च, उभयव्यपदेशाविरोधेन परमात्मांशो जीवात्मेत्यभ्युपगन्तव्यम् । न केवलं न्यायासिद्धमिदं, श्रुतिस्मृतिभ्याश्चांशत्वमुक्तं जीवात्मनः ७ "पादोऽस्य विश्वा भूतानि" ८ "ममैवांशो जीवलोके जीवभूतस्सनातनः" इति । अंशत्वन्नाम एकवस्त्वेकदेशत्वम्। तथा सत्युभयोरेक९वस्तुत्वेनाविरोधो न स्यादित्याशङ्कय, १० "प्रकाशादिवत्तु नैवं परः" इति परिहरति । अन्यविशेषणैकस्वभावप्रकाशजातिगुणशरीरविशिष्टानग्निव्यक्तिगुण्यात्मनः प्रति प्रकाशजातिगुणशरीराणां यथा अंशत्वम् ; एवं परमात्मानं प्रत्यगात्मशरीरकं प्रति प्रत्यगात्मनोंऽशत्वम्। एवम् अंशत्वे यत्स्वभावोंऽशभूतो जीवः, नैवमंशी परमात्मा, सर्वत्र विशेषणविशेष्ययोस्स्वरूपस्वभावभेदात्।एवञ्च ११ "कर्ता शास्त्रार्थवत्त्वात्" १२ "परात्तु तच्छ्रुतेः" इत्यनन्तरोक्तञ्च न विरुध्यते।एवं प्रकाशशरीरवज्जीवात्मनाम् अंशत्वं पराशरादयस्स्मरन्ति च-१३ "एकदेशस्थितस्याग्नेः ज्योत्स्ना विस्तारिणी यथा।परस्य ब्रह्मणश्शक्तिस्तथेदमखिलं जगत्" १४ "यत्किञ्चित् सृज्यते येन सत्त्वजातेन वै द्विज । तस्य सृज्यस्य सम्भूतौ तत्सर्वं वै हरेस्तनुः" १५ "ते सर्वे सर्वभूतस्य विष्णोरंशसमुद्भवाः" इति। अन्यथा पारमार्थिकापारमार्थिकोपाधिसमाश्रयणे प्रत्यगात्मनोंऽशत्वे ब्रह्मण एव वेदान्तनिवर्त्यास्सर्वे दोषा भवेयुरिति १६ "आभासा एव च" इत्या१७दिसूत्रैरुक्तम्।अतस्सर्वदा चिदचिद्वस्तु

---

१. छा. ६. ८. ७.
२. बृ. ६. ४. ५. ३. ऐतरेयिण इति शाङ्करीये (३३. ३६.) ४. बृ. ३. ४. १०.
५. बृ. ३. ४. ७.
६. अथर्व-संहितोप.
७. यजु. आरण्य. १२. १३. पुरुषसूक्ते. ३.
८. गी. १५-७.
९. वस्तुत्वेन विरोधः पा.
१०. शारी. २ ३. ४५.
११. शारी. २. ३. ३३.
१२. शारी. २. ३. ४०.
१३. वि. पु. १. २२. ५६.
१४. वि. पु. १. २२. ३८.
१५. वि. पु. १. २२. २०.
१६. शारी. २. ३. ४९.
१७. दिनोक्तम्. पा.

शरीरतया तदात्मभूतमेव ब्रह्म, कदाचिदविभक्तनामरूपचिदचिद्वस्तुशरीरं तत्कारणावस्थम्, कदाचिच्च विभक्तनामरूपचिदचिद्वस्तुशरीरं तत्कार्यावस्थं ब्रह्म सर्वदा चिदचिद्वस्तुशरीरतया तद्विशिष्टत्वेऽपि ब्रह्मणः परिणामित्वापुरुषार्थाश्रयत्वे शरीरभूतचेतनाचेतनवस्तुगते । आत्मभूतं ब्रह्म सर्वदा निरस्तनिखिलदोषगन्धानवधिकातिशयासङ्ख्येयज्ञानानन्दाद्यपरिमितोदारगुणसागरमवतिष्ठतइति ब्रह्मैव जगन्निमित्तमुपादानञ्चेति १"यतो वा इमानि" इत्यादिवाक्यं प्रतिपादयत्येवेति'जन्माद्यस्य यतः तत् ब्रह्म'इति सुष्ठूक्तम्।२"सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्"३"तदैक्षत बहु स्यां प्रजायेय" इति। अ स्यचायमर्थः—४"यस्यात्मा शरीरम्" ५"यस्याक्षरं शरीरम्, यस्य पृथिवी शरीरम्, यस्याव्यक्तं शरीरम्।एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादिश्रुतेः ब्रह्मणः सर्वदा चिदचिद्वस्तुशरीरकत्वात् सदेवेदमिदानीं स्थूलचिदचिद्वस्तुशरीरकत्वेन विभक्तनामरूपम्, अग्रे प्रलयकाले, सूक्ष्मदशापन्नचिदचिद्वस्तुशरीरतया नामरूपविभागानर्हमेकमेवासीत् । ६स्वयमेव ब्रह्म सर्वज्ञं सर्वशक्ति निमित्तान्तरानपेक्षमद्वितीयञ्चातिष्ठत् ।*"तदैक्षत बहु स्यां प्रजायेय" इति तन्नामरूपविभागानर्हसूक्ष्मचिदचिद्वस्तुशरीरकतया एकमेवावस्थितं नामरूपविभागार्हस्थूलदशापत्त्या बहुप्रकारं स्यामिति ७ऐक्षत। 'स्यां, प्रजायेय' इति व्यष्टिसमष्टिव्यपदेशः। चिदचितोः परस्य च प्रलयकालेऽपि व्यवहारानर्हसूक्ष्मभेदः ८सर्ववेदान्तिभिरभ्युपगतः, अविद्याकृतभेदस्य उपाधिकृतभेदस्य च अनादित्वाभ्युपगमात् । इयांस्तु विशेषः—ब्रह्मैवाज्ञम् उपाधिसम्बद्धं चेति सर्वश्रुतिस्मृतिन्यायविरोधोऽन्येषाम् , तदभावादविरोधश्चास्माकम्—इति ॥

इति वेदान्तसारे जन्माद्याधिकरणम् ॥ २ ॥

---

१. तै. भृ. १. १.
२. छा. ६. २. १.
*३. छा. ६. २. ३.
४. माध्यन्दिनपाठे.
५. सुबालो. ७. ख.
६. स्वयमेव सर्वज्ञं. पा.
७. ऐक्षतेतिचिदचिदतोः. पा.
८. सर्वैर्वेदान्तवादिभिरभ्युपेतः. पा.

( वेदान्तदीपे जन्माद्यधिकरणम् )

## जन्माद्यस्य यतः । १ । १ । २ ॥

तैत्तिरीयके [1]"यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्म" इत्येतद्वाक्यं विषयः । किमेतज्जिज्ञास्यतया प्रतिज्ञातं ब्रह्म जगज्जन्मादिकारणतया लक्षणतः प्रतिपादयितुं शक्नोति न वेति संशयः। न शक्नोतीति पूर्वः पक्षः । कुतः? जगज्जन्मादीनामुपलक्षणतया विशेषणतया वा ब्रह्मलक्षणत्वासम्भवात्।उपलक्षणत्वे ह्युपलक्ष्यस्याऽकारान्तरयोगोऽपेक्षितः?न चेह तदस्ति। अतः उपलक्षणत्वं न सम्भवति। विशेषणत्वेऽप्यनेकविशेषणविशिष्टतया अपूर्वस्यैकस्य[2]प्रतिपादकत्वं न सम्भवति। विशेषणानां व्यावर्तकत्वेन विशेषणबहुत्वे ब्रह्मबहुत्वप्रसक्तेः । राद्धान्तस्तु—एकस्मिन्नविरुद्धानां विशेषणानाम् अनेकत्वेऽपि श्यामत्वयुवत्वादिविशिष्टदेवदत्तवज्जगज्जन्मादिविशिष्टं[3]ब्रह्मैकमेव विशेष्यं भवति । [4]उपलक्षणत्वे जन्मादिभिरुपलक्ष्यस्य ब्रह्मशब्दावगतबृहत्त्वाद्याकाराश्च सन्तीति जगज्जन्मादिकारणं ब्रह्मेति लक्षणतः प्रतिपादयितुं शक्नोति—इति । सूत्रार्थः—अस्य विविधविचित्रभोक्तृभोग्यपूर्णस्य जगतः, यतः जन्मादि, तद्ब्रह्मेति प्रतिपादयितुं शक्नोत्येतद्वाक्यम्—इति ॥

इति वेदान्तदीपे जन्माद्यधिकरणम् ॥ २ ॥

---

( श्रीशारीरकमीमांसाभाष्ये शास्त्रयोनित्वाधिकरणम् )

---

जगज्जन्मादिकारणं ब्रह्म वेदान्तवेद्यमित्युक्तम् । तदयुक्तम्। तद्धि न वाक्यप्रतिपाद्यम् । अनुमानेन सिद्धेरित्याशङ्कयाह—

## शास्त्रयोनित्वात् । १ । १ । ३ ॥

शास्त्रं यस्य योनिः कारणं प्रमाणम्, तच्छास्त्रयोनि ; तस्य भावश्शास्त्रयोनित्वम् । तस्मात् ब्रह्मज्ञानकारणत्वात् शास्त्रस्य, तद्योनित्वं

---

१. तै. भृ. १.

२. प्रतिपादनं त. पा.

३. ब्रह्मैकमेव भवति, पा.

४. उपलक्षणत्वेऽपि जन्मादि. पा.

ब्रह्मणः। अत्यन्तातीन्द्रियत्वेन प्रत्यक्षादिप्रमाणाविषयतया ब्रह्मणश्शास्त्रैकप्रमाणकत्वात् उक्तस्वरूपं ब्रह्म [1]"यतो वा इमानि भूतानि" इत्यादिवाक्यं बोधयत्येवेत्यर्थः ॥

( पूर्वः पक्षः )

ननु—शास्त्रयोनित्वं ब्रह्मणो न सम्भवति, प्रमाणान्तरवेद्यत्वाद्ब्रह्मणः। अप्राप्ते तु शास्त्रमर्थवत् ॥

किन्तर्हि तत्र प्रमाणम्। न तावत् प्रत्यक्षम्। तद्धि द्विविधम्, इन्द्रियसम्भवं योगसम्भवं चेति। इन्द्रियसंभवञ्च बाह्यसम्भवम्, आन्तरसम्भवञ्चेति द्विधा। बाह्येन्द्रियाणि विद्यमानसन्निकर्षयोग्यस्वविषयबोधजननानीति न सर्वार्थसाक्षात्कारतन्निर्माणसमर्थपुरुषविशेषविषयबोधजननानि। नाप्यान्तरम्, आन्तरसुखदुःखादिव्यतिरिक्तबहिर्विषयेषु तस्य बाह्येन्द्रियानपेक्षप्रवृत्त्यनुपपत्तेः। नापि योगजन्यम्; भावनाप्रकर्षपर्यन्तजन्मनस्तस्य विशदावभासत्वेऽपि पूर्वानुभूतविषयस्मृतिमात्रत्वान्न प्रामाण्यमिति कुतः प्रत्यक्षता; तदतिरिक्तविषयत्वे कारणाभावात्। तथा सति तस्य भ्रमरूपता। नाप्यनुमानं विशेषतो दृष्टं सामान्यतो दृष्टं वा; अतीन्द्रिये वस्तुनि सम्बन्धावधारणविरहान्न विशेषतो दृष्टम्। समस्तवस्तुसाक्षात्कारतन्निर्माणसमर्थपुरुषविशेषनियतं सामान्यतो दृष्टमपि न लिङ्गमुपलभ्यते ॥

ननु च—जगतः कार्यत्वं तदुपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञकर्तृकत्वव्याप्तम्। अचेतनारब्धत्वं जगतश्चैकचेतनाधीनत्वेन व्याप्तम्। सर्वं हि घटादिकार्यं तदुपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञकर्तृकं दृष्टम्। अचेतनारब्धमरोगं स्वशरीरमेकचेतनाधीनं च। सावयवत्वेन जगतः [2]कार्यत्वम् ॥

१. तै. भृ. १. | २. कार्यत्वमिति. पा.

उच्यते—किमिदमेकचेतनाधीनत्वम्? न तावत्तदायत्तोत्पत्तिस्थितित्वम्; दृष्टान्तो हि साध्यविकलस्स्यात्, न ह्यरोगं स्वशरीरमेकचेतनायत्तोत्पत्तिस्थिति, तच्छरीरस्य भोक्तृणां भार्यादिसर्वचेतनानामदृष्टजन्यत्वात्तदुत्पत्तिस्थित्योः। किंच—शरीरावयविनस्स्वावयवसमवेततारूपा स्थितिरवयवसंश्लेषविशेषव्यतिरेकेण न चेतनमपेक्षते। प्राणनलक्षणा तु स्थितिः पक्षत्वाभिमते क्षितिजलधिमहीधरादौ न संभवतीति पक्षसपक्षानुगतामेकरूपां स्थितिं नोपलभामहे। तदायत्तप्रवृत्तित्वं तदधीनत्वमिति चेत्—अनेकचेतनसाध्येषु गुरुतररथशिलामहीरुहादिषु व्यभिचारः। चेतनमात्राधीनत्वे सिद्धसाध्यता॥

किंच—उभयवादिसिद्धानां जीवानामेव लाघवेन कर्तृत्वाभ्युपगमो युक्तः। न च जीवानामुपादानाद्यनभिज्ञतया कर्तृत्वासंभवः; सर्वेषामेव चेतनानां पृथिव्याद्युपादानयागाद्युपकरणसाक्षात्कारसामर्थ्यात्। यथेदानीं पृथिव्यादयो यागादयश्च प्रत्यक्षमीक्ष्यन्ते। उपकरणभूतयागादिशक्तिरूपापूर्वादिशब्दवाच्यादृष्टसाक्षात्काराभावेऽपि चेतनानां न कर्तृत्वानुपपत्तिः,तत्साक्षात्कारानपेक्षणात्कार्यारम्भस्य। शक्तिमत्साक्षात्कार एव हि कार्यारम्भोपयोगी। शक्तेस्तु ज्ञानमात्रमेवोपयुज्यते; न साक्षात्कारः। नहि कुलालादयः कार्योपकरणभूतदण्डचक्रादिवत्तच्छक्तिमपि साक्षात्कृत्य घटमणिकादिकार्यमारभन्ते। इह तु चेतनानामागमावगतयागादिशक्तिविशेषाणां कार्यारम्भो नानुपपन्नः॥

किञ्च—यच्छक्यक्रियं शक्योपादानादिविज्ञानञ्च, तदेव तदभिज्ञकर्तृकं दृष्टम्। महीमही[१]धरमहार्णवादि त्वशक्यक्रियमशक्योपादानादिविज्ञानं चेति न चेतनकर्तृकम्। अतो घटमणिकादिसजातीयशक्यक्रियशक्योपादानादिविज्ञानवस्तुगतमेव कार्यत्वं बुद्धिमत्कर्तृपूर्वकत्वसाधने प्रभवति। किञ्च—घटादिकार्यमनीश्वरेणाल्पज्ञानशक्तिना सशरीरेण परि-

१. धरार्णवादि, पा.

ग्रहवताऽनाप्तकामेन निर्मितं दृष्टमिति तथाविधमेव चेतनं कर्तारं साधयन्नयं कार्यत्वहेतुस्सिषाधयिषितपुरुषसार्वज्ञ्यसर्वैश्वर्यादिविपरीतसाधनाद्विरुद्धस्स्यात्। न चैतावता सर्वानुमानोच्छेदप्रसङ्गः। लिङ्गिनि प्रमाणान्तरगोचरे लिङ्गबलोपस्थापिता [1]विपरीतविशेषास्तत्प्रमाणप्रतिहतगतयो निवर्तन्ते। इह तु सकलेतरप्रमाणाविषये लिङ्गिनि निखिलनिर्माणचतुरे अन्वयव्यतिरेकावगताविनाभावनियमा धर्मास्सर्व एवाविशेषेण प्रसज्यन्ते। निवर्तकप्रमाणाभावात्तथैवावतिष्ठन्ते। अत आगमादृते कथमीश्वरस्सेत्स्यति ॥

अत्राहुः—सावयवत्वादेव जगतः कार्यत्वं न प्रत्याख्यातुं शक्यते। भवन्ति च प्रयोगाः—विवादाध्यासितं भूभूधरादि कार्यं, सावयवत्वात्, घटादिवत्। तथा विवादाध्यासितमवनिजलधिमहीधरादि कार्यं, महत्त्वे सति क्रियावत्त्वात्, [2]घटवत्। तनुभुवनादि कार्यं, महत्त्वे सति मूर्तत्वात्, [2]घटवत्—इति। सावयवेषु द्रव्येषु 'इदमेव क्रियते नेतरत्' इति कार्यत्वस्य नियामकं सावयवत्वातिरेकि रूपान्तरं नोपलभामहे। कार्यत्वप्रतिनियतं शक्यक्रियत्वं शक्योपादानादिविज्ञानत्वं चोपलभ्यतइति चेत्—न; कार्यत्वेनानुमतेऽपि विषये ज्ञानशक्ती [3]कार्यानुमेये—इत्यन्यत्रापि सावयवत्वादिना कार्यत्वं ज्ञातमिति ते च प्रतिपन्ने एवेति न कश्चिद्विशेषः। तथाहि—घटमणिकादिषु कृतेषु कार्यदर्शनानुमितकर्तृगततन्निर्माणशक्तिज्ञानः पुरुषोऽदृष्टपूर्वं विचित्रसन्निवेशं नरेन्द्रभवनमालोक्यावयवसन्निवेशविशेषेण तस्य कार्यत्वं निश्चित्य तदानीमेव कर्तुस्तज्ज्ञानशक्तिवैचित्र्यमनुमिनोति। अतस्तनुभुवनादेः कार्यत्वे सिद्धे सर्वसाक्षात्कारतन्निर्माणादिनिपुणः कश्चित्पुरुषविशेषस्सिद्ध्यत्येव ॥

किंच—सर्वचेतनानां धर्माधर्मनिमित्तेऽपि सुखदुःखोपभोगे चेत-

---

१. विपरीता विशेषाः. पा.

२. घटादिवत्. पा.

३. कार्यानुमेये। अन्यत्रापि. पा.

नानधिष्ठितयोस्तयोरचेतनयोः फलहेतुत्वानुपपत्तेः सर्वकर्मानुगुणसर्वफलप्रदानचतुरः कश्चिदास्थेयः ; वर्धकिनाऽनधिष्ठितस्य वास्यादेरचेतनस्य देशकालाद्यनेकपरिकरसन्निधानेऽपि यूपादिनिर्माणसाधनत्वादर्शनात् । बीजाङ्कुरादेः पक्षान्तर्भावेन तैर्व्यभिचारापादनं श्रोत्रियवेतालानामनभिज्ञताविजृम्भितम् । तत एव सुखादिभिर्व्यभिचारवचनमपि तथैव । न च लाघवेनोभयवादिसंप्रतिपन्नक्षेत्रज्ञानामेव ईदृशाधिष्ठातृत्वकल्पनं युक्तम्, तेषां सूक्ष्मव्यवहितविप्रकृष्टदर्शनाशक्तिनिश्चयात् । दर्शनानुगुणैव हि सर्वत्र कल्पना । न च क्षेत्रज्ञवदीश्वरस्याशक्तिनिश्चयोऽस्ति । अतः प्रमाणान्तरतो न तत्सिद्ध्यनुपपत्तिः । समर्थकर्तृपूर्वकत्वनियतकार्यत्वहेतुना सिध्यन् स्वाभाविकसर्वार्थसाक्षात्कारतन्नियमनशक्तिसंपन्न [१]एव सिध्यति ॥

यत्त्वनैश्वर्याद्यापादनेन धर्मविशेषविपरीतसाधनत्वमुन्नीतम् ; तदनुमानवृत्तानभिज्ञत्वनिबन्धनम्, सपक्षे सह दृष्टानां सर्वेषां कार्यस्याहेतुभूतानां च धर्माणां लिङ्गिन्यप्राप्तेः ॥

एतदुक्तं भवति— केनचित् किंचित् क्रियमाणं स्वोत्पत्तये कर्तुः स्वनिर्माणसामर्थ्यं स्वोपादानोपकरणज्ञानं चापेक्षते ; न त्वन्यासामर्थ्यमन्याज्ञानं च, हेतुत्वाभावात् । स्वनिर्माणसामर्थ्यस्वोपादानोपकरणज्ञानाभ्यामेव स्वोत्पत्तावुपपन्नायां संबन्धितया दर्शनमात्रेणाकिंचित्करस्यार्थान्तराज्ञानादेर्हेतुत्वकल्पनायोगात्— इति। किंच— क्रियमाणवस्तुव्यतिरिक्तार्थाज्ञानादिकं किं सर्वविषयं क्रियोपयोगि ; उत कतिपयविषयम् । न तावत्सर्वविषयम् ; नहि कुलालादिः क्रियमाणव्यतिरिक्तं किमपि न जानाति । नापि कतिपयविषयम्, सर्वेषु कर्तृषु तत्तदज्ञानाशक्त्यनियमेन सर्वेषामज्ञानादीनां व्यभिचारात् । अतः कार्यत्वस्यासाधकानामनीश्वरत्वादीनां लिङ्गिन्यप्राप्तिरिति न विपरीतसाधनत्वम् ॥

१. एव हि सिध्यति. पा.

कुलालादीनां दण्डचक्राद्यधिष्ठानं शरीरद्वारेणैव दृष्टमिति जगदुपादानोपकरणाधिष्ठानमीश्वरस्याशरीरस्यानुपपन्नमिति चेत्—नः संकल्पमात्रेणैव परशरीरगतभूतवेतालगरलाद्यपगमविनाशदर्शनात्। कथमशरीरस्य परप्रवर्तनरूपस्संकल्प इति चेत्—न शरीरापेक्षस्संकल्पः, शरीरस्य संकल्पहेतुत्वाभावात्। मन एव हि संकल्पहेतुः। तदभ्युपगतमीश्वरेऽपि, कार्यत्वेनैव ज्ञानशक्तिवन्मनसोऽपि प्राप्तत्वात्। मानसस्सङ्कल्पस्सशरीरस्यैव, सशरीरस्यैव समनस्कत्वादिति चेत्—न, मनसो नित्यत्वेन देहापगमेऽपि मनसस्सद्भावेनानैकान्त्यात्। अतो विचित्रावयवसन्निवेशविशेषतनुभुवनादिकार्यनिर्माणे पुण्यपाप[१]परवशः परिमितशक्तिज्ञानः क्षेत्रज्ञो न प्रभवतीति निखिलभुवननिर्माणचतुरोऽचिन्त्यापरिमितज्ञानशक्त्यैश्वर्योऽशरीरस्संकल्पमात्रसाधनपरिनिष्पन्नानन्तविस्तारविचित्ररचनप्रपञ्चः पुरुषविशेष ईश्वरोऽनुमानेनैव सिद्ध्यति। अतः प्रमाणान्तरावसेयत्वाद्ब्रह्मणः नैतद्वाक्यं ब्रह्म प्रतिपादयति॥

किंच—अत्यन्तभिन्नयोरेव मृद्द्रव्यकुलालयोर्निमित्तोपादानत्वदर्शनेन आकाशादेर्निरवयव[२]द्रव्यस्य कार्यत्वानुपपत्त्या च नैकमेव ब्रह्म कृत्स्नस्य जगतो निमित्तमुपादानं च प्रतिपादयितुं शक्नोति—इति॥

( सिद्धान्तः )

एवं प्राप्ते ब्रूमः—यथोक्तलक्षणं ब्रह्म जन्मादिवाक्यं बोधयत्येव। कुतः? शास्त्रैकप्रमाणकत्वाद्ब्रह्मणः। यदुक्तं—सावयवत्वादिना कार्यं सर्वं जगत्। कार्यंच तदुचितकर्तृविशेषपूर्वकं दृष्टमिति निखिलजगन्निर्माणतदुपादानोपकरणवेदनचतुरः कश्चिदनुमेयः—इति। तदयुक्तम्, महीमहार्णवादीनां कार्यत्वेऽप्येकदैवैकेन निर्मिता इत्यत्र प्रमाणाभावात्। न चैकस्य घटस्येव सर्वेषामेकं कार्यत्वम्, येनैकदैवैकः कर्ता स्यात्। पृथग्भूतेषु

१. परवशपरिमितशक्तिज्ञानः पा. | २. द्रव्यत्वात्कार्यत्वानुपप. पा.

कार्येषु कालभेदकर्तृभेददर्शनेन कर्तृकालैक्यनियमादर्शनात् । न च क्षेत्रज्ञानां विचित्रजगन्निर्माणाशक्त्या कार्यत्वबलेन तदतिरिक्तकल्पनायाम् अनेककल्पनानुपपत्तेश्चैकः कर्ता भवितुमर्हतीति क्षेत्रज्ञानामेवोपचितपुण्यविशेषाणां शक्तिवैचित्र्यदर्शनेन तेषामेवातिशयिताद्दृष्टसंभावनया च तत्तद्विलक्षणकार्यहेतुत्वसंभवात् ; तदतिरिक्तात्यन्तादृष्टपुरुषकल्पनानुपपत्तेः । न च [१]युगपत्सर्वोत्पत्तिस्सर्वोच्छित्तिश्च प्रमाणपदवीमधिरोहतः, अदर्शनात्, क्रमेणैवोत्पत्तिविनाशदर्शनाच्च । कार्यत्वेन सर्वोत्पत्तिविनाशयोः कल्प्यमानयोर्दर्शनानुगुण्येन कल्पनायां विरोधाभावाच्च । अतो बुद्धिमदेककर्तृकत्वे साध्ये कार्यत्वस्यानैकान्त्यम् ; पक्षस्याप्रसिद्धविशेषणत्वम् ; साध्यविकलता च दृष्टान्तस्य; सर्वनिर्माणचतुरस्य एकस्याप्रसिद्धेः । बुद्धिमत्कर्तृकत्वमात्रे साध्ये सिद्धसाधनता ॥

सार्वज्ञ्यसर्वशक्तियुक्तस्य कस्यचिदेकस्य साधकमिदं कार्यत्वं किं युगपदुत्पद्यमानसर्ववस्तुगतम् ? उत क्रमेणोत्पद्यमानसर्ववस्तुगतम् ? युगपदुत्पद्यमानसर्ववस्तुगतत्वे कार्यत्वस्यासिद्धता । क्रमेणोत्पद्यमानसर्ववस्तुगतत्वे अनेककर्तृकत्वसाधनाद्विरुद्धता । अत्राप्येककर्तृकत्वसाधने प्रत्यक्षानुमानविरोधश्शास्त्रविरोधश्च ; 'कुम्भकारो जायते रथकारो जायते' इत्यादिश्रवणात् ॥

अपिच—सर्वेषां कार्याणां शरीरादीनां च सत्त्वादिगुणकार्यरूपसुखाद्यन्वयदर्शनेन सत्त्वादिमूलत्वमवश्याश्रयणीयम् । कार्यवैचित्र्यहेतुभूताः कारणगता विशेषास्सत्त्वादयः। तेषां कार्याणां तन्मूलत्वापादनं तद्युक्तपुरुषान्तःकरणविकारद्वारेण । पुरुषस्य च तद्योगः कर्ममूल इति कार्यविशेषारम्भायैव, ज्ञानशक्तिवत्कर्तुः कर्मसम्बन्धः कार्यहेतुत्वेनैवावश्याश्रयणीयः; ज्ञानशक्तिवैचित्र्यस्य च कर्ममूलत्वात् । इच्छायाः कार्यारम्भहेतुत्वेऽपि विषयविशेषविशेषितायास्तस्यास्सत्त्वादिमूलकत्वेन

---

१. युगपत्सर्वोच्छित्तिस्सर्वोत्पत्तिश्च. पा.

[1]कर्मसंबन्धोऽवर्जनीयः। अतः क्षेत्रज्ञा एव कर्तारः; न तद्विलक्षणः कश्चिदनुमानात्सिध्यति ॥

[2]भवन्ति च प्रयोगाः—तनुभुवनादि क्षेत्रज्ञकर्तृकम्, कार्यत्वात्, [3]घटवत्। ईश्वरः कर्ता न भवति, प्रयोजनशून्यत्वात्, मुक्तात्मवत्। ईश्वरः कर्ता न भवति, अशरीरत्वात्तद्वदेव। न च क्षेत्रज्ञानां स्वशरीराधिष्ठाने व्यभिचारः, तत्राप्यनादेस्सूक्ष्मशरीरस्य सद्भावात्। विमतिविषयः कालो न लोकशून्यः, कालत्वाद्वर्तमानकालवत्—इति ॥

अपिच—किमीश्वरस्सशरीरोऽशरीरो वा कार्यं करोति। न तावदशरीरः, अशरीरस्य कर्तृत्वानुपलब्धेः। मानसान्यपि कार्याणि सशरीरस्यैव भवन्ति, मनसो नित्यत्वेऽप्यशरीरेषु मुक्तेषु तत्कार्यादर्शनात्। नापि सशरीरः, विकल्पासहत्वात्। तच्छरीरं किं नित्यम्? उतानित्यम्?। न तावन्नित्यम्, सावयवस्य तस्य नित्यत्वे जगतोऽपि नित्यत्वाविरोधादीश्वरासिद्धेः। नाप्यनित्यम्, तद्व्यतिरिक्तस्य तच्छरीरहेतोस्तदानीमभावात्। स्वयमेव हेतुरिति चेत्—न, अशरीरस्य तदयोगात्। अन्येन शरीरेण सशरीर इति चेत्—न, अनवस्थानात् ॥

स किं सव्यापारो निर्व्यापारो वा?। अशरीरत्वादेव न सव्यापारः। नापि निर्व्यापारः कार्यं करोति, मुक्तात्मवत्। कार्यं जगदिच्छामात्रव्यापारकर्तृकमित्युच्यमाने पक्षस्याप्रसिद्धविशेषणत्वम्; दृष्टान्तस्य च साध्यहीनता। अतो दर्शनानुगुण्येन [4]ईश्वरानुमानं दर्शनानुगुण्यपराहतमिति शास्त्रैकप्रमाणकः परब्रह्मभूतस्सर्वेश्वरः पुरुषोत्तमः ॥

शास्त्रन्तु सकलेतरप्रमाणपरिदृष्टसमस्तवस्तुविसजातीयं सार्वज्ञ्यसत्यसङ्कल्पत्वादिमिश्रानवधिकातिशयापरिमितोदारगुणसागरं निखिलहेयप्रत्यनीकस्वरूपं प्रतिपादयतीति न प्रमाणान्तरावसितवस्तुसा-

१. कर्मसंबन्धोऽवश्याश्रयणीयः पा ॥
२. भवन्तिचात्र. पा ॥
३. घटादिवत्. पा ॥
४. ईश्वरसाधनं. पा ॥

धर्म्यप्रयुक्तदोषगन्धप्रसङ्गः । यत्तु [१]निमित्तोपादानयोरैक्यमाकाशादेर्निरवयवद्रव्यस्य कार्य[२]त्वं चानुपलब्धम् अशक्यप्रतिपादनमित्युक्तम् ; [३]तदप्यविरुद्धमिति [४]"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" [५]"न वियदश्रुतेः" इत्यत्र प्रतिपादयिष्यते। अतः प्रमाणान्तरागोचरत्वेन शास्त्रैकविषयत्वात् [६]"यतो वा इमानि भूतानि" [७]इति वाक्यमुक्तलक्षणं ब्रह्म प्रतिपादयतीति सिद्धम् ॥

इति श्रीशारीरकमीमांसाभाष्ये शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

---

( वेदान्तसारे शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥ )

---

# शास्त्रयोनित्वात् । १ । १ । ३ ॥

एवं चिदचिद्वस्तुशरीरतया तद्विशिष्टस्य ब्रह्मण एव जगदुपादानत्वं निमित्तत्वञ्च नानुमानगम्यमिति[८]शास्त्रैकप्रमाणकत्वात्तस्य। *"यतो वा इमानि भूतानि" इत्यादिवाक्यम्, निखिलजगदेककारणं[९]ब्रह्मैव बोधयत्येवेति सिद्धम्॥

इति वेदान्तसारे शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

---

( वेदान्तदीपे शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥ )

---

# शास्त्रयोनित्वात् । १ । १ । ३ ॥

*"यतो वा इमानि" इत्यादिवाक्यमेव विषयः। तत्किं जगत्कारणे ब्रह्मणि प्रमाणम्? उत नेति संशयः। नैतत्प्रमाणमिति पूर्वः पक्षः। अनुमानसिद्धब्रह्मविषयत्वात्। प्रमाणान्तराविषये हि शास्त्रं प्रमाणम्। जगतस्सावयवत्वेन कार्यत्वात्, कार्यस्य स्वोपादानोपकरणसम्प्रदानप्रयोजनाद्यभिज्ञकर्तृकत्वात्, जगन्निर्माणकार्यचतुरः कर्मपरवशपरिमितशक्त्यादिक्षेत्रज्ञविलक्षणस्सर्वज्ञस्स-

---

१. निमित्तोपादानैक्यं. पा ॥
२. त्वमनु. पा ॥
३. तदविरुद्ध.पा॥ ४.शारी. १-अ.४-पा.२३॥
५.शारी.२-अ.३-पा.१॥ *६.तै.भृगु.१-अनु॥
७. इत्यादिवाक्यं.पा॥ ८. शास्त्रैकवेद्यम्.पा॥
९. ब्रह्म अवगमयत्येवेति. पा ॥

र्वशक्तस्सर्वेश्वरोऽनुमानसिद्धइति तस्मिन् [१]"यतो वा इमानि भूतानि" इत्यादिवाक्यं न प्रमाणमिति ॥

राद्धान्तस्तु—जगतः कार्यत्वेऽपि एकदैवैकेनैव कृत्स्नं जगन्निर्मितमित्यत्र प्रमाणाभावात्, क्षेत्रज्ञानामेव विलक्षणपुण्यानां ज्ञानशक्तिवैचित्र्यसम्भावनया कदाचित् कस्यचिज्जगदेकदेशनिर्माणसामर्थ्यसम्भवात्, तदतिरिक्तपुरुषानुमानं न सम्भवतीति शास्त्रैकप्रमाणकत्वात् ब्रह्मणस्तत्प्रतिपादकत्वेन तस्मिन् *"यतो वा इमानि भूतानि" इत्यादिवाक्यं प्रमाणमिति । [२]शास्त्रं योनिः [३]यस्य कारणं प्रमाणं तद्ब्रह्म शास्त्रयोनि, प्रमाणान्तराविषयत्वेन शास्त्रैकप्रमाणकत्वाद्ब्रह्मणः । तस्मिन् *"यतो वा इमानि" इत्यादिवाक्यं [४]प्रमाणमिति सूत्रार्थः ॥

इति वेदान्तदीपे शास्त्रयोनित्वाधिकरणम् ॥ ३ ॥

---

( श्रीशारीरकमीमांसाभाष्ये समन्वयाधिकरणम् ॥ ४ ॥ )

---

यद्यपि प्रमाणान्तरागोचरं ब्रह्म । तथापि प्रवृत्तिनिवृत्तिपरत्वाभावेन सिद्धरूपं ब्रह्म न शास्त्रं प्रतिपादयतीत्याशङ्क्याह—

## तत्तु समन्वयात् । १ । १ । ४ ॥

प्रसक्ताशङ्कानिवृत्त्यर्थस्तु शब्दः। तत्—शास्त्रप्रमाणकत्वं ब्रह्मणस्सम्भवत्येव । कुतः ? समन्वयात्—परमपुरुषार्थतयाऽन्वयस्समन्वयः ; परम[५]पुरुषार्थभूतस्यैव ब्रह्मणोऽभिधेयतयाऽन्वयात् ॥

[६]एवमिव समन्वितो ह्यौपनिषदः पदसमुदायः—*"यतो वा इमानि भूतानि जायन्ते" [७]"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तदैक्षत

*१. तै. भृ. १-अनु॥
२. सूत्रार्थः—शास्त्र. पा॥
३. कारणं यस्य. पा॥ ४. प्रमाणमिति. पा॥
५. पुरुषार्थस्यैव. पा ॥
६. एवमेव. पा ॥
७. छा. ६-प्र. २-ख. १; ३॥

बहु स्यां प्रजायेयेति तत्तेजो सृजत" [१]"ब्रह्म वा इदमेकमेवाग्र आसीत्" [२]"आत्मा वा इदमेक एवाग्र आसीत्" [३]"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" [४]"एको ह वै नारायण आसीत्" [५]"सत्यं ज्ञानमनन्तं ब्रह्म" [६]"आनन्दो ब्रह्म" इत्येवमादिः ॥

न च व्युत्पत्तिसिद्धपरिनिष्पन्नवस्तुप्रतिपादनसमर्थानां पदसमुदायानामखिलजगदुत्पत्तिस्थितिविनाशहेतुभूताशेषदोषप्रत्यनीकापरिमितोदारगुणसागरानवधिकातिशयानन्दस्वरूपे ब्रह्मणि समन्वितानां प्रवृत्तिनिवृत्तिरूपप्रयोजनविरहादन्यपरत्वम्, स्वविषयावबोधपर्यवसायित्वात्सर्वप्रमाणानाम् । नच प्रयोजनानुगुणा प्रमाणप्रवृत्तिः । प्रयोजनं हि प्रमाणानुगुणम् । न च प्रवृत्तिनिवृत्त्यन्वयविरहिणः प्रयोजनशून्यत्वम्, पुरुषार्थान्वयप्रतीतेः । तथा स्वरूपपरेष्वपि 'पुत्रस्ते जातः, नायं सर्पः' इत्यादिषु हर्षभयनिवृत्तिरूपप्रयोजनवत्त्वं दृष्टम् ॥

अत्राह—न वेदान्तवाक्यानि ब्रह्म प्रतिपादयन्ति प्रवृत्तिनिवृत्त्यन्वयविरहिणः शास्त्रस्यानर्थक्यात्।यद्यपि प्रत्यक्षादीनि वस्तुयाथात्म्यावबोधे पर्यवस्यन्ति ; तथाऽपि शास्त्रं प्रयोजनपर्यवसाय्येव । न हि लोकवेदयोः प्रयोजनरहितस्य कस्यचिदपि वाक्यस्य प्रयोग उपलब्धचरः । न च किञ्चित् प्रयोजनमनुद्दिश्य वाक्यप्रयोगः श्रवणं वा सम्भवति । तच्च प्रयोजनं प्रवृत्तिनिवृत्तिसाध्येष्टानिष्टप्राप्तिपरिहारात्मकमुपलब्धम्— 'अर्थार्थी राजकुलं गच्छेत्' 'मन्दाग्निर्नाम्बु पिबेत्' [७]'स्वर्गकामो यजेत' 'न कलञ्जं भक्षयेत्' [८]इत्येवमादिषु । यत्पुनस्सिद्धवस्तुपरेष्वपि 'पुत्रस्ते जातः, नायं सर्पो रज्जुरेषा' इत्यादिषु हर्षभयनिवृत्तिरूपपुरुषार्थान्वयो

१. बृ. ३-अ. २-ब्रा. ११॥
२. ऐतरेय. १-अ. १-ख. १॥
३. तै-आन. १. अनु॥
४. महोपनिषत्. १-अ. १. वा॥
५. तै-आन. १-अनु॥ ६. तै-भृ. ६-अनु॥
७. यजुषि. २. कां. ५. प्रश्न. ५-अनु॥
८. इत्यादिषु. पा ॥

दृष्ट इत्युक्तम् । तत्र किं पुत्रजन्माद्यर्थात्पुरुषार्थावाप्तिः ? । उत तज्ज्ञानादिति विवेचनीयम् । [1]सतोऽप्यज्ञातस्यार्थस्यापुरुषार्थत्वेन तज्ज्ञानादिति चेत्—तर्ह्यसत्यप्यर्थे ज्ञानादेव पुरुषार्थस्सिध्यतीत्यर्थपरत्वाभावेन प्रयोजनपर्यवसायिनोऽपि शास्त्रस्य नार्थसद्भावे प्रामाण्यम् । तस्मात्सर्वत्र प्रवृत्तिनिवृत्तिपरत्वेन ज्ञानपरत्वेन वा प्रयोजनपर्यवसानमिति कस्यापि वाक्यस्य परिनिष्पन्ने वस्तुनि तात्पर्यासम्भवान्न वेदान्ताः परिनिष्पन्नं ब्रह्म प्रतिपादयन्ति ॥

अत्र कश्चिदाह—वेदान्तवाक्यान्यपि कार्यपरतयैव ब्रह्मणि प्रमाणभावमनुभवन्ति—कथं निष्प्रपञ्चमद्वितीयं ज्ञानैकरसं ब्रह्म अनाद्यविद्यया सप्रपञ्चतया प्रतीयमानं निष्प्रपञ्चं कुर्यादिति ब्रह्मणः प्रपञ्चप्रविलयद्वारेण विधिविषयत्वम्—इति।कोऽसौ द्रष्टृदृश्यरूपप्रपञ्च[2]प्रविलयद्वारेण साध्यज्ञानैकरसब्रह्मविषयो विधिः?। [3]"न दृष्टेर्द्रष्टारं पश्येः। न मतेर्मन्तारं मन्वीथाः" [4]इत्यादिः। द्रष्टृदृश्यरूपभेदशून्यं दृशिमात्रं ब्रह्म कुर्यादित्यर्थः। स्वतस्सिद्धस्यापि ब्रह्मणो निष्प्रपञ्चतारूपेण [5]कार्यत्वमविरुद्धम्—इति ॥

तदयुक्तम्—नियोगवाक्यार्थवादिना हि नियोगः, नियोज्यविशेषणम्, विषयः, करणम्, इतिकर्तव्यता, प्रयोक्ता च वक्तव्याः। तत्र हि नियोज्यविशेषणमनुपादेयम् । तच्च निमित्तं फलमिति द्विधा । अत्र किं नियोज्यविशेषणम्?, तच्च किं निमित्तं फलं वेति विवेचनीयम् । ब्रह्मस्वरूपयाथात्म्यानुभवश्चेन्नियोज्यविशेषणम् ; तर्हि न तन्निमित्तम्, जीवनादिवत्तस्यासिद्धत्वात्। निमित्तत्वे च तस्य नित्यत्वेनापवर्गोत्तरकालमपि जीवननिमित्ताग्निहोत्रादिवत् नित्यतद्विषयानुष्ठानप्रसङ्गः । नापि फलं, नैयोगिकफलत्वेन स्वर्गादिवदनित्यत्वप्रसङ्गात् ॥

---

१. सतोऽप्यर्थस्याज्ञातस्य. पा॥
२. प्रपञ्चविलय. पा॥
३. बृ. ५-अ. ४-ब्रा. २-वा॥
४. इत्येवमादिः पा॥ ५. साध्यत्वमवि. पा॥

कश्चात्र नियोगविषयः?। ब्रह्मैवेति चेत्—न, तस्य [१]नित्यत्वेनाभव्यरूपत्वात्, अभावार्थत्वाच्च। निष्प्रपञ्चं [२]ब्रह्म साध्यमिति चेत्—साध्यत्वेऽपि फलत्वमेव। अभावार्थत्वान्न विधिविषयत्वम्। साध्यत्वञ्च कस्य?। किं ब्रह्मणः?, उत प्रपञ्चनिवृत्तेः। न तावद्ब्रह्मणः, सिद्धत्वात्; अनित्यत्वप्रसक्तेश्च। अथ प्रपञ्चनिवृत्तेः। न तर्हि ब्रह्मणस्साध्यत्वम्। प्रपञ्चनिवृत्तिरेव विधिविषय इति चेत्—न,तस्याः फलत्वेन विधिविषयत्वायोगात्। प्रपञ्चनिवृत्तिरेव हि मोक्षः। स च फलम्। अस्य च नियोगविषयत्वे नियोगात्प्रपञ्चनिवृत्तिः,प्रपञ्चनिवृत्त्या नियोगः—इतीतरेतराश्रयत्वम्॥

अपि च—किं निवर्तनीयः प्रपञ्चः मिथ्यारूपः सत्यो वा। मिथ्यारूपत्वे ज्ञाननिवर्त्यत्वादेव नियोगेन न किंचित्प्रयोजनम्। नियोगस्तु निवर्तकज्ञानमुत्पाद्य तद्द्वारेण प्रपञ्चस्य निवर्तक इति चेत्—तत्स्ववाक्यादेव जातमिति नियोगेन न प्रयोजनम्। वाक्यार्थज्ञानादेव ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य मिथ्याभूतस्य प्रपञ्चस्य बाधितत्वात् सपरिकरस्य नियोगस्यासिद्धिश्च। प्रपञ्चस्य निवर्त्यत्वे प्रपञ्चनिवर्तको नियोगः किं ब्रह्मस्वरूपमेव, उत तद्व्यतिरिक्तः। यदि ब्रह्मस्वरूपमेव [३]निवर्तकस्य नित्यतया निवर्त्यप्रपञ्चसद्भाव एव न सम्भवति। नित्यत्वेन नियोगस्य विषयानुष्ठानसाध्यत्वं च न घटते। अथ ब्रह्मस्वरूपव्यतिरिक्तः। तस्य कृत्स्नप्रपञ्चनिवृत्तिरूपविषयानुष्ठानसाध्यत्वेन प्रयोक्ता च नष्ट इत्याश्रयाभावादसिद्धिः। प्रपञ्चनिवृत्तिरूपविषयानुष्ठानेनैव ब्रह्मस्वरूपव्यतिरिक्तस्य कृत्स्नस्य निवृत्तत्वात् न नियोगनिष्पाद्यं मोक्षाख्यं फलम्। किंच—प्रपञ्चनिवृत्तेर्नियोगकरणस्य इतिकर्तव्यताऽभावात्, अनुपकृतस्य च करणत्वायोगान्न करणत्वम्। कथम् इतिकर्तव्यताऽभाव इति चेत्—इत्थम्—अस्येतिकर्तव्यता भावरूपा? अभावरूपा? वा। भावरूपा च

१. नित्यत्वेनाभाव्यरूप. पा॥ २. ब्रह्मैव. पा॥ ३. निवर्तकं. पा॥

करणशरीरनिष्पत्तितदनुग्रहकार्यभेदभिन्ना। उभयविधा च न सम्भवति। नहि मुद्गराभिघातादिवत् कृत्स्नस्य प्रपञ्चस्य निवर्तकः कोऽपि दृश्यत इति दृष्टार्था न सम्भवति। नापि निष्पन्नस्य करणस्य कार्योत्पत्तावनुग्रहस्सम्भवति, अनुग्राहकांशसद्भावेन कृत्स्नप्रपञ्चनिवृत्तिरूपकरणस्वरूपासिद्धेः। ब्रह्मणोऽद्वितीयत्वज्ञानं प्रपञ्चनिवृत्तिरूपकरणशरीरं निष्पादयतीति चेत्—तेनैव प्रपञ्चनिवृत्तिरूपो मोक्षस्सिद्ध इति न करणादिनिष्पाद्यम् अवशिष्यत इति पूर्वमेवोक्तम्। अभावरूपत्वे [1]चाभावादेव न करणशरीरं निष्पादयति। नाप्यनुग्राहकः। अतो निष्प्रपञ्चब्रह्मविषयो विधिर्न संभवति॥

अन्योऽप्याह—यद्यपि वेदान्तवाक्यानां न परिनिष्पन्नब्रह्मस्वरूपपरतया प्रामाण्यम्। तथाऽपि ब्रह्मस्वरूपं सिध्यत्येव। कुतः? ध्यानविधिसामर्थ्यात्। एवमेव हि समामनन्ति—[2]"आत्मा वा अरे द्रष्टव्यः...निदिध्यासितव्यः"[3]"य आत्मा अपहतपाप्मा...सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः"[4]"आत्मेत्येवोपासीत" *"आत्मानमेव लोकमुपासीत" इति। अत्र ध्यानविषयो हि नियोगस्स्वविषयभूतध्यानं ध्येयैकनिरूपणीयम्—इति ध्येयमाक्षिपति। स च ध्येयस्स्ववाक्यनिर्दिष्ट आत्मा। स किंरूप इत्यपेक्षायां तत्स्वरूपविशेषसमर्पणद्वारेण [5]"सत्यं ज्ञानमनन्तं ब्रह्म" [6]"सदेव सोम्येदमग्र आसीत्" इत्येवमादीनां वाक्यानां ध्यानविधिशेषतया प्रामाण्यम्—इति विधिविषयभूतध्यानशरीरानुप्रविष्टब्रह्मस्वरूपेऽपि तात्पर्यमस्त्येव। अतः *"एकमेवाद्वितीयम्" [7]"तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" [8]"नेह नानाऽस्ति किंचन" इत्यादिभिर्ब्रह्मस्वरूपमेकमेव सत्यं तद्व्यतिरिक्तं सर्वं मिथ्येत्यवगम्यते। प्रत्यक्षादिभिर्भेदावलम्बिना च

१. अभावत्वादेव. पा॥ २. बृ. ४-अ. ४-ब्रा ५॥
३. छा. ८-प्र. ७. ख. १॥
*४. बृ. ३. अ. ४-ब्रा. ७. १५॥
५. तै. आन. १-अनु॥
*६. छा. ६-प्र. २-ख. १॥
७. छा. ६-प्र. ८-ख. ७॥
८. कठ, ४-वल्ली. ११॥

कर्मशास्त्रेण भेदः प्रतीयते। भेदाभेदयोः परस्परविरोधे सत्यनाद्यविद्यामूलत्वेनापि भेदप्रतीत्युपपत्तेरभेद एव परमार्थ इति निश्चीयते। तत्र ब्रह्मध्याननियोगेन तत्साक्षात्कारफलेन निरस्तसमस्ताविद्याकृतविविधभेदाद्वितीयज्ञानैकरसब्रह्मरूपमोक्षः प्राप्यते ॥

न च वाक्याद्वाक्यार्थज्ञानमात्रेण ब्रह्मभावसिद्धिः, अनुपलब्धेः, विविधभेददर्शनानुवृत्तेश्च। तथा च सति श्रवणादिविधानमनर्थकं स्यात्॥

अथोच्येत-'रज्जुरेषा न सर्पः' इत्युपदेशेन सर्पभयनिवृत्तिदर्शनात् रज्जुसर्पवत् बन्धस्य च मिथ्यारूपत्वेन ज्ञानबाध्यतया तस्य वाक्यजन्यज्ञानेनैव निवृत्तिर्युक्ता ; न नियोगेन। नियोगसाध्यत्वे मोक्षस्यानित्यत्वं स्यात्, स्वर्गादिवत्। मोक्षस्य नित्यत्वं हि सर्ववादिसम्प्रतिपन्नम्। किञ्च धर्माधर्मयोः फलहेतुत्वं स्वफलानुभवानुगुणशरीरोत्पादनद्वारेणेति ब्रह्मादिस्थावरान्तचतुर्विधशरीरसम्बन्धरूपसंसारफलत्वमवर्जनीयम्। तस्मान्न धर्मसाध्यो मोक्षः।तथा च श्रुतिः—[1]"न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतः"इति।अशरीरत्वरूपे मोक्षे धर्माधर्मसाध्यप्रियाप्रियविरहश्रवणात्, न धर्मसाध्यमशरीरत्वमिति विज्ञायते। न च नियोगविशेषसाध्यफलविशेषवत् ध्याननियोगसाध्यमशरीरत्वम्, अशरीरत्वस्य स्वरूपत्वेनासाध्यत्वात्। यथाऽऽहुः श्रुतयः—[2]"अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति"[3]"अप्राणो ह्यमनाश्शुभ्रः"[4]"असङ्गो ह्ययं पुरुषः" इत्याद्याः। अतोऽशरीरत्वरूपो मोक्षो नित्य इति न धर्मसाध्यः। तथा च श्रुतिः—*"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताद्भव्याच्च यत्तत्पश्यसि तद्वद" इति ॥

१. छा. ८-प्र. १२-ख. १॥
*२. कठ. २-वल्ली. २२. १४॥
३. मुण्ड. २-मु. १-ख. २ ॥
४. बृ. ६-अ. ३-ब्रा. १५॥

अपिच—उत्पत्तिप्राप्तिविकृतिसंस्कृतिरूपेण चतुर्विधं हि साध्य-
वं मोक्षस्य न संभवति । न तावदुत्पाद्यः, मोक्षस्य ब्रह्मस्वरूपत्वेन
नित्यत्वात् । नापि प्राप्यः, आत्मस्वरूपत्वेन ब्रह्मणो नित्यप्राप्तत्वात् ।
नापि विकार्यः,दध्यादिवदनित्यत्वप्रसङ्गादेव । नापि संस्कार्यः; संस्कारो
हि [1]दोषापनयनेन वा गुणाधानेन वा साधयति । न तावद्दोषापनयनेन,
नित्यशुद्धत्वाद्ब्रह्मणः । नाप्यतिशयाधानेन, अनाधेयातिशयस्वरूपत्वात् ।
नित्यनिर्विकारत्वेन स्वाश्रयायाः पराश्रयायाश्च क्रियाया अविषयतया
न निर्घर्षणेनाऽदर्शादिवदपि संस्कार्यत्वम् ।न च देहस्थया स्नानादिक्रियया
आत्मा संस्क्रियते ; किं त्वविद्यागृहीतस्तत्सङ्गतोऽहङ्कर्ता । तत्फला-
नुभवोऽपि तस्यैव । न चाहङ्कर्तैवाऽत्मा, तत्साक्षित्वात् । तथा च मन्त्रव-
र्णः—[2]"तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति" इति;
[3]"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" [4]"एको देवस्सर्वभूतेषु गूढ-
स्सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षस्सर्वभूताधिवासस्साक्षी चेता
केवलो निर्गुणश्च" [5]"सपर्यगाच्छुक्रमकामयव्रण[6]मस्नाविरं शुद्धमपाप-
विद्धम्" इति च । अविद्यागृहीतादहङ्कर्तुरात्मस्वरूपमनाधेयातिशयं नि-
त्यशुद्धं निर्विकारं निष्कृष्यते । तस्मादात्मस्वरूपत्वेन न साध्यो मोक्षः ॥

यद्येवं किं वाक्यार्थज्ञानेन क्रियत इति चेत्—मोक्षप्रतिबन्धनिवृ-
त्तिमात्रमिति ब्रूमः ।तथा च श्रुतयः –[7]"त्वं हि नः पिता योऽस्माकमवि-
द्यायाः परं पारं तारयसि"इति,[8]"श्रुतं ह्येवमेव भगवद्दृशेभ्यस्तरति शोक-
मात्मविदिति सोऽहं भगवश्शोचामि तं मा भगवान् शोकस्य पारं तारय-
तु"[9]"तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान् सनत्कुमारः"
इत्याद्याः । तस्मान्नित्यस्यैव मोक्षस्य प्रतिबन्धनिवृत्तिर्वाक्यार्थज्ञानेन क्रि-

१.दोषापनयनेन गुणाधानेन वा.पा॥ २.मुण्ड.
-मु. १-ख. १॥ ३. कठ. ३. वल्ली. ४॥
४. श्वे, ६-अ. ११॥ ५. ईशा. ८॥
६.अस्थाविरं. पा॥ ७. प्रश्न. ६-प्रश्न ८॥
८. छा. ७-प्र. १-ख ३॥
९. छा. ७-प्र. २६. ख. २॥

यते। निवृत्तिस्तु साध्याऽपि प्रध्वंसाभावरूपा न विनश्यति। [1]"ब्रह्म वेद ब्रह्मैव भवति" [2]"तमेव विदित्वाऽतिमृत्युमेति"इत्यादिवचनं मोक्षस्य वेदनानन्तरभावितां प्रतिपादयन्नियोगव्यवधानं प्रतिरुणद्धि। नच विदिक्रिया[3]कर्मत्वेन वा ध्यानक्रियाकर्मत्वेन वा कार्यानुप्रवेशः,[4]उभयविधकर्मत्वप्रतिषेधात्। [5]"अन्यदेव तद्विदितादथो [6]अविदितादपि" [7]"येनेदं सर्वं विजानाति तत्केन विजानीयात्" इति। "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति च॥

न चैतावता शास्त्रस्य निर्विषयत्वम्, अविद्याकल्पितभेदनिवृत्तिपरत्वाच्छास्त्रस्य। न हीदन्तया ब्रह्म विषयीकरोति शास्त्रम्; अपि तु अविषयं प्रत्यगात्मस्वरूपं प्रतिपादयदविद्याकल्पितज्ञानज्ञातृज्ञेय[8]विभागं निवर्तयति। तथा च शास्त्रं—[9]"न दृष्टेर्द्रष्टारं पश्येः" इत्येवमादि। नच ज्ञानादेव बन्धनिवृत्तिरिति श्रवणादिविध्यानर्थक्यम्, स्वभावप्रवृत्तसकलेतरविकल्पविमुखीकरणद्वारेण वाक्यार्थावगतिहेतुत्वात्तेषाम्। न च ज्ञानमात्रात् बन्धनिवृत्तिर्न दृष्टेति वाच्यम्, बन्धस्य मिथ्यारूपत्वेन ज्ञानोत्तरकालं स्थित्यनुपपत्तेः। अत एव न शरीरपातादूर्ध्वमेव बन्धनिवृत्तिरिति वक्तुं युक्तम्। नहि मिथ्यारूपसर्पभयनिवृत्तिः रज्जुयाथात्म्यज्ञानातिरेकेण सर्पविनाशमपेक्षते। यदि शरीरसम्बन्धः पारमार्थिकः, तदा हि तद्विनाशापेक्षा। स तु ब्रह्मव्यतिरिक्ततया न पारमार्थिकः। यस्य तु बन्धो न निवृत्तः; तस्य ज्ञानमेव न [10]जातमित्यवगम्यते, ज्ञानकार्यादर्शनात्। तस्मात् शरीरस्थितिर्भवतु वा मा वा; वाक्यार्थज्ञानसमनन्तरं मुक्त एवासौ। अतो न ध्याननियोगसाध्यो मोक्ष इति न

---

१. मुण्ड. ३-मु. २-ख. ९॥
२. श्वे. ३-अ. ८॥
३. कर्मत्वेन ध्यानक्रियाकर्मत्वेन वा, पा॥
४. उभयकर्मत्वप्रति. पा॥
५. केन. १-ख. ३॥
६. अविदितादधि पा॥
७. बृ. ४-अ. ४. ब्रा. १४॥ ८. भेदं पा॥
९. बृ. ५-अ. ४. ब्रा. २॥ १०. ज्ञात. पा॥

ध्यानविधिशेषतया ब्रह्मणस्सिद्धिः। अपि तु [1]"सत्यं ज्ञानमनन्तं ब्रह्म" [2]"तत्त्वमसि" [3]"अयमात्मा ब्रह्म" इति तत्परेणैव पदसमुदायेन सिध्यतीति ॥

तदयुक्तं, वाक्यार्थज्ञानमात्राद्बन्धनिवृत्त्यनुपपत्तेः। यद्यपि मिथ्यारूपो बन्धो ज्ञानबाध्यः ; तथाऽपि बन्धस्यापरोक्षत्वात् न परोक्षरूपेण वाक्यार्थज्ञानेन स बाध्यते, रज्ज्वादावपरोक्षसर्पप्रतीतौ वर्तमानायां 'नायं सर्पो रज्जुरेषा' इत्याप्तोपदेशजनितपरोक्षसर्पविपरीतज्ञानमात्रेण भयानिवृत्तिदर्शनात् । आप्तोपदेशस्य तु भयनिवृत्तिहेतुत्वं वस्तुयाथात्म्यापरोक्षनिमित्तप्रवृत्तिहेतुत्वेन। तथा हि—रज्जुसर्पदर्शनभयात् परावृत्तः पुरुषो 'नायं सर्पो रज्जुरेषा' इत्याप्तोपदेशेन तद्वस्तुयाथात्म्यदर्शने प्रवृत्तस्तदेव प्रत्यक्षेण दृष्ट्वा भयान्निवर्तते। न च शब्द एव प्रत्यक्षज्ञानं जनयतीति वक्तुं युक्तम्, तस्यानिन्द्रियत्वात्। ज्ञानसामग्रीष्विन्द्रियाण्येव ह्यपरोक्षसाधनानि। न चास्यानभिसंहितफलकर्मानुष्ठानमृदितकषायस्य श्रवणमननिदिध्यासनविमुखीकृतबाह्यविषयस्य पुरुषस्य वाक्यमेवापरोक्षज्ञानं जनयति, निवृत्तप्रतिबन्धे तत्परेऽपि पुरुषे ज्ञानसामग्रीविशेषाणामिन्द्रियादीनां [4]स्वविषयनियमातिक्रमादर्शनेन तदयोगात् ॥

न च ध्यानस्य वाक्यार्थज्ञानोपायता, इतरेतराश्रयत्वात् ; वाक्यार्थज्ञाने जाते तद्विषयध्यानम्, ध्याने निर्वृत्ते वाक्यार्थज्ञानम्—इति। न च ध्यानवाक्यार्थज्ञानयोर्भिन्नविषयत्वम्, तथा सति ध्यानस्य वाक्यार्थज्ञानोपायता न स्यात्। न ह्यन्यध्यानमन्यौन्मुख्यमुत्पादयति। ज्ञातार्थस्मृतिसन्ततिरूपस्य ध्यानस्य वाक्यार्थज्ञानपूर्वकत्वमवर्जनीयम्, ध्येयब्रह्मविषयज्ञानस्य हेत्वन्तरासंभवात्। न च ध्यानमूलं ज्ञानं वाक्यान्तरजन्यम्, निवर्तकज्ञानं तत्त्वमस्यादिवाक्यजन्यमिति युक्तम्। ध्यानमू-

---

१. तै. आन. १-अनु॥
२. छा. ६-प्र. ८-ख. ७॥
३. माण्डूक्य १-ख. २॥
४. स्वस्वविषय. पा॥

ण्डेन सर्वं मृण्मयं विज्ञातम्" इति दृष्टान्तोऽपि न घटते। मृत्पिण्डविज्ञानेन हि तद्विकारस्य ज्ञातता निदर्शिता। तत्रापि विकारस्यासत्यताऽभिप्रेतेति चेत्—मृद्विकारस्य रज्जुसर्पादिवदसत्यत्वं शुश्रूषोरसिद्धमिति प्रतिज्ञातार्थसम्भावनाप्रदर्शनाय[1]"यथा सोम्य" इति प्रसिद्धवदुपन्यासो न युज्यते। न च तत्त्वमस्यादिवाक्यजन्यज्ञानोत्पत्तेः प्राग्विकारजातस्यासत्यतामापादयत्तर्कानुगृहीतमननुगृहीतं वा प्रमाणमुपलभामह इति। अयमर्थः [2]"तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यत्र वक्ष्यते। तथा [3]"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" [4]"तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत" [5]"हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" [6]"सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः...ऐतदात्म्यमिदं सर्वम्" इत्यादिनाऽस्य जगतस्सदात्मकता, सृष्टेः पूर्वकाले नामरूपविभागप्रहाणम्, जगदुत्पत्तौ सच्छब्दवाच्यस्य ब्रह्मणस्स्वव्यतिरिक्तनिमित्तान्तरानपेक्षत्वम्, सृष्टिकालेऽहमेवानन्तस्थिरत्रसरूपेण 'बहुस्याम्' इत्यनन्यसाधारणसङ्कल्पविशेषः, यथासङ्कल्पमनन्तविचित्रतत्त्वानां विलक्षणक्रमविशेषविशिष्टा सृष्टिः समस्तेष्वचेतनेषु वस्तुषु स्वात्मकजीवानु[7]प्रवेशेनैवानन्तनामरूपव्याकरणम्, स्वव्यतिरिक्तस्य समस्तस्य स्वमूलत्वम्, स्वायतनत्वम्, स्वप्रवर्त्यत्वम्, स्वेनैव जीवनम्, स्वप्रतिष्ठत्वमित्याद्यनन्तविशेषाश्शास्त्रैकसमधिगम्याः प्रतिपादिताः। तत्सम्बन्धितया प्रकरणान्तरेष्वप्यपहतपाप्मत्वादिनिरस्तनिखिलदोषतासर्वज्ञतासर्वेश्वरत्वसत्यकामत्वसत्यसङ्कल्पत्वसर्वानन्दकरणनिरतिशयानन्दयोगादयस्सकलेतरप्रमाणाविषयास्सहस्रशः प्रतिपादिताः।

---

१. छा. ६. १.
२. शारी. २. १. १५.
३. छा. ६. २. १.
४. छा. ६. २. ३.
५. छा. ६. ३. २.
६. छा. ६. ८. ६.
७. प्रवेशेनानन्त. पा.

वमनन्यगोचरानन्तविशेषविशिष्टप्रकृतब्रह्मपरामर्शितच्छब्दस्य निर्विशेषवस्तुमात्रोपदेशपरत्वमसङ्गतत्वेनोन्मत्त[1]प्रलपितायेत। त्वंपदं च संसारित्वविशिष्टजीववाचि। तस्यापि निर्विशेषस्वरूपोपस्थापनपरत्वे स्वाः परित्यक्तस्स्यात्। निर्विशेषप्रकाशस्वरूपस्य च वस्तुनो ह्यविद्यया रोधानं स्वरूपनाशप्रसङ्गादिभिर्न सम्भवतीति पूर्वमेवोक्तम्। एवं च ति समानाधिकरणवृत्तयोस्तत्त्वमिति द्वयोरपि पदयोर्मुख्यार्थपरित्यान लक्षणा च समाश्रयणीया॥

अथोच्येत—समानाधिकरणवृत्तानामेकार्थप्रतिपादनपरतया विषणांशे तात्पर्यासम्भवादेव विशेषणनिवृत्तेर्वस्तुमात्रैकत्वप्रतिपादनान्न क्षणाप्रसङ्गः। यथा 'नीलमुत्पलम्' इति पदद्वयस्य विशेष्यैकत्वप्रतिपादनत्वेन नीलत्वोत्पलत्वरूपविशेषणद्वयं न विवक्ष्यते। तद्विवक्षायां हि लत्वविशिष्टाकारेणोत्पलत्वविशिष्टाकारस्यैकत्वप्रतिपादनं प्रसज्येत। तु न सम्भवति—न हि नैल्यविशिष्टाकारेण तद्वस्तूत्पलपदेन विशेष्यते, ातिगुणयोरन्योन्यसमवायप्रसङ्गात्। अतो नीलत्वोत्पलत्वोपलक्षितववैकत्वमात्रं सामानाधिकरण्येन प्रतिपाद्यते। तथा 'सोऽयं देवदत्तः' यतीतकालविप्रकृष्टदेशविशिष्टस्य तेनैव रूपेण सन्निहितदेशवर्तमानलविशिष्टतया प्रतिपादनानुपपत्तेरुभयदेशकालोपलक्षितस्वरूपमात्रैक्यं मानाधिकरण्येन प्रतिपाद्यते। यद्यपि नीलमित्याद्येकपदश्रवणे, प्रतीमानं विशेषणं सामानाधिकरण्यवेलायां विरोधान्न प्रतिपाद्यते। तथाऽ वाच्येऽर्थे प्रधानांशस्य प्रतिपादनान्न लक्षणा। अपि तु विशेषणांशाविवक्षामात्रम्। सर्वत्र [2]सामानाधिकरण्यस्यैष एव स्वभाव इति न श्चिद्दोष—इति॥

तदिदमसारं—सर्वेष्वेव वाक्येषु पदानां व्युत्पत्तिसिद्धार्थसंसर्गशेषमात्रं प्रत्याय्यम्। तत्र समानाधिकरणवृत्तानामपि नीलादिपदानां

---

१. प्रलपितायते. पा. | २. सामानाधिकरण्यस्यैष स्वभाव इति. पा.

नैल्यादिविशिष्ट एवार्थो व्युत्पत्तिसिद्धः पदान्तरार्थसंसृष्टोऽभिधीयते । यथा 'नीलमुत्पलमानय' इत्युक्ते नीलिमादिविशिष्टमेवानीयते ; यथा च 'विन्ध्याटव्यां मदमुदितो मातङ्गगणस्तिष्ठति' इति पदद्वयावगतविशेषणविशिष्ट एवार्थः प्रतीयते ; एवं वेदान्तवाक्येष्वपि समानाधिकरणनिर्देशेषु तत्तद्विशेषणविशिष्टमेव ब्रह्म प्रतिपत्तव्यम् । न च विशेषणविवक्षायामितरविशिष्टाकारं वस्त्वन्येन विशेष्टव्यम् ; अपि तु सर्वैर्विशेषणैस्स्वरूपमेव विशेष्यम्। तथाहि [१]"भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यम्" इति;अन्वयेन निवृत्त्या वा पदान्तरप्रतिपाद्यादाकारादाकारान्तरयुक्ततया तस्यैव वस्तुनः पदान्तरप्रतिपाद्यत्वं सामानाधिकरण्यकार्यम् । यथा 'देवदत्तश्श्यामो युवा लोहिताक्षोऽदीनोऽकृपणोऽनवद्यः' इति । यत्र त्वेकस्मिन् वस्तुनि समन्वयायोग्यं विशेषणद्वयं समानाधिकरणपदनिर्दिष्टम् ; तत्राप्यन्यतरत्पदममुख्यवृत्तमाश्रीयते ; न द्वयम् । यथा 'गौर्वाहीकः' इति। नीलोत्पलादिषु तु विशेषणद्वयान्वयाविरोधादेकमेवोभयविशिष्टं प्रतिपाद्यते ॥

अथ मनुषे—एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाणं विशेषणान्तरप्रतिसम्बन्धित्वाद्विलक्षणम्—इति घटपटयोरिवैकविभक्तिनिर्देशेऽप्यैक्यप्रतिपादनासम्भवात्समानाधिकरणशब्दस्य न विशिष्टप्रतिपादनपरत्वम्,अपि तु विशेषणमुखेन स्वरूपमुपस्थाप्य तदैक्यप्रतिपादनपरत्वमेव—इति ॥

स्यादेतदेवम् ; यदि विशेषणद्वयप्रतिसम्बन्धित्वमात्रमेवैक्यं निरुन्ध्यात् । नचैतदस्ति ; एकस्मिन्धर्मिण्युपसंहर्तुमयोग्यधर्मद्वयविशिष्टत्वमेव ह्येकत्वं निरुणद्धि । अयोग्यता च प्रमाणान्तरसिद्धा घटत्वपटत्वयोः। 'नीलमुत्पलम्'इत्यादिषु तु दण्डित्वकुण्डलित्ववद्रूपवत्त्वरसवत्त्वगन्धवत्त्वा-

---

१. कैयटे, वृद्ध्याह्निके.

यच्च विरोधो नोपलभ्यते। न केवलमविरोध एव ; प्रवृत्तिनिमित्तभे-
कार्थनिष्ठत्वरूपं सामानाधिकरण्यमुपपादयत्येव धर्मद्वयविशिष्टताम्।
न्यथा स्वरूपमात्रैक्ये अनेकपदप्रवृत्तौ निमित्ताभावात्सामानाधिकरण्य-
न स्यात्। विशेषणानां स्वसम्बन्धानादरेण वस्तुस्वरूपोपलक्षण[१]परत्वे
थैकेनैव वस्तूपलक्षितमित्युपलक्षणान्तरमनर्थकमेव; उपलक्षणान्तरोप-
न्याकारभेदाभ्युपगमे तेनाकारेण सविशेषत्वप्रसङ्गः॥

'सोऽयं देवदत्तः' इत्यत्रापि लक्षणागन्धो न विद्यते, विरोधा-
वात्। देशान्तरसम्बन्धितयाऽतीतस्य सन्निहितदेशसम्बन्धितया वर्त-
नत्वाविरोधात्। अत एव हि 'सोऽयम्' इति प्रत्यभिज्ञया कालद्वय-
बन्धिनो वस्तुन ऐक्यमुपपाद्यते वस्तुनस्स्थिरत्ववादिभिः। अन्यथा
तिविरोधे सति सर्वेषां क्षणिकत्वमेव स्यात्। देशद्वयसम्बन्धविरो-
तु कालभेदेन परिह्रियते॥

यतस्समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थवाचित्वम्;
एव [२]"अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति" इत्यारुण्यादि-
शिष्टैकहायन्या क्रयस्साध्यतया विधीयते॥

तदुक्तम्—[३]"अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमस्स्यात्"—इति।
वं पूर्वपक्षी मन्यते—यद्यप्यरुणयेति पदमाकृतेरिव गुणस्यापि द्रव्य-
रतैकस्वभावत्वाद्द्रव्यपर्यन्तमेवारुणिमानमभिदधाति ; तथाऽप्येक-
न्यन्वयनियमोऽरुणिम्नो न सम्भवति ; एकहायन्या क्रीणाति, तच्चा-
येत्यर्थद्वयविधानासम्भवात्॥

ततश्चारुणयेति वाक्यं भित्त्वा प्रकरणविहितसर्वद्रव्यपर्यन्तमेवा-
मानमविशेषेण भिदधाति। अरुणयेति स्त्रीलिङ्गनिर्देशः प्रकरणवि-

१. रूपत्वे. पा॥ २. यजु. ६-१-६. | ३. पूर्वमीमांसासूत्रम्. ३-१-१२.. २.

हितसर्वलिङ्गकद्रव्याणां प्रदर्शनार्थः । तस्मादेकहायन्यन्वयनियमोऽरु
णिम्नो न स्यात्—इति ॥

अत्राभिधीयते—[१]"अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमस्स्यात्
[२]"अरुणयैकहायन्या" इत्यारुण्यविशिष्टद्रव्यैकहायनीद्रव्यवाचिपदयो
स्सामानाधिकरण्येनार्थैकत्वे सिद्धे सत्येकहायनीद्रव्यारुण्यगुणयोररुण
येति पदेनैव विशेषणविशेष्यभावेन सम्बन्धितयाऽभिहितयोः क्रयाख्यैक
कर्मान्वयाविरोधादरुणिम्नः क्रयसाधनभूतैकहायन्यन्वयनियमस्स्यात् ॥

यद्येकहायन्याः क्रयसम्बन्धवदरुणिमसम्बन्धोऽपि वाक्यावसेय
स्स्यात्; तदा वाक्यस्यार्थद्वयविधानं स्यात् । न चैतदस्ति अरुणये
पदेनैवारुणिमविशिष्टद्रव्यमभिहितम् । एकहायनीपदसामानाधिकरण्ये
तस्यैकहायनीत्वमात्रमवगम्यते; न गुणसम्बन्धः; विशिष्टद्रव्यैक्यमेव
सामानाधिकरण्यस्यार्थः; [३]"भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्न
वृत्तिस्सामानाधिकरण्यम्" इति हि सामानाधिकरण्यलक्षणम् ॥

अत एव हि 'रक्तः पटो भवति' इत्यादिष्वैकार्थ्यादेकवाक्यत्वम्
पटस्य भवनक्रियासम्बन्धे हि वाक्यव्यापारः; रागसम्बन्धस्तु रक्तपदेन
वाभिहितः; रागसम्बन्धि द्रव्यं पट इत्येतावन्मात्रं सामानाधिकरण्याव
सेयम्। एवमेकेन गुणेन द्वाभ्यां बहुभिर्वा तेनतेन पदेन समस्तेन व्य
स्तेन वा विशिष्टमुपस्थाप्य सामानाधिकरण्येन सर्वविशेषणविशिष्टोऽ
एक इति ज्ञापयित्वा तस्य क्रियासम्बन्धाभिधानमविरुद्धम्—'देवदत्त
श्श्यामो युवा लोहिताक्षो दण्डी कुण्डली तिष्ठति; शुक्लेन वासस
यवनिकां सम्पादयेत्; नीलमुत्पलमानय; नीलोत्पलमानय; गामान

१. पूर्वमी, ३-१-१२, २. यजु ६-१-६. | ३. कैयटे वृत्त्याह्निके,

[शु]क्लां शोभनाक्षीम्' [1]"अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्" इति। एवम् [2]"अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति" इति॥

एतदुक्तं भवति—यथा 'काष्ठैस्स्थाल्यामोदनं [3]पचेत्' इत्यनेककारकविशिष्टैका क्रिया युगपत्प्रतीयते; तथा समानाधिकरणपदसङ्घाताभिहितैकैकं कारकं तत्तत्कारकप्रतिपत्तिवेलायामेवानेकविशेषणविशिष्टं युगपत्प्रतिपन्नं क्रियायामन्वेतीति न कश्चिद्विरोधः 'खादिरैश्शुष्कैः काष्ठैः समपरिमाणे भाण्डे पायसं शाल्योदनं समर्थः पाचकः पचेत्, इत्यादिषु—इति॥

[4]यत्तूपात्तद्रव्यकवाक्यस्थगुणशब्दः केवलगुणाभिधायीत्यरुणयेति पदेन केवलगुणस्यैवाभिधानमिति; तन्नोपपद्यते, लोकवेदयोर्द्रव्यवाचिपदसमानाधिकरणस्य गुणवाचिनः क्वचिदपि केवलगुणाभिधानादर्शनात्। उपात्तद्रव्यकवाक्यस्थं गुणपदं केवलगुणाभिधायीत्यप्यसङ्गतम्, 'पटश्शुक्लः' इत्यादिषूपात्तद्रव्यकेऽपि गुणविशिष्टस्यैवाभिधानात्। 'पटस्य शुक्लः' इत्यत्र शौक्ल्यविशिष्टपटाप्रतिपत्तिरसमानविभक्तिनिर्देशकृता; न पुनरुपात्तद्रव्यकत्वकृता। तत्रैव 'पटस्य शुक्लो भागः' इत्यादिषु समानविभक्तिनिर्देशे शौक्ल्यविशिष्टद्रव्यं प्रतीयते। यत्पुनः क्रयस्यैकहायन्यवरुद्धतयाऽरुणिम्नः क्रयान्वयो न सम्भवतीति; तदपि विरोधिगुणरहितद्रव्यवाचिपदसमानाधिकरणगुणपदस्य तदाश्रयगुणाभिधानेन क्रियापदान्वयाविरोधादसङ्गतम्। राद्धान्ते चोक्तन्यायेनारुणिम्नश्शाब्दे द्रव्यान्वये सिद्धे द्रव्यगुणयोः क्रयसाधनत्वानुपपत्त्या अर्थात्परस्परान्वयस्सिध्यतीत्यप्यसङ्गतम्। अतो यथोक्त एवार्थः॥

तस्मात् तत्त्वमस्यादिसामानाधिकरण्ये पदद्वयाभिहितविशेषणापरित्यागेनैवैक्यप्रतिपादनं वर्णनीयम्। तत्त्वनाद्यविद्योपहितानवधिकदुःख-

---

१. यजुषि. २. काण्डे, २-अनु॥
२. यजुषि. ६. १.६॥
३. पचति' इत्यने. पा॥
४. यत्तूक्तं—उपात्त. पा॥

भागिनश्शुद्ध्यशुद्ध्युभयावस्थाच्चेतनादर्थान्तरभूतमशेषहेयप्रत्यनीकानवधिकल्याणैकतानं परमात्मानमनभ्युपगच्छतो न सम्भवति ॥

अभ्युपगच्छतोऽपि समानाधिकरणपदानां यथावस्थितविशेषणविशिष्टैक्यप्रतिपादनपरत्वाश्रयणे त्वम्पदप्रतिपन्नसकलदोष[1]भागित्वं परस्य प्रसज्येतेति चेत्—नैतदेवम्, त्वम्पदेनापि जीवान्तर्यामिणः परस्यैवाभिधानात् ॥

एतदुक्तं भवति—सच्छब्दाभिहितं निरस्तनिखिलदोषगन्धं सत्यसङ्कल्पमिश्रानवधिका[2]तिशयासङ्ख्येयकल्याणगुणगणं समस्तकारणभूतं परं ब्रह्म [3]"बहु स्याम्" इति सङ्कल्प्य तेजोबन्नप्रमुखं कृत्स्नं जगत्सृष्ट्वा तस्मिन् देवादिविचित्रसंस्थानसंस्थिते जगति चेतनं जीववर्गं स्वकर्मानुगुणेषु शरीरेष्वात्मतया प्रवेश्य स्वयं च स्वेच्छयैव जीवान्तरात्मतयाऽनुप्रविश्य एवम्भूतेषु स्वपर्यन्तेषु [4]देवाद्याकारेषु सङ्घातेषु नामरूपे व्याकरोत्। एवं रूपसङ्घातस्यैव वस्तुत्वं शब्दवाच्यत्वं चाकरोदित्यर्थः। अनेन जीवेनात्मना जीवेन मयेति निर्देशो जीवस्य ब्रह्मात्मकत्वं दर्शयति। ब्रह्मात्मकत्वं च जीवस्य जीवान्तरात्मतया ब्रह्मणोऽ[5]प्रवेशादित्यवगम्यते—[6]"इदं सर्वमसृजत। यदिदं किं च। तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत्" इति अत्रेदं सर्वमिति निर्दिष्टं चेतनाचेतन[7]वस्तुद्वयं सत्त्यच्छब्दाभ्यां विज्ञानाविज्ञानशब्दाभ्यां च विभज्य निर्दिश्य चिद्वस्तुन्यपि ब्रह्मणोऽनुप्रवेशाभिधानात्। अत एवं नामरूपव्याकरणात्सर्वे वाचकाश्शब्दा अचिज्जीवविशिष्टपरमात्मवाचिन इत्यवगतम्—इति ॥

किञ्च [8]"ऐतदात्म्यमिदं सर्वम्" इति चेतनमिश्रं प्रपञ्चम् इदं सर्व-

---

१. भागित्वं ब्रह्मणः. पा॥
२. निरतिशयकल्याण पा॥
३. छा. ६. २. ३; तै. आन. ६॥
४. देवाद्याकारेषु नाम. पा॥
५. प्रवेशादवगम्यते पा॥ ६. तै. आन. ६. २॥
७. वर्गद्वयं पा॥ ८. छा. ६. ८. ७॥

मिति निर्दिश्य [१]"तस्यैष आत्मा" इति प्रतिपादितम्। एवंच सर्वं चेत-
ाचेतनं प्रति ब्रह्मण आत्मत्वेन सर्वं सचेतनं जगत् तस्य शरीरं भवति।
था च श्रुत्यन्तराणि[२]"अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा" [३]"यः
थिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद। यस्य पृथिवी शरी-
म्। यः पृथिवीमन्तरो यमयति। स त आत्माऽन्तर्याम्यमृतः"इति प्रार-
य[४]"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽत्मा शरी-
म्। य आत्मानमन्तरो यमयति। स त आत्माऽन्तर्याम्यमृतः" इत्यादि
"यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरम्। योऽपामन्तरे सञ्च-
न् यस्यापश्शरीरम्" इत्यारभ्य [६]"योऽक्षरमन्तरे सञ्चरन्यस्याक्षरं
रीरम्। यमक्षरं न वेद। एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव
को नारायणः" इत्यादीनि सचेतनं जगत् तस्य शरीरत्वेन निर्दिश्य
स्यात्मत्वेन परमात्मानमुपदिशन्ति। अतश्चेतनवाचिनोऽपि शब्दाश्चेतन-
याप्यात्मभूतं चेतनशरीरकं परमात्मानमेवाभिदधति। यथा अचेतनदे-
ादिसंस्थानपिण्डवाचिनश्शब्दाः तत्तच्छरीरकजीवात्मन एव वाचकाः
"चत्वारः पञ्चदशरात्रादेवत्वं गच्छन्ति"इत्यादिषु, देवा भवन्तीत्यर्थः।
रीरस्य शरीरिणं प्रति प्रकारत्वात्[८]प्रकारवाचिनां च शब्दानां प्रकारि-
येव पर्यवसानात्[९]शरीरवाचिनां शब्दानां शरीरिपर्यवसानं न्याय्यम्।
कारो हि नाम इदमित्थमिति प्रतीयमाने वस्तुनि इत्थमिति प्रतीयमा-
ांशः। तस्य तद्वस्त्वपेक्षत्वेन तत्प्रतीतेस्तदपेक्षत्वात् तस्मिन्नेव पर्य-
सानं युक्तमिति तस्य प्रतिपादकोऽपि शब्दस्तस्मिन्नेव पर्यवस्यति। अत
व 'गौरश्वो मनुष्यः' इत्यादिप्रकारभूताकृतिवाचिनश्शब्दाः प्रकारिणि

१. तै. आन ५॥
२. यजुषि. आरण्यके. ३. ११॥
३. बृ. ५. ७. ३॥
४. बृ.५.७. २२. माध्यन्दिनपाठोऽयम्॥
५, ६. सुबाल. ७॥
७.
८. प्रकारवाचिनां शब्दानां पा॥
९. शरीराभिधायिनां. पा॥

पिण्डे पर्यवस्यन्तः पिण्डस्यापि चेतनशरीरत्वेन तत्प्रकारत्वात् पिण्डशरीरकचेतनस्यापि परमात्मप्रकारत्वाच्च परमात्मन्येव पर्यवस्यन्तीति सर्वशब्दानां परमात्मैव वाच्य इति परमात्मवाचिशब्देन सामानाधिकरण्यं मुख्यमेव ॥

ननु—'खण्डो गौः खण्डश्शुक्लः' इति जातिगुणवाचिनामेव पदानां द्रव्यवाचिपदैस्सह सामानाधिकरण्यं दृष्टम्; द्रव्याणां तु द्रव्यान्तरप्रकारत्वे मत्वर्थीयप्रत्ययो दृष्टः, यथा—'दण्डी कुण्डली' इति; नैवम्, जातिर्वा गुणो वा द्रव्यं वा नैतेष्वेकमेव सामानाधिकरण्ये प्रयोजकम्, अन्योन्यस्मिन् व्यभिचारात्, यस्य पदार्थस्य कस्यचित्प्रकारतयैव सद्भावः, तस्य तदपृथक्सिद्धिस्थितिप्रतीतिभिस्तद्वाचिनां शब्दानां स्वाभिधेयविशिष्टद्रव्यवाचित्वाद्धर्मान्तरविशिष्टतद्द्रव्यवाचिना शब्देन सामानाधिकरण्यं युक्तमेव । यत्र पुनः पृथक्सिद्धस्य स्वनिष्ठस्यैव द्रव्यस्य कदाचित्कचिद्द्रव्यान्तरप्रकारत्वमिष्यते; तत्र मत्वर्थीयप्रत्यय इति निरवद्यम् ॥

तदेवं परमात्मनश्शरीरतया तत्प्रकारत्वादचिद्विशिष्ट[1] जीवस्यापि जीवनिर्देशविशेषरूपा अहंत्वमित्यादिशब्दाः परमात्मानमेवाऽचक्षत इति [2]"तत्त्वमसि" इति सामानाधिकरण्येनोपसंहृतम्; एवं च सति परमात्मानं प्रति जीवस्य शरीरतयाऽन्वयाज्जीवगता धर्माः परमात्मानं न स्पृशन्ति, यथा स्वशरीरगता बालत्वयुवत्वस्थविरत्वादयो धर्माः जीवं न स्पृशन्ति; अतः [2]'तत्त्वमसि' इति सामानाधिकरण्ये तत्पदं जगत्कारणभूतं सत्यसङ्कल्पं सर्वकल्याणगुणाकरं निरस्तसमस्तहेयगन्धं परमात्मानमाचष्टे; त्वमिति च तमेव सशरीरजीवशरीरकमाचष्ट इति सामानाधिकरण्यं मुख्यवृत्तम्; प्रकरणाविरोधस्सर्वश्रुत्यविरोधो ब्रह्मणि निरवद्ये कल्याणैकताने अविद्यादिदोषगन्धाभावश्च। अतो जीवसामानाधिकरण्यमपि विशेषण[3]भूताज्जीवाद-

१. जीवस्य जीवानि पा॥ २. छा. ६-८-७॥ ३. भूतजीवा. पा॥

न्यत्वमेवापादयतीति विज्ञानमयाज्जीवादन्य एवानन्दमयः परमात्मा ॥

यदुक्तम्—[1]"तस्यैष एव शारीर आत्मा"इत्यानन्दमयस्य शारीरत्वश्रवणाज्जीवादन्यत्वं न सम्भवति—इति,तदयुक्तम्;अस्मिन् प्रकरणे सर्वत्र[1]"तस्यैष एव शारीर आत्मा।यः पूर्वस्य"इति परमात्मन एव शारीरात्मत्वाभिधाने कथं[2]"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः"इत्याकाशादिसृज्यवर्गस्य परमकारणत्वेन प्रज्ञातजीवव्यतिरेकस्य परस्य ब्रह्मण आत्मत्वेन व्यपदेशात्तद्व्यतिरिक्ताकाशादीनामन्नमयपर्यन्तानां तच्छरीरत्वमवगम्यते। [3]"यस्य पृथिवी शरीरं। यस्यापश्शरीरं।यस्य[4]तेजश्शरीरं। यस्य वायुश्शरीरं। यस्याकाशश्शरीरं। यस्याक्षरं शरीरं। यस्य मृत्युश्शरीरं। एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः"इति सुबालश्रुत्या सर्वतत्त्वानां परमात्मशरीरत्वं स्पष्टमभिधीयते। अतः [2]"तस्माद्वा एतस्मादात्मनः" इत्यत्रैवान्नमयस्य परमात्मैव शारीर आत्मेत्यवगतः। प्राणमयं प्रकृत्याह [1]"तस्यैष एव शारीर आत्मा। यः पूर्वस्य" इति। पूर्वस्यान्नमयस्य यश्शारीर आत्मा श्रुत्यन्तरसिद्धः परमकारणभूतः परमात्मा; स एव तस्य प्राणमयस्यापि शारीर आत्मेत्यर्थः। एवं मनोमयविज्ञानमययोर्द्रष्टव्यम्। आनन्दमये तु [1]"एष एव" इति निर्देशस्तस्यानन्यात्मत्वं दर्शयितुम्। तत्कथं विज्ञानमयस्यापि पूर्वोक्तया नीत्या परमात्मैव शारीर आत्मेत्यवगतः। एवं सति विज्ञानमयस्य यश्शारीर आत्मा, स एवानन्दमयस्यापि शारीर आत्मेत्युक्ते आनन्दमयस्य अभ्यासावगतपरमात्मभावस्य परमात्मनस्स्वयमेवात्मेत्यवगम्यते। एवं च स्वव्यतिरिक्तं चेतनाचेतनवस्तुजातं स्वशरीरमिति स एव निरुपाधिकश्शारीर आत्मा। अत एवेदं परं ब्रह्माधिकृत्य प्रवृत्तं शास्त्रं शारी-

१. तै. आन. ५॥
२. तै. आन. १॥
३. सुबाल. ७॥
४. तेजश्शरीरम्। यस्याकाशश्शरीरम् पा॥

रकमित्यभियुक्तैरभिधीयते। अतो विज्ञानमयाज्जीवादन्य एव परमात्मा आनन्दमयः ॥ १३ ॥

आह—नायमानन्दमयो जीवादन्यः, विकारशब्दस्य मयट्प्रत्ययस्य श्रवणात् [१]"मयड्वैतयोः" इति प्रकृत्य [२]"नित्यं वृद्धशरादिभ्यः"इति विकारार्थे मयट् स्मर्यते । वृद्धश्चायमानन्दशब्दः ॥

ननु—प्राचुर्येऽपि मयडस्ति [३]"तत्प्रकृतवचने मयट्" इतिस्मृतेः। यथा 'अन्नमयो यज्ञः' इति । स एवायं भविष्यति । नैवम्—अन्नमय इत्युपक्रमे विकारार्थत्वं दृष्टम्, अत औचित्यादस्यापि विकारार्थत्वमेव युक्तम् ॥

किञ्च—प्राचुर्यार्थत्वेऽपि जीवादन्यत्वं न सिध्यति । तथाहि—आनन्दप्रचुर इत्युक्ते दुःखमिश्रत्वमवर्जनीयम् । आनन्दस्य हि प्राचुर्यं दुःखस्याल्पत्वमवगमयति । दुःखमिश्रत्वमेव हि जीवत्वम्। अत औचित्यप्राप्तविकारार्थत्वमेव युक्तम् ॥

किञ्च—लोके मृण्मयं हिरण्मयं दारुमयमित्यादिषु, वेदे च[४]"पर्णमयी जुहूः" [५]"शमीमय्यस्स्रुचः" [६]"दर्भमयी रशना" इत्यादिषु मयटो विकारार्थे प्रयोगबाहुल्यात्स एव प्रथमतरं धियमधिरोहति। जीवस्य चानन्दविकारत्वमस्त्येव । तस्य स्वत आनन्दरूपस्य सतस्संसारित्वावस्था तद्विकार एवेति । अतो विकारवाचिनो मयट्प्रत्ययस्य श्रवणादानन्दमयो जीवादनतिरिक्त इति । तदेतदनुभाष्य परिहरति—

## विकारशब्दान्नेतिचेन्न प्राचुर्यात्। १ । १। १४॥

---

१. अष्टाध्याय्यां. ४. ३. १४३॥
२ अष्टाध्याय्यां ४. ३. १४४॥
३. अष्टाध्याय्यां. ५. ४. २१॥
४. यजुषि. ३. कां. ५. प्र. ७. अनु॥
५.
६. यजुषि. ३. अष्टके. ८. प्र. २. अनु॥

नैतद्युक्तं ; कुतः? प्राचुर्यात्—परस्मिन् ब्रह्मण्यानन्दप्राचुर्यात्। प्राचुर्यार्थे च मयटस्सम्भवात्। एतदुक्तं भवति—शतगुणितोत्तरक्रमे-ाभ्यस्यमानस्यानन्दस्य जीवाश्रयत्वासम्भवाद्ब्रह्माश्रयोऽयमानन्द इति नेश्चिते सति तस्मिन् ब्रह्मणि विकारासम्भवात् प्राचुर्येऽपि मयड्विधि-म्भवाच्चानन्दमयः परं ब्रह्म—इति ॥

औचित्यात्प्रयोगप्रौढ्या च मयटो विकारार्थत्वमर्थविरोधान्न स-भवति। किञ्च—औचित्यं प्राणमय एव परित्यक्तम्, तत्र विकारार्थ-ासम्भवात्। अतस्तत्र पञ्चवृत्तेर्वायोः प्राणवृत्तिमत्तामात्रेण प्राणमय-वम्, प्राणापानादिषु पञ्चसु वृत्तिषु प्राणवृत्तेः [2]प्राचुर्याद्वा। न च प्राचु-र् मयट्प्रत्ययस्य प्रौढिर्नास्ति, 'अन्नमयो यज्ञः' 'शकटमयी यात्रा' त्यादिषु दर्शनात् ॥

यदुक्तमानन्दप्राचुर्यमल्पदुःखसद्भावमवगमयतीति; तदसत्, तत्प्रचुर-वं हि तत्प्रभूतत्वम्, तच्चेतरस्य सत्तां नावगमयति; अपि तु तस्याल्पत्वं नेवर्तयति। इतरसद्भावासद्भावौ तु प्रमाणान्तरावसेयौ; इह च प्रमाणा-तरेण तदभावोऽवगम्यते [3]"अपहतपाप्मा" इत्यादिना। तत्रैतावदेव व-क्तव्यं, ब्रह्मानन्दस्य प्रभूतत्वमन्या[4]नन्दस्याल्पत्वमपेक्षत इति। उच्यते च त्र [5]"स एको मानुष आनन्दः" इत्यादिना जीवानन्दापेक्षया ब्रह्मान-न्दो निरतिशयदशापन्नः प्रभूत इति ॥

यच्चोक्तं जीवस्यानन्दविकारत्वं सम्भवतीति ; तदपि नोपपद्यते, जीवस्य ज्ञानानन्दस्वरूपस्य केनचिदाकारेण मृद इव घटाद्याकारेण प-रिणामस्सकलश्रुतिस्मृतिन्यायविरुद्धः। संसारदशायां तु कर्मणा ज्ञाना-नन्दौ सङ्कुचितावित्युपपादयिष्यते। अतश्चानन्दमयो जीवादन्यः परं ब्रह्म॥

१. प्राचुर्यार्थे मयटस्सं पा॥
२. प्राणवत्तामा. पा॥ ३. छा.८-१-५॥
४. आनन्दस्याल्पत्वापेक्षमिति पा॥
५. तै. आन. ८-अनु॥

इतश्च जीवादन्य आनन्दमयः परं ब्रह्म—

## तद्धेतुव्यपदेशाच्च ।१।१।१५॥

[१]"को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति" इति । एष एव जीवानानन्दयतीति[२]जीवानन्दहेतुरयं व्यपदिश्यते । अतश्चानन्दयितव्याज्जीवादानन्दयिताऽयमन्य आनन्दमयः परमात्मेति विज्ञायते। आनन्दमय एवात्र आनन्दशब्देनोच्यत इति चानन्तरमेव वक्ष्यते ॥

इतश्च जीवादन्य आनन्दमयः—

## मान्त्रवर्णिकमेव च गीयते ।१।१।१६॥

[३]"सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रवर्णोदितं ब्रह्मैवानन्दमय इति गीयते। तत्तु जीवस्वरूपादन्यत् परं ब्रह्म। तथाहि—[४]"ब्रह्मविदाप्नोति परम्" इति जीवस्य प्राप्यतया ब्रह्म निर्दिष्टम् ॥

[५]"तदेषाभ्युक्ता" इति—तत् ब्रह्म, अभिमुखीकृत्य प्रतिपाद्यतया परिगृह्य, ऋगेषा, अध्येतृभिरुक्ता। [६]ब्राह्मणोक्तस्यार्थस्य वैशद्यमनेन मन्त्रेण क्रियत इत्यर्थः, जीवस्योपासकस्य प्राप्यं ब्रह्म तस्माद्विलक्षणमेव। अनन्तरं च [७]"तस्माद्वा एतस्मादात्मन अकाशस्सम्भूतः" इत्यारभ्योत्तरोत्तरैर्ब्राह्मणैर्मन्त्रैश्च तदेव विशदीक्रियते। अतो जीवादन्य आनन्दमयः ॥

अत्राह—यद्यप्युपासकात्प्राप्यस्य भेदेन भवितव्यम् ; तथापि न वस्त्वन्तरं जीवान्मान्त्रवर्णिकं ब्रह्म; किन्तु तस्यैवोपासकस्य निरस्तसमस्ताविद्यागन्धनिर्विशेषचिन्मात्रैकरसं शुद्धं स्वरूपम्, तदेव "सत्यं

---

१. तै. आन-७. अनु॥
२. जीवानामानन्दहेतु पा॥
३. तै. आन-१. अनु॥
४. ५. ७. तै. आन-१, अनु॥
६. ब्राह्मणोक्तार्थस्य. पा॥

ज्ञानमनन्तं ब्रह्म" इति मन्त्रेण विशोध्यते। तदेव च[1]"यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह" इति वाङ्मनसागोचरतया निर्विशेषमिति गम्यते। अतस्तदेव मान्त्रवर्णिकमिति तस्मादनतिरिक्त आनन्दमय इति। अत उत्तरं पठति—

## नेतरोऽनुपपत्तेः। १। १। १७॥

परमात्मन इतरो जीवशब्दाभिलप्यो मुक्तावस्थोऽपि न भवति मान्त्रवर्णिकः। कुतः? अनुपपत्तेः। तथाविधस्यात्मनो निरुपाधिकं विपश्चित्त्वं नोपपद्यते। इदमेव हि निरुपाधिकं विपश्चित्त्वं [2]"सोऽकामयत बहु स्यां प्रजायेय" इति सत्यसङ्कल्पत्वप्रदर्शनेन विवरिष्यते। [3]विविधं पश्यच्चित्त्वं हि विपश्चित्त्वम्। पृषोदरादित्वात्पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा व्युत्पादितो विपश्चिच्छब्दः। यद्यपि मुक्तस्य विपश्चित्त्वं सम्भवति; तथापि तस्यैवात्मनस्संसारदशायामविपश्चित्त्वमप्यस्तीति निरुपाधिकं विपश्चित्त्वं नोपपद्यते। निर्विशेषचिन्मात्रतापन्नस्य मुक्तस्य विविध[4]दर्शनाभावा[5]त्सुतरां विपश्चित्त्वं न सम्भवतीति न केनापि प्रमाणेन निर्विशेषं वस्तु प्रतिपाद्यत इति च पूर्वमेवोक्तम्। [1]"यतो वाचो निवर्तन्ते" इति च वाक्यं यदि वाङ्मनसयोर्ब्रह्मणो निवृत्तिमभिदधीत; न ततो निर्विशेषतां वस्तुनोऽवगमयितुं शक्नुयात्; अपि तु वाङ्मनसयोस्तत्राप्रमाणतां वदेत्; तथाच सति तस्य तुच्छत्वमेवापद्यते। [6]"ब्रह्मविदाप्नोति"[7]इत्यारभ्य ब्रह्मणो विपश्चित्त्वं जगत्कारणत्वं ज्ञानानन्दैकतानतामितरान्प्रत्यानन्दयितृत्वं कामादेव चिदचिदात्मकस्य कृत्स्नस्य स्रष्टृत्वं सृज्यवर्गानुप्रवेशकृततदात्मकत्वं भयाभयहेतुत्वं [8]वाय्वा-

१. तै. आन. ९-अनु ॥
२. तै. आन. ६ ॥
३. विविधं हि पश्यच्चित्त्वं विप ॥
४. दर्शनासंभवात्. पा॥
५. सुतरामपि. पा॥
६. तै. आन. १॥
७. परमित्यार, पा॥
८. वाय्वादीनां. पा॥

दित्यादीनां प्रशासितृत्वं शतगुणितोत्तरक्रमेण निरतिशयानन्दत्वमन्यच्चानेकं प्रतिपाद्य वाङ्मनसयोः ब्रह्मणि प्रवृत्त्यभावेन निष्प्रमाणकं ब्रह्मेत्युच्यत इति भ्रान्तजल्पितम्। [1]"यतो वाचो निवर्तन्ते" इति यच्छब्दनिर्दिष्टमर्थम् [2]"आनन्दं ब्रह्मणो विद्वान्" इत्यानन्दशब्देन प्रतिनिर्दिश्य तस्य ब्रह्मसम्बन्धित्वं ब्रह्मण इति व्यतिरेकनिर्देशेन प्रतिपाद्य तदेव वाङ्मनसागोचरं 'विद्वान्'इति तद्वेदनमभिदधद्वाक्यं जरद्गवादिवाक्यवदनर्थकं [3]वाच्यनन्तर्गतं च स्यात्।

अतश्शतगुणितोत्तरक्रमेण ब्रह्मानन्दस्यातिशयेयत्तां वक्तुमुद्यम्य तस्येयत्ताया अभावादेव वाङ्मनसयोस्ततो निवृत्तिः [1]"यतो वाचो निवर्तन्ते"इत्युच्यते। एवमियत्तारहितं 'ब्रह्मण आनन्दं विद्वान् कुतश्चन न बिभेति' इत्युच्यते।किञ्च अस्य मान्त्रवर्णिकस्य विपश्चितः[4]"सोऽकामयत" इत्यारभ्य [5]वक्ष्यमाणस्वसङ्कल्पावक्लृप्तजगज्जन्मस्थितिजगदन्तरात्मत्वादेर्मुक्तात्मस्वरूपादन्यत्वं सुस्पष्टमेव ॥ १७ ॥

इतश्चोभयावस्थात्प्रत्यगात्मनोऽन्य आनन्दमयः—

## भेदव्यपदेशाच्च।१।१।१८॥

[6]"तस्माद्वा एतस्मादात्मन आकाशः"इत्यारभ्य मान्त्रवर्णिकं ब्रह्म व्यञ्जयद्वाक्यमन्नप्राणमनोभ्य इव जीवादपि तस्य भेदं व्यपदिशति [7]"तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्दमयः"इति। अतो जीवाद्भेदस्य व्यपदेशाच्चायं मान्त्रवर्णिक आनन्दमयोऽन्य एवेति[8]ज्ञायते॥

इतश्च जीवादन्यः—

## कामाच्च नानुमानापेक्षा।१।१।१९॥

---

१. तै. आन. ९. अनु॥
२. तै. आन. ९॥ ३. वाचकानन्तर्ग. पा.
४. तै. आन. ६॥
५. वक्ष्यमाणस्य स्व. पा॥
६. तै. आन. १॥
७. तै. आन. ५॥ ८. विज्ञायते. पा॥

जीवस्याविद्यापरवशस्य जगत्कारणत्वे ह्यवर्जनीया आनुमानिकप्रधानादिशब्दाभिधेयाचिद्वस्तुसंसर्गापेक्षा; तथैव हि चतुर्मुखादीनां कारणत्वम्; इह च [1]"सोऽकामयत। बहु स्यां प्रजायेय" इत्यचित्संसर्ग[2]रहितस्य स्वकामादेव विचित्रचिदचिद्वस्तुनस्सृष्टिः [3]"इदं सर्वमसृजत। यदिदं किञ्च" इत्याम्नायते। अतोऽस्यानन्दमयस्य जगत्सृजतो नानुमानिकाचिद्वस्तुसंसर्गापेक्षा प्रतीयते। ततश्च जीवादन्य आनन्दमयः ॥ १९ ॥

इतश्च—

## अस्मिन्नस्य च तद्योगं शास्ति।१।१।२०॥

अस्मिन्-आनन्दमये,अस्य-जीवस्य, तद्योगम्-आनन्दयोगम् , शास्ति शास्त्रम्—[4]"रसो वै सः। रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति। रसशब्दाभिधेयानन्दमयलाभादयं जीवशब्दाभिलपनीय आनन्दी भवतीत्युच्यमाने यल्लाभाद्य आनन्दी भवति, स स एवेत्यनुन्मत्तः को ब्रवीतीत्यर्थः ॥

एवमानन्दमयः परं ब्रह्मेति निश्चिते सति [5]"यदेष अकाश आनन्दः"[6]"विज्ञानमानन्दं ब्रह्म" इत्यादिष्वानन्दशब्देनानन्दमय एव परामृश्यते। यथा विज्ञानशब्देन विज्ञानमयः। अत एव[7]"आनन्दं ब्रह्मणो विद्वान्" इति व्यतिरेकनिर्देशः। अत एव च [8]"आनन्दमयमात्मानमुपसङ्क्रामति" इति फलनिर्देशश्च। उत्तरे चानुवाके पूर्वानुवाकोक्तानामन्नमयादीनाम्[9]"अन्नं ब्रह्मेति व्यजानात्"[10]"प्राणो ब्रह्मेति व्यजानात्" [11]"मनो ब्रह्मेति व्यजानात्"[12]"विज्ञानं ब्रह्मेति व्यजानात् "इति प्रति·

१. तै. आन. ६-अनु॥ २. रहितस्य तस्य.पा॥
३. तै. आन. ६-२॥
४. तै. आन. ७-१॥ ५. तै. आन. ७॥
६. बृ. ५. ९. २८॥
७. तै. आन. ९-१॥ ८. तै. आन. ८-५॥
९. तै. भृ. २॥ १०. तै. भृ. ३॥
११. तै. भृ. ४-अनु॥
१२. तै. भृ. ५-१॥

पादनात्[1]"आनन्दो ब्रह्म" इत्यप्यानन्दमयस्यैव प्रतिपादनमिति विज्ञायते; तत एव च तत्रापि[2]"आनन्दमयमात्मानमुपसङ्क्रम्य" इत्युपसंहृतम् ।

अतः प्रधानशब्दाभिलप्यादर्थान्तरभूतस्य परस्य ब्रह्मणो जीवशब्दाभिलपनीयादपि वस्तुनोऽर्थान्तरत्वं सिद्धम् ॥ २० ॥

इति श्रीशारीरकमीमांसाभाष्ये आनन्दमयाधिकरणम् ॥ ६ ॥

---

(वेदान्तसारे आनन्दमयाधिकरणम् ॥ ६ ॥)

---

## आनन्दमयोऽभ्यासात्। १। १। १३ ॥

यद्यपि प्रधानादर्थान्तरभूतस्य प्रत्यगात्मनश्चेतनस्य[3]ईक्षणगुणयोगस्सम्भवति, तथाऽपि प्रत्यगात्मा बद्धो मुक्तश्च न जगत्कारणम् ,[4]"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" इत्यारभ्य,[5]"तस्माद्वा एतस्माद्विज्ञानमयात्।अन्योऽन्तर आत्माऽऽनन्दमयः"[6]इत्यस्य आनन्दमयत्वप्रतिपादनात् कारणतया व्यपदिष्टोऽयमानन्दमयः प्रत्यगामनोऽर्थान्तरभूतः सर्वज्ञः परमात्मैव। कुतः?अभ्यासात्—आनन्दमयस्य निरतिशयदशाशिरस्कानन्दमयत्वेनाभ्यासात् ।[7]"ते ये शतं प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः"[8]"यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्चन" इति हि वेद्यत्वेनायमानन्दमयोऽनवधिकातिशयोऽभ्यस्यते ॥ १३ ॥

## विकारशब्दान्नेति चेन्न प्राचुर्यात्। १। १। १४॥

[9]"स वा एष पुरुषोऽन्नरसमयः" इति विकारार्थमयट्प्रकरणात्[10]"आनन्दमयः" इत्यस्यापि विकारार्थत्वं प्रतीयते। अतोऽयमानन्दमयः नाविकाररूपः परमात्मा, इति चेन्न अर्थविरोधात् प्राचुर्यार्थ एवायं मयडिति विज्ञायते,[4]"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" इति ह्यविकार आत्मा प्रकृतः । प्रक-

---

१. तै. भृ. ६-१॥ २. तै.आन.१०-५॥ ३. ईक्षणयोगः, पा. ४. तै. आन. १,अनु॥ ५. तै. आन. ५॥ ६. इति तस्य. पा. ७. तै.आन.८.४॥ ८. तै. आन. ९॥ ९. तै. आन. १॥ १०. तै. आन. ५-२॥

रणे च विकारार्थत्वं प्राणमय एव परित्यक्तम् । उक्तेन न्यायेन आनन्दप्राचुर्यात् परमपुरुष एवायमानन्दमयः ॥ १४ ॥

# तद्धेतुव्यपदेशाच्च । १ । १ । १५ ॥

१"एष ह्येवानन्दयाति" इति जीवान्प्रत्यानन्दहेतुरयमानन्दमयो व्यपदिश्यते ; अतश्चायं न प्रत्यगात्मा ॥ १५ ॥

# मान्त्रवर्णिकमेव च गीयते । १ । १ । १६ ॥

२"सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रवर्णोदितमेव३"तस्माद्वा एतस्मात्" इत्यादिना आनन्दमय इति गीयते ; अतश्च न प्रत्यगात्मा ॥ १६ ॥

# नेतरोऽनुपपत्तेः । १ । १ । १७ ॥

इतरः,प्रत्यगात्मा मन्त्रवर्णोदित इति नाशङ्कनीयम् , ४"सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" इति प्रत्यगात्मनो बद्धस्य मुक्तस्य च ईदृशविपश्चित्त्वानुपपत्तेः। ५"सोऽकामयत। बहु स्यां प्रजायेय" इति विचित्रस्थिरत्रसरूपबहुभवनसङ्कल्परूपमिदं विपश्चित्त्वमिति ह्युत्तरत्र व्यज्यते । मुक्तस्य सर्वज्ञस्यापि जगद्व्यापाराभावादीदृशविपश्चित्त्वासम्भवः ॥ १७ ॥

इतश्च—

# भेदव्यपदेशाच्च । १ । १ । १८ ॥

६"तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः" इति हि विज्ञानमयात् प्रत्यगात्मनो भेदेनायमानन्दमयो व्यपदिश्यते । न च विज्ञानमयविषयतया उदाहृतश्लोके ७"विज्ञानं यज्ञं तनुते" इति व्यपदेशात् विज्ञानमयो बुद्धिमात्रमित्याशङ्कनीयम् ; यतस्सूत्रकार एव इमामाशङ्कां परिहरिष्यति ८"व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः" इति । ७"विज्ञानं यज्ञं तनुते" इति यज्ञादिक्रियायां जीवस्य कर्तृत्वव्यपदेशाच्च जीवः कर्ता। विज्ञानशब्देन जीवस्याप्युपदेशो बुद्धिमात्रव्यपदेशे च विज्ञानेनेति निर्देशविपर्ययस्स्यात्, बुद्धेः करणत्वादिति ॥ १८ ॥

---

१. तै. आन. ७-१. अनु॥
२. तै. आन. १॥ ३. तै. आन. १॥
४. तै. आन. १॥ ५. तै. आन. ६॥
६. तै. आन. ५॥ ७. तै. आन. ५॥
८. शारी. २-३-३५॥

इतश्च—

## कामाच्च नानुमानापेक्षा। १। १। १९॥

१" सोऽकामयत । बहु स्याम् " इति स्वकामादेवास्य जगत्सर्गश्श्रूयते । प्रत्यगात्मनो हि यस्य कस्यचित्सर्गे आनुमानापेक्षा दृश्यते । अनुमानगम्यं प्रधानम् आनुमानम् ॥ १९ ॥

इतश्च—

## अस्मिन्नस्य च तद्योगं शास्ति। १। १। २०॥

अस्मिन् - आनन्दमये, अस्य - प्रत्यगात्मनः, आनन्दयोगं शास्ति २"रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति"—इति । अतः प्रत्यगात्मनोऽर्थान्तरभूतः सर्वज्ञः पुरुषोत्तमः जगत्कारणभूतः आनन्दमयः॥ २० ॥

इति वेदान्तसारे आनन्दमयाधिकरणम् ॥ ६ ॥

---

(वेदान्तदीपे आनन्दमयाधिकरणम् ॥ ६ ॥)

## आनन्दमयोऽभ्यासात्। १। १। १३॥

तैत्तिरीयके—३"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः"इति प्रकृत्य ४"तस्माद्वा एतस्माद्विज्ञानमयात्।अन्योऽन्तर आत्माऽऽनन्दमयः" इत्यत्र जगत्कारणतयाऽवगत आनन्दमयः किं प्रत्यगात्मा? उत परमात्मेति संशयः।५प्रत्यगात्मेति पूर्वः पक्षः । कुतः ? ६"तस्यैष एव शारीर आत्मा"इति आनन्दमयस्य शारीरत्वश्रवणात् । शारीरो हि शरीरसम्बन्धी । स च प्रत्यगात्मैव । तस्य चेतनत्वेनेक्षापूर्विका च सृष्टिरुपपद्यत इति। राद्धान्तस्तु— ७"सैषाऽनन्दस्य मीमांसा भवति"इत्यारभ्य,८"यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह।आनन्दं ब्रह्मणो विद्वान्" इति निरतिशयदशाशिरस्कोऽभ्यस्यमान आनन्दः प्रत्यगात्मनोऽर्थान्तरभूतस्य परस्यैव ब्रह्मण इति निश्चीयते । शारीरात्मत्वञ्च परमात्मन एव, ९"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः"इत्याकाशादिजग-

१. तै. आन. ६॥
२. तै. आन. ७-१॥
३. तै. आन. १॥
४. तै. आन. ५॥
५. किंयुक्तम् । प्रत्यगात्मेति. पा.
६. तै. आन॥
७. तै. आन. ८॥
८. तै. आन. ९॥
९. तै. आन. १॥

त्कारणतयाऽवगत एवान्नमयस्य शारीर आत्मेति प्रतीयते, १आत्मान्तरानिर्देशात् । श्रुत्यन्तरेषु पृथिव्यक्षरादीनां शरीरत्वं परमात्मन आत्मत्वञ्च श्रूयते २"यस्य पृथिवी शरीरम्"इत्यारभ्य, ३"एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः"इति अन्नमयस्यात्मैव प्राणमयादिषु४"तस्यैष एव शारीर आत्मा।यः पूर्वस्य"इत्यनुकृष्यत इति प्रत्यगात्मनो विज्ञानमयस्य च स एव शारीर आत्मा । आनन्दमये तु ४"तस्यैष एव शारीर आत्मा। यः पूर्वस्य"इति निर्देशः आनन्दमयस्यानन्यात्मत्वप्रदर्शनार्थः । अतो जगत्कारणतया निर्दिष्ट आनन्दमयः परमात्मैवेति ॥

सूत्रार्थस्तु—आनन्दमयशब्दनिर्दिष्टः आकाशादिजगत्कारणभूतः प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मा । कुतः? तस्यानन्दस्य निरतिशयत्वप्रतीतिबलात् । ५"स एको मानुष आनन्दः । ते ये शतम्"इत्याद्यभ्यासात्, तस्य च प्रत्यगात्मन्यसम्भावितस्य तदतिरिक्ते परमात्मन्येव सम्भवात् ॥ १३॥

## विकारशब्दान्नेति चेन्न प्राचुर्यात्।१।१।१४॥

६"आनन्दमयः" इति विकारार्थान्मयट्च्छब्दान्नायमविकृतः परमात्मा । अस्य च विकारार्थत्वमेव युक्तम्,७"अन्न.....मयः"इति विकारोपक्रमादिति चेन्न, प्रत्यगात्मन्यपि ८"न जायते म्रियते वा"९इत्यादिविकारप्रतिषेधात्प्राचुर्यार्थ एवायं मयडिति निश्चयात् । अस्मिंश्चानन्दे, १०"यतो वाचो निवर्तन्ते" इति वक्ष्यमाणात्प्राचुर्यादयमानन्दप्रचुरः परमात्मैव । न ह्यनवधिकातिशयरूपःप्रभूतानन्दः प्रत्यगात्मनि सम्भवति ॥ १४ ॥

## तद्धेतुव्यपदेशाच्च । १ । १ । १५॥

११"एष ह्येवानन्दयाति" इति जीवान्प्रत्यानन्दयितृत्वव्यपदेशाच्चायं परमात्मैव ॥ १५ ॥

## मान्त्रवर्णिकमेव च गीयते ।१।१।१६॥

१२"सत्यं ज्ञानमनन्तं ब्रह्म"इति मन्त्रवर्णोदितं ब्रह्मैव,१३"तस्माद्वा एतस्मादात्मनः" इत्यारभ्य १४"आनन्दमयः" इति च गीयते; ततश्चानन्दमयो ब्रह्म ॥

---

१. आनन्दमयस्य आत्मा. पा।।
२, ३. सुबाल. ७. ४. तै. आन ५.
५. तै. आन.८. ६. तै. आन. ५.
७.तै.आन.१॥ ८.कठवल्ल्यां. १-२-१८.
९. इति विकार. पा.
१०. तै. आन. ९. ११. तै. आ.७-१.
१२. तै. आ. १. १३. तै. आ. १.
१४. तै. आन. ५.

प्रत्यगात्मनः परिशुद्धं स्वरूपं मन्त्रवर्णोदितमित्याशङ्क्याह—

## नेतरोऽनुपपत्तेः ।१।१।१७॥

परस्माद्ब्रह्मणः, इतरः प्रत्यगात्मा न मन्त्रवर्णोदितः, तस्य १"विपश्चिता ब्रह्मणा" इति विपश्चित्त्वानुपपत्तेः; विविधं पश्यच्चित्त्वं हि विपश्चित्त्वम् । तच्च २"सोऽकामयत । बहु स्यां प्रजायेय" इत्यादिवाक्योदितनिरुपाधिकबहुभवन-सङ्कल्परूपं सर्वज्ञत्वम् । तत्तु प्रत्यगात्मनः परिशुद्धस्यापि न सम्भवति,३"जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" इति वक्ष्यमाणत्वात् । अतः परं ब्रह्मैव मान्त्रवर्णिकम् ॥ १७ ॥

## भेदव्यपदेशाच्च ।१।१।१८॥

४"भीषास्माद्वातः पवते"इत्यादिना अग्निवायुसूर्यादिजीववर्गस्य आनन्दमयात्प्रशासितुः प्रशासितव्यत्वेन भेदो व्यपदिश्यते। अतश्चानन्दमयः परमात्मेति। योजनान्तरम्५"तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्माऽऽनन्दमयः" इति विज्ञानमयाज्जीवादानन्दमयस्य भेदो व्यपदिश्यते । विज्ञानमयो हि जीव एव । न बुद्धिमात्रम् , मयट्छ्रुतेः अतश्चानन्दमयः परमात्मा ॥ १८ ॥

## कामाच्च नानुमानापेक्षा ।१।१।१९॥

२"सोऽकामयत" इत्यारभ्य ६"इदं सर्वमसृजत" इति कामादेव जगत्सर्गश्रवणात् अस्यानन्दमयस्य जगत्सर्गे नानुमानगम्यप्रकृत्यपेक्षा प्रतीयते । प्रत्यगात्मनो यस्यकस्यचिदपि सर्गे प्रकृत्यपेक्षास्ति । अतश्चायं प्रत्यगात्मनोऽन्यः परमात्मा ॥ १९ ॥

## अस्मिन्नस्य च तद्योगं शास्ति ।१।१।२०॥

७"रसो वै सः।रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति" इति अस्मिन्—आनन्दमये रसशब्दनिर्दिष्टे, अस्य - अयंशब्दनिर्दिष्टस्य जीवस्य, तल्लाभादानन्दयोगं शास्ति शास्त्रम् । प्रत्यगात्मनो यल्लाभादानन्दयोगः, स तस्मादन्यः परमात्मैवेत्यानन्दमयः परं ब्रह्म ॥ २० ॥

इति वेदान्तदीपे आनन्दमयाधिकरणम् ॥ ६ ॥

---

१. तै. आन. १॥
२. तै. आन. ६॥
३. शारी. ४-४-१७.
४. तै. आन. ८.
५. तै. आन.५.१॥
६. तै. आन. ६-२.
७. तै. आन. ७-१.

यद्यपि मन्दपुण्यानां जीवानां कामाज्जगत्स्रष्टिरतिशयितानन्दयोगो भयाभयहेतुत्व[१]मित्यादि न सम्भवति; तथापि विलक्षणपुण्यानामादित्येन्द्रप्रजापतिप्रभृतीनां सम्भवत्येवेतीमामाशङ्कां निराकरोति—

## अन्तस्तद्धर्मोपदेशात्। १। १। २१॥

इदमाम्नायते च्छान्दोग्ये [२]"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद। तस्यर्क्च साम च गेष्णौ इत्यधिदैवतम्" [३]"अथाध्यात्मम्...अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत्साम तदुक्थ्यं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम" इति ॥

तत्र सन्दिह्यते—किमयमक्ष्यादित्यमण्डलान्तर्वर्ती पुरुषः पुण्योपचयनिमित्तैश्वर्य आदित्यादिशब्दाभिलप्यो जीव एव; आहोस्वित्तदतिरिक्तः परमात्मा—इति । किं युक्तम् ?

उपचितपुण्यो जीव एवेति । कुतः ? सशरीरत्वश्रवणात् । शरीरसम्बन्धो हि जीवानामेव सम्भवति। कर्मानुगुणप्रियाप्रिययोगाय हि शरीरसम्बन्धः। अत एव हि कर्मसम्बन्धरहितस्य मोक्षस्य प्राप्यत्वमशरीरत्वेनोच्यते [४]"न ह वै स शरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति। सम्भवति च पुण्यातिशयात् ज्ञानाधिक्यम्, शक्त्याधिक्यञ्च । अत एव लोककामेशत्वादि तस्यैवोपपद्यते। [५]तत एव चोपास्यत्वम्, फलदायित्वम्, पापक्षपणकरत्वेन मोक्षोपयो-

---

१. इत्यादीनि न सम्भवन्ति. पा॥
२. छा. १-६-६-७-८॥ ३. छा. १-७-५॥
४. छा. ८-१२-१॥
५. अत एवोपास्यत्वं फलदायित्वं च पा॥

गित्वं च । मनुष्येष्वप्युपचितपुण्याः केचित् ज्ञानशक्त्यादिभिरधिकतरा दृश्यन्ते ; ततश्च सिद्धगन्धर्वादयः ; ततश्च देवाः ; ततश्चेन्द्रादयः । अतो ब्रह्मादिष्वन्यतम एवैकैकस्मिन् कल्पे पुण्यविशेषेणैवम्भूतमैश्वर्यं प्राप्तो जगत्सृष्ट्याद्यपि करोतीति जगत्कारणत्वजगदन्तरात्मत्वादिवाक्यमस्मिन्नेवोपचितपुण्यविशेषे सर्वज्ञे सर्वशक्तौ वर्तते । अतो न जीवादतिरिक्तः परमात्मा नाम कश्चिदस्ति । एवं च सति[1] "अस्थूलमनण्वह्रस्वम्" इत्यादयो जीवात्मनस्स्वरूपाभिप्राया भवन्ति । मोक्षशास्त्राण्यपि तत्स्वरूपतत्प्राप्त्युपायोपदेशपराणि—इति ॥

( सिद्धान्तः )

एवं प्राप्तेऽभिधीयते—अन्तस्तद्धर्मोपदेशात्—अन्तरादित्येऽन्तरक्षिणि च यः पुरुषः प्रतीयते, स जीवादन्यः परमात्मैव ; कुतः ? तद्धर्मोपदेशात् जीवेष्वसम्भवंस्तदतिरिक्तस्यैव परमात्मनो धर्मोऽयमपहतपाप्मत्वादिः[2] "स एष सर्वेभ्यः पाप्मभ्य उदितः" इत्यादिनोपदिश्यते । अपहतपाप्मत्वं हि अपहतकर्मत्वम् ; कर्मवश्यतागन्धरहितत्वमित्यर्थः। कर्माधीनसुखदुःखभागित्वेन कर्मवश्या हि जीवाः। अतोऽपहतपाप्मत्वं जीवादन्यस्य परमात्मन एव धर्मः ॥

तत्पूर्वकं स्वरूपोपाधिकं लोककामेशत्वम्, सत्यसङ्कल्पत्वादिकम् सर्वभूतान्तरात्मत्वञ्च तस्यैव धर्मः। यथाह[3] "एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" इति, तथा [4] "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति । [5] "सोऽकामयत। बहु स्यां प्रजायेयेति" इत्यादिसत्यसङ्कल्पत्वपूर्वकसमस्तचिदचिद्वस्तुसृष्टियोगो निरुपाधिकभयाभयहेतुत्वम्, वाङ्मनसपरिमितिकृतपरिच्छेदरहितानवधिकातिशयानन्दयोग इत्यादयोऽकर्मसम्पाद्यास्स्वा-

१. बृ. ५-८-८॥ २. छा. १-६-७॥ ३. छा. ८-१-५॥ ४. सुबाल. ७॥ ५. तै. आन. ६॥

भासिका धर्मा जीवस्य न सम्भवन्ति ॥

यत्तु शरीरसम्बन्धान्न जीवातिरिक्त इत्युक्तम्; तदसत्, न हि सशरीरत्वं कर्मवश्यतां साधयति, सत्यसङ्कल्पस्येच्छयाऽपि शरीरसम्बन्धसम्भवात्। अथोच्येत—शरीरं नाम त्रिगुणात्मकप्रकृतिपरिणामरूपभूतसङ्घातः;तत्सम्बन्धश्चापहतपाप्मनस्सत्यसङ्कल्पस्य पुरुषस्येच्छया न सम्भवति, अपुरुषार्थत्वात्। कर्मवश्यस्य तु स्वस्वरूपानभिज्ञस्य कर्मानुगुणफलोपभोगायानिच्छतोऽपि तत्सम्बन्धोऽवर्जनीयः—इति। स्यादेतदेवम्; यदि गुणत्रयमयः प्राकृतोऽस्य देहस्स्यात्; स तु स्वाभिमतस्स्वानुरूपोऽप्राकृत एवेति सर्वमुपपन्नम् ॥

एतदुक्तं भवति—परस्यैव ब्रह्मणो निखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपतया सकलेतरविलक्षणस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणगणाश्च सन्ति।तद्वदेव स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्यलावण्ययौवनाद्यनन्त[1]गुणगणनिधिदिव्यरूपमपि स्वाभाविकमस्ति। तदेवोपासकानुग्रहेण तत्तत्प्रतिपत्त्यनुरूपसंस्थानं करोत्यपारकारुण्यसौशील्यवात्सल्यौदार्यजलनिधिः निरस्तनिखिलहेयगन्धोऽपहतपाप्मा परमात्मा परं ब्रह्म पुरुषोत्तमो नारायणः—इति ॥

[2]"यतो वा इमानि भूतानि जायन्ते"[3]"सदेव सोम्येदमग्र आसीत्" [4]"आत्मा वा इदमेक एवाग्र आसीत्"[5]"एको ह वै नारायण आसीन्न ब्रह्मा नेशानः"इत्यादिषु निखिलजगदेककारणतयाऽवगतस्य परस्य ब्रह्मणः [6]"सत्यं ज्ञानमनन्तं ब्रह्म" [7]"विज्ञानमानन्दं ब्रह्म" इत्यादिष्वेवम्भूतं

---

१. गुणनिधिदिव्य. पा॥
२. तै. भृ. १॥
३. छा. ६-२-१॥
४. ऐतरेय, १-१-१॥
५. महोप. १. अ. १॥
६. तै. आन. १॥
७. बृ. ५-९-२८॥

स्वरूपमित्यवगम्यते।[१]"निर्गुणम्"[२]"निरञ्जनम्"[३]"अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः"[४]"न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते । पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" [५]"तमीश्वराणां परमं महेश्वरं तं दैवतानां परमञ्च दैवतम्" [६]"स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः"[७]"सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाऽभिवदन्यदास्ते"[८]"वेदाहमेतं पुरुषं महान्तम् ।आदित्यवर्णं तमसः परस्तात्"[९]"सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" इत्यादिषु परस्य ब्रह्मणः प्राकृतहेयगुणान् प्राकृतहेयदेहसम्बन्धं तन्मूलकर्मवश्यतासम्बन्धं च प्रतिषिध्य कल्याणगुणान् कल्याणरूपं च वदन्ति । तदिदं स्वाभाविकमेव रूपमुपासकानुग्रहेण तत्प्रतिपत्त्यनुगुणाकारं देवमनुष्यादिसंस्थानं करोति स्वेच्छयैव परमकारुणिको भगवान्। तदिदमाह श्रुतिः —[१०]"अजायमानो बहुधा विजायते"इति । स्मृतिश्च[११]"अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया । परित्राणाय साधू नां विनाशाय च दुष्कृताम्" इति । साधवो ह्युपासकाः;तत्परित्राणमेवोद्देश्यम्,आनुषङ्गिकस्तु दुष्कृतां विनाशः,सङ्कल्पमात्रेणापि तदुपपत्तेः। 'प्रकृतिं स्वाम्' इति प्रकृतिः—स्वभावः।[१२]स्वमेव स्वभावमास्थाय, न संसारिणां स्वभावमित्यर्थः। आत्ममाययेति [१३]स्वसङ्कल्परूपेण ज्ञानेनेत्यर्थः । [१४]"माया वयुनं ज्ञानम्" इति ज्ञानपर्याय-

---

१. आत्मोप ।।
२. श्वेता. ६. १९।।
३. छा. ८-५-१।।
४. श्वे. ६-८ ।।
५. श्वे. ६-७।। ६. श्वे. ६-९।।
७, ८. यजु. आरण. ३-१२. पुरुषसू.।।
९. तै. नारायणीये. १-अनु. ८ ।।
१०. पुरुषसू.।।
११. गी. ४-६. यजु. आरण. ८।।
१२. स्वीयमेव स्वभावमा. पा।।
१३. स्वसंकल्परूपज्ञानेन, पा।।
१४. वेदनिखण्टौ, धर्मवर्गे. २२-श्लो।।

मपि मायाशब्दं नैखण्डुका अधीयते। आह च भगवान् पराशरः—[१]"समस्ताश्शक्तयश्चैता नृप यत्र प्रतिष्ठिताः। तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥ समस्तशक्तिरूपाणि तत्करोति जनेश्वर। देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया। जगतामुपकाराय न सा कर्मनिमित्तजा"—इति;महाभारते चावताररूपस्याप्यप्राकृतत्वमुच्यते-[२]"न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः"-इति। अतः परस्यैव ब्रह्मण एवंरूपरूपवत्त्वादयमपि तस्यैव धर्मः। अत आदित्यमण्डलाक्ष्यधिकरणः आदित्यादिजीवव्यतिरिक्तः परमात्मैव ॥ २१ ॥

## भेदव्यपदेशाच्चान्यः।१।१।२२॥

आदित्यादिजीवेभ्यो भेदो व्यपदिश्यतेऽस्य परमात्मनः—[३]"य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यश्शरीरं य आदित्यमन्तरो यमयति" [४]"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽत्मा शरीरं य आत्मानमन्तरो यमयति" [५]"योऽक्षरमन्तरे सञ्चरन्यस्याक्षरं शरीरं यमक्षरं न वेद यो मृत्युमन्तरे सञ्चरन्यस्य मृत्युश्शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति [६]चास्यापहतपाप्मनः परमात्मनस्सर्वान् जीवान् शरीरत्वेन व्यपदिश्य तेषामन्तरात्मत्वेनैनं व्यपदिशति। अतस्सर्वेभ्यो हिरण्यगर्भादिजीवेभ्योऽन्य एव परमात्मेति सिद्धम् ॥ २२ ॥

इति श्रीशारीरकमीमांसाभाष्ये अन्तरधिकरणम् ॥ ७ ॥

---

१. वि. पु. ६-७-७०॥
२. महाभारते, उद्योगपर्वणि॥
३. बृ. ५-७-९॥
४. बृ. ५-७-२२॥
५ सुबाल. ७-ख॥
६. इति चास्यापहतपाप्मनः सर्वान् जीवान्॥

# अन्तस्तद्धर्मोपदेशात् ।१।१।२१॥

अयं जगत्कारणभूतः विपश्चिदानन्दमयः, कश्चिदुपचितपुण्यविशेषो जीवविशेषः देहयोगाद्विज्ञायते, नायं परमात्मेति नाशङ्कनीयम्; [१]"य एषोऽन्तरादित्ये हिरण्मयः पुरुषः" इत्यादौ श्रूयमाणः पुरुषाकारः परमात्मैव। कुतः? तद्धर्मोपदेशात्, [२]"स एष सर्वेषां लोकानामीशः सर्वेषां कामानाम्" [३]"तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः" इति निरुपाधिकसर्वलोकसर्वकामेशत्वं स्वत एवाकर्मवश्यत्वं च प्रत्यगात्मनोऽर्थान्तरभूतस्य हि परमपुरुषस्यैव धर्मः, [४]"वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसः परस्तात्" इत्यादिषु त्रिगुणात्मकप्रकृत्यनन्तर्गताप्राकृतस्वासाधारणरूपवत्त्वं च ज्ञानादिगुणवत्तस्यैवहि श्रूयते; ज्ञानादयोऽपि [५]"सत्यं ज्ञानमनन्तं ब्रह्म" [६]"यस्सर्वज्ञस्सर्ववित्" [७]"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इत्यादिषु श्रुतत्वात् तस्य गुणा विज्ञायन्ते। तथा [८]"आदित्यवर्णं तमसः परस्तात्" इत्यादिषु अप्राकृतस्वासाधारणरूपश्रवणात् तद्वत्ता च विज्ञायते। तदेतद्वाक्यकाराश्चाह—"हिरण्मयः पुरुषो दृश्यते" इति 'प्राज्ञस्सर्वान्तरस्स्यात् लोककामेशोपदेशात् तथोदयात्पाप्मनाम्' इत्युक्त्वा, तद्रूपस्य कार्यत्वं मायामयत्वं वा इति विचार्य "स्याद्रूपं कृतकमनुग्रहार्थं तच्चेतसामैश्वर्यात्" इति निरसनीयं मतमुपन्यस्य, "रूपं वा[illegible]ियम् अन्तःकरणप्रत्यक्षनिर्देशात्" इति। व्याख्यातं च द्रमिडाचार्यैः—"नवा मायामात्रम् अञ्जसैव विश्वसृजो रूपम्, तत्तु न चक्षुषा ग्राह्यम्, मनसा त्वकलुषेण साधनान्तरवता गृह्यते, "न चक्षुषा गृह्यते नापि वाचा, मनसा तु विशुद्धेन" इति श्रुतेः; नह्यरूपाया देवतायाः रूपमुपदिश्यते; यथाभूतवादि हि शास्त्रम्; यथा "माहारजतं वासः" "वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णम्" इति प्रकरणान्तरनिर्देशात्" इति। 'साक्षिण' इति 'हिरण्मय' इति रूपसामान्याच्चन्द्रमुखवत्" इतिच वाक्यम्। तच्च व्याख्यातं तैरेव "नमयडत्र विकारमादाय प्रयुज्यते, अनारभ्यत्वादात्मनः" इत्यादिना। अतः प्रधानात् प्रत्यगात्मनश्चार्थान्तरभूतो निरुपाधिकविपश्चिदनवधिकातिशयानन्दोऽप्राकृतस्वासाधारणदिव्यरूपः पुरुषोत्तमः परं ब्रह्म जगत्कारणमिति वेदान्तैः प्रतिपाद्यत इति निरवद्यम्॥ २१॥

---

१. छा. १-६-६॥ २॥ ३. छा. १-६-७॥ ४. यजु. आरण. ३. १३. पुरुषसू॥ ५. तै. आन. १॥ ६. मु. १-१-९॥ ७. श्वे. ६-८॥ ८. यजु. आरण. ३. १३. पुरुषसू॥ ९. अक्षिणी. पा॥

## भेदव्यपदेशाच्चान्यः । १ । १ । २२ ॥

१"य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यश्शरीरं य आदित्यमन्तरो यमयति स त आत्माऽन्तर्याम्यमृत इत्यधिदैवतम् । यश्चक्षुषि तिष्ठन् इत्यध्यात्मम् । यस्सर्वेषु लोकेषु तिष्ठन्नित्यधिलोकम् । यस्सर्वेषु भूतेषु तिष्ठन्नित्यधिभूतम् ।यस्सर्वेषु वेदेषु तिष्ठन्नित्यधिवेदम् । यस्सर्वेषु यज्ञेषु तिष्ठन्नित्यधियज्ञम्" इत्यन्तर्यामिब्राह्मणे ; सुबालोपनिषदि च २"यः पृथिवीमन्तरे सञ्चरन्" इत्यारभ्य, "योऽव्यक्तमन्तरे सञ्चरन् योऽक्षरमन्तरे सञ्चरन् यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युश्शरीरम् यं मृत्युर्न वेद एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः"इति सर्वदेवसर्वलोकसर्वभूतसर्ववेदसर्वयज्ञसर्वात्मोपरिवर्तमानतया तत्तच्छरीरतया तत्तदन्तरात्मतया तत्तदवेद्यतया तत्तन्नियन्तृतया चैभ्यस्सर्वेभ्यः भेदव्यपदेशाच्च, अयमपहतपाप्मा नारायणःप्रधानात् प्रत्यगात्मनश्च अर्थान्तरभूतो निखिलजगदेककारणमिति सिद्धम्॥

इति वेदान्तसारे अन्तरधिकरणम् ॥ ७ ॥

---

( वेदान्तदीपे अन्तरधिकरणम् ॥ ७ ॥ )

---

## अन्तस्तद्धर्मोपदेशात् । १ । १ । २१ ॥

छान्दोग्ये ३"य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" ४"य एषोऽन्तरक्षिणि पुरुषो दृश्यते" इत्यक्ष्यादित्याधारतया श्रूयमाणः पुरुषः किं जीवविशेषः,उत परमपुरुष इति संशयः।जीवविशेष इति पूर्वः पक्षः।कुतः?सशरीरत्वात् । शरीरसंयोगो हि कर्मवश्यस्य जीवस्य स्वकर्मफलभोगायेति । राद्धान्तस्तु—५"स एष सर्वेभ्यः पाप्मभ्य उदितः"इत्यादिना अपहतपाप्मत्वपूर्वकसर्वलोककामेशत्वोपदेशात् । तेषां च जीवेष्वसम्भवात्, अयमक्ष्यादित्याधारः पुरुषोत्तम एव।स्वासाधारणविलक्षणरूपवत्त्वं च ज्ञानबलैश्वर्यादिकल्याणगुणवत् तस्य सम्भवति । श्रूयते च तद्रूपस्याप्राकृतत्वम् ६"आदित्यवर्णं तमसस्तु पारे" इत्यादौ।सूत्रार्थस्तु—आदित्याद्यन्तश्श्रूयमाणः पुरुषः परं ब्रह्म।७तदसाधारणादपहतपाप्मत्वादिधर्मोपदेशात् ॥ २१ ॥

---

१. बृ. ५. अ. ७. ख, ९ ॥
२. सुबाल. ७ ख॥ ३. छा. १-६-६॥
४. छा. १-७-५॥
५. छा. १-६-७॥
६. पुरुषसू॥
७. तदसाधारणापहतपाप्म. पा॥

## भेदव्यपदेशाच्चान्यः ।१।१।२२॥

[१]"य आदित्ये तिष्ठन्नादित्यादन्तरः" [२]"य आत्मनि तिष्ठन्नात्मनोऽन्तरः" इत्यादिभिः जीवाद्भेदव्यपदेशाच्चायं जीवादन्यः परमात्मैव॥ २२॥

इति वेदान्तदीपे अन्तरधिकरणम् ॥ ७ ॥

---

(श्रीशारीरकमीमांसाभाष्ये आकाशाधिकरणम् ॥ ८ ॥)

[३]"यतो वा इमानि भूतानि जायन्ते"इति जगत्कारणं ब्रह्मेत्यवगम्यते। किं तज्जगत्कारणमित्यपेक्षायां [४]"सदेव सोम्येदमग्र आसीत्" [५]"तत्तेजोऽसृजत" [६]"आत्मा वा इदमेक एवाग्र आसीत्"[७]"स इमाल्लोकानसृजत" [८]"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" इति साधारणैश्शब्दैर्जगत्कारणे निर्दिष्टे ईक्षणविशेषानन्दविशेषरूपविशेषार्थस्वभावात्प्रधानक्षेत्रज्ञा[९]दिव्यतिरिक्तं ब्रह्मेत्युक्तम्। इदानीमाकाशादिविशेषशब्दै[१०]र्निर्दिश्य जगत्कारणत्वजगदैश्वर्यादिवादेऽप्याकाशादिशब्दाभिधेयतया प्रसिद्धाचिदचिद्वस्तुनोऽर्थान्तरमुक्तलक्षणमेव ब्रह्मेति प्रतिपाद्यते— आकाशस्तल्लिङ्गात्—इत्यादिना पादशेषेण—

## आकाशस्तल्लिङ्गात्।१।१।२३॥

इदमाम्नायते छान्दोग्ये—[११]"अस्य लोकस्य का गतिरिति आकाश इति होवाच सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्" —इति। तत्र सन्देहः—किं प्रसिद्धाकाश एवात्राकाशशब्देनाभिधीयते,

---

१. बृ. ५. अ-७. ब्रा. ९॥
२. बृ.५.७ १२.विज्ञानस्थाने माध्यन्दिनपाठः॥ ३. तै. भृ. १॥
४. छा. ६-२-१॥
५. छा. ६-२-३॥
६. ऐतरेय. १-१-१॥
७. ऐतरेय. १-१-२॥ ८. तै. आन. १॥
९. क्षेत्रज्ञातिरिक्तं. पा॥
१०. शब्दैर्निर्दिष्टस्य. पा॥
११. छा. १-९-१॥

उतोक्तलक्षणमेव ब्रह्म—इति । किं प्राप्तम् । प्रसिद्धाकाश इति, कुतः? शब्दैकसमधिगम्ये वस्तुनि य एवार्थो व्युत्पत्तिसिद्धश्शब्देन प्रतीयते-स एव ग्रहीतव्यः । अतः प्रसिद्धाकाश एव चराचरभूतजातस्य कृत्स्नस्य कारणम् । अतस्तस्मादनतिरिक्तं ब्रह्म । नन्वीक्षापूर्वकसृष्ट्यादिभिरचेतनाज्जीवाच्च व्यतिरिक्तं ब्रह्मेत्युक्तम् । सत्यमुक्तम्, अयुक्तं तु तत् । तथाहि [1]“यतो वा इमानि भूतानि जायन्ते....तद्ब्रह्म” इत्युक्ते कुत इमानि भूतानि जायन्त इत्यादिविशेषापेक्षायां [2]“सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते” इत्यादिना विशेषप्रतीतेः जगज्जन्मादिकारणमाकाश एवेति निश्चिते सति [3]“सदेव सोम्येदमग्र आसीत्” इत्यादिष्वपि सदादिशब्दास्साधारणाकारास्तमेव विशेषमाकाशमभिदधति । [4]“आत्मा वा इदमेक एवाग्र आसीत्” इत्यादिष्वात्मशब्दोऽपि तत्रैव वर्तते । तस्यापि हि चेतनैकान्तत्वं न सम्भवति ; यथा ‘मृदात्मको घटः’ इति । आप्नोतीत्यात्मेति व्युत्पत्त्या सुतरामाकाशेऽप्यात्मशब्दो वर्तते । अत एवमाकाश एव कारणं ब्रह्मेति निश्चिते सतीक्षणादयस्तदनुगुणा गौणा वर्णनीयाः । यदि हि साधारणशब्दैरेव सदादिभिः कारणमभ्यधायिष्यत ; ईक्षणाद्यर्थानुरोधेन चेतनविशेष एव कारणमिति निरचेष्यत । आकाशशब्देन तु विशेष एव निश्चित इति नार्थस्वाभाव्यान्निर्णेतव्यमस्ति । ननु [5]“आत्मन आकाशस्सम्भूतः” इत्याकाशस्यापि कार्यत्वं प्रतीयते । सत्यम्, सर्वेषामेवाकाशवाय्वादीनां सूक्ष्मावस्था स्थूलावस्था चेत्यवस्थाद्वयमस्ति । तत्राकाशस्य सूक्ष्मावस्था कारणम् । [6]स्थूलावस्था तु कार्यम् । [5]“आत्मन आकाशस्सम्भूतः” इति स्वस्मादेव सूक्ष्मरूपात्स्वयं स्थूलरूपस्सम्भूत इत्यर्थः। [2]“सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते” इति सर्वस्य जगत आकाशादेव

१. तै. भृ. १, अनु॥ २. छा. १-९-१॥ ३. छा. ६-२-१॥ ४. ऐतरेये. १-१-१॥
५. तै. आन. १-२ ॥ ६. स्थूलावस्था कार्यम्. पा॥

प्रभवाप्ययादिश्रवणात्तदेव हि कारणं ब्रह्मेति निश्चितम्। यत एवं प्रसिद्धाकाशादनतिरिक्तं ब्रह्म, अत एव च [१]"यदेष आकाश आनन्दो न स्यात्" [२]"आकाशो ह वै नामरूपयोर्निर्वहिता" इत्येवमादिनिर्देशोऽप्युपपन्नतरः। अतः प्रसिद्धाकाशादनतिरिक्तं ब्रह्मेति ॥

(सिद्धान्तः)

एवं प्राप्ते ब्रूमः—आकाशस्तल्लिङ्गात्—आकाशशब्दाभिधेयः प्रसिद्धाकाशादचेतनादर्थान्तरभूतो यथोक्तलक्षणः परमात्मैव। कुतः? तल्लिङ्गात्—निखिलजगदेककारणत्वम्, सर्वस्माज्ज्यायस्त्वम्, परायणत्वम् इत्यादीनि परमात्मलिङ्गान्युपलभ्यन्ते। [३]निखिलकारणत्वं ह्यचिद्वस्तुनः प्रसिद्धाकाशशब्दाभिधेयस्य नोपपद्यते, चेतनवस्तुनस्तत्कार्यत्वासम्भवात्। परायणत्वं च चेतनानां परमप्राप्यत्वम्। तच्चाचेतनस्य हेयस्य सकलपुरुषार्थविरोधिनो न सम्भवति। सर्वस्माज्ज्यायस्त्वं च निरुपाधिकं सर्वैः कल्याणगुणैस्सर्वेभ्यो निरतिशयोत्कर्षः। तदप्यचितो नोपपद्यते ॥

यदुक्तं जगत्कारणविशेषाकाङ्क्षायामाकाशशब्देन विशेषसमर्पणादन्यत्सर्वं तदनुरूपमेव वर्णनीयमिति, तदयुक्तम्, [४]"सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते"इति प्रसिद्धवन्निर्देशात्। प्रसिद्धवन्निर्देशो हि प्रमाणान्तरप्राप्तिमपेक्षते। प्रमाणान्तराणि च [५]"सदेव सोम्येदमग्र आसीत्" इत्येवमादीन्येव वाक्यानि। तानि च यथोदितप्रकारेणैव ब्रह्म प्रतिपादयन्तीति तत्प्रतिपादितं ब्रह्माकाशशब्देन प्रसिद्धवन्निर्दिश्यते। सम्भवति च परस्य ब्रह्मणः [६]प्रकाशकत्वादाकाशशब्दाभिधेयत्वम्—आकाशते, आकाशयति च—इति। किञ्च अनेनाकाशशब्देन विशेषसमर्पणक्षमेणापि चेतनांशं प्रत्यसम्भावितकारणभावमचेतन-

१. तै. आन. ७-अनु॥
२. छा. ८-१४-१॥
३. निखिलजगदेककारणत्वं. पा॥
४. छा. १-९-१॥
५. छा. ६-२-१॥
६. प्रकाशत्वात्. पा॥

विशेषमभिदधानेन [१]"तदैक्षत बहु स्यां प्रजायेय" [२]"सोऽकामयत। बहु स्यां प्रजायेय" इत्यादि[३]वाक्यशेषावधारितसार्वज्ञ्यसत्यसङ्कल्पत्वादिविशिष्टापूर्वार्थप्रतिपादनसमर्थवाक्यार्थान्यथाकरणं न प्रमाणपदवीमधिरोहति । एवमपूर्वानन्तविशेषणविशिष्टापूर्वार्थप्रतिपादनसमर्थानेकवाक्यगतिसामान्यं चैकेनानुवादस्वरूपेणान्यथा कर्तुं न शक्यते । यत्त्वात्मशब्दश्चेतनैकान्तो न भवति, 'मृदात्मको घटः' इत्यादिदर्शनादित्युक्तम् ; तत्रोच्यते—यद्यपि चेतनादन्यत्रापि क्वचिदात्मशब्दः प्रयुज्यते ; तथापि शरीरप्रतिसम्बन्धिन्यात्मशब्दस्य प्रयोगप्राचुर्यात्[४]"आत्मा वा इदमेक एवाग्र आसीत्"[५]"आत्मन आकाशस्सम्भूतः" इत्यादिषु शरीरप्रतिसम्बन्धिचेतन एव प्रतीयते । यथा गोशब्दस्यानेकार्थवाचित्वेऽपि प्रयोगप्राचुर्यात्सास्नादिमानेव स्वतः प्रतीयते ; अर्थान्तरप्रतीतिस्तु तत्तदसाधारणनिर्देशापेक्षा ; तथा स्वतः प्राप्तं शरीरप्रतिसम्बन्धिचेतनाभिधानमेव[४]"स ईक्षत लोकान्नु सृजा इति"[२]"सोऽकामयत।बहु स्यां प्रजायेय" इत्यादितत्तद्वाक्यविशेषा एव स्थिरीकुर्वन्ति । एवं वाक्यशेषावधारितानन्यसाधारणानेकापूर्वार्थविशिष्टं निखिलजगदेककारणं[६]"सदेव सोम्य" इत्यादिवाक्यसिद्धं ब्रह्मैवाकाशशब्देन प्रसिद्धवत् [७]"सर्वाणि ह वा इमानि भूतानि" इत्यादिवाक्येन निर्दिश्यत इति सिद्धम् ॥ २३ ॥

इति श्रीशारीरकमीमांसाभाष्ये आकाशाधिकरणम् ॥ ८ ॥

☞

(श्रीवेदान्तदीपे आकाशाधिकरणम्)

# आकाशस्तल्लिङ्गात् ।१।१।२३॥

१. छा. ६-२-३॥ २. तै. आन. ६॥ ५. तै. आन. १-२॥
३. वाक्यविशेष. पा॥४. ऐतरेय. १-१-१॥ ६. छां. ६-२-१॥ ७. छा. १-९-१॥

☞ आकाशाधिकरणम्प्राणाधिकरणञ्चैकत्रैव व्याख्यातम् ; अतो वेदान्तसारोऽत्र न निवेशित इति ज्ञेयम् ॥

छान्दोग्ये [1]"अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति" इत्यत्र आकाशशब्दनिर्दिष्टं जगत्कारणं किं प्रसिद्धाकाशः, उत समस्तचिदचिद्वस्तुविलक्षणं ब्रह्मेति संशयः। प्रसिद्धाकाश इति पूर्वः पक्षः। कुतः? आकाशशब्दस्य लोके तत्रैव व्युत्पत्तेः, [2]"यतो वा इमानि भूतानि" इत्यादिसामान्यलक्षणस्य सदादिशब्दानामपि साधारणत्वेन [1]"आकाशादेव समुत्पद्यन्ते" इति विशेषे पर्यवसानात्, ईक्षणादयोऽपि आकाश एव जगत्कारणमिति निश्चिते सति गौणा वर्णनीया इति। राद्धान्तस्तु—[1]"सर्वाणि ह वा इमानि भूतानि" इति प्रसिद्धवन्निर्देशात्, प्रसिद्धेश्चेक्षापूर्वकत्वात्, चिदचिद्वस्तुविलक्षणं सर्वज्ञं ब्रह्माकाशशब्दनिर्दिष्टमिति। सूत्रार्थस्तु—आकाशशब्दनिर्दिष्टं परमेव ब्रह्म, प्रसिद्धवन्निर्दिश्यमानात् जगत्कारणत्वादिलिङ्गात् ॥ २३ ॥

इति श्रीवेदान्तदीपे आकाशाधिकरणम् ॥ ८ ॥

---

( श्रीशारीरकमीमांसाभाष्ये प्राणाधिकरणम् ॥ ९ ॥ )

---

# अत एव प्राणः। १। १। २४॥

इदमाम्नायते छान्दोग्ये—[3]"प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता"इति प्रस्तुत्य[3]"कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्"–इति॥

अत्र प्राणशब्दोऽप्याकाशशब्दवत्प्रसिद्धप्राणव्यतिरिक्ते परस्मिन्नेव ब्रह्मणि वर्तते, तदसाधारणनिखिलजगत्प्रवेशनिष्क्रमणादिलिङ्गात्प्रसिद्धवन्निर्दिष्टात्। अधिकाशङ्का तु—कृत्स्नस्य भूतजातस्य प्राणाधीनस्थितिप्रवृत्त्यादिदर्शनात् प्रसिद्ध एव प्राणो जगत्कारणतया निर्देशमर्हति—इति॥

---

१. छा. १-९-१॥
२. तै. भृ. १-अनु॥
३. छा. १-११-४,५॥

परिहारस्तु–शिलाकाष्ठादिषु चेतनस्वरूपे च तदभावात्[1]"सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इति नोपपद्यत इति । अतः प्राणयति सर्वाणि भूतानीति कृत्वा परं ब्रह्मैव प्राणशब्देनाभिधीयते । अतः प्रसिद्धाकाशप्राणादेरन्यदेव निखिलजगदेककारणमपहतपाप्मत्वसार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणगणं परं ब्रह्मैवाकाश[2]प्राणादिशब्दाभिधेयमिति सिद्धम् ॥ २४ ॥

इति श्रीशारीरकमीमांसाभाष्ये प्राणाधिकरणम् ॥ ९ ॥

---

श्रीवेदान्तसारे आकाशाधिकरणं प्राणाधिकरणञ्च ॥ ८ ॥ ९ ॥

---

## आकाशस्तल्लिङ्गात् । १ । १ । २३ ॥

## अत एव प्राणः । १ । १ । २४ ॥

[3]"सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति" [1]"सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमेवाभ्युज्जिहते" इत्यादौ, [4]"सदेव सोम्येदमग्र आसीत्" इत्यादिना सामान्येन निर्दिष्टस्य जगत्कारणस्य भूताकाशप्राणसहचारिजीववाचिशब्दाभ्यां विशेषनिर्णयशङ्कायां [1]"सर्वाणि ह वा इमानि भूतानि" इति प्रसिद्धवन्निर्दिश्यमानात् जगत्कारणत्वादिलिङ्गात् भूताकाशजीवाभ्याम् अर्थान्तरभूतः परमपुरुष एवात्र आकाशप्राणशब्दनिर्दिष्ट इति निश्चीयते।तत्प्रसिद्धिस्तु—बहुभवनरूपेक्षणानवधिकातिशयानन्दजीवानन्दहेतुत्वविज्ञानमयविलक्षणत्वनिखिलभुवनभयाभयहेतुत्वसर्वलोकसर्वकामेशत्वसर्वपाप्मोदयाप्राकृतस्वासाधारणरूपविशिष्टस्य रविकरविकसितपुण्डरीकनयनस्य सर्वज्ञस्य सत्यसङ्कल्पस्य करणाधिपाधिपस्य परमपुरुषस्यैव निखिलजगदेककारणत्वादिति स एव आकाशप्राणशब्दाभ्यां जगत्कारणत्वेनाभिधीयत इति निर्णयो युक्त एव ॥ २३ ॥ २४ ॥

इति श्रीवेदान्तसारे आकाशाधिकरणं प्राणाधिकरणञ्च ॥ ९ ॥

---

१. छा. १-११-५॥　२. प्राणशब्द. पा॥　|　३. छा. १-९-१॥ ४. छा. ६-२-१॥

(श्रीवेदान्तदीपे प्राणाधिकरणम् ॥ ९ ॥)

## अत एव प्राणः । १। १। २४ ॥

छान्दोग्ये[1] "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता" इति प्रस्तुत्य,[1] "कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता" इत्यत्र निखिलजगत्कारणतया प्राणशब्दनिर्दिष्टः किं प्रसिद्धः प्राणः ? उतोक्तलक्षणं ब्रह्मेति संशयः । प्रसिद्धप्राण इति पूर्वपक्षः । कुतः ? सर्वस्य जगतः प्राणायत्तस्थितिदर्शनात् स एव निखिलजगदेककारणतया निर्देशमर्हतीति । राद्धान्तस्तु—शिलाकाष्ठादिष्वचेतनेषु चेतनस्वरूपेषु च प्राणायत्तस्थित्यभावात्, [1] "सर्वाणि ह वा इमानि भूतानि" इति प्रसिद्धवन्निर्देशादेव हेतोः प्राणशब्दनिर्दिष्टं परमेव ब्रह्म । सूत्रमपि व्याख्यातम् ॥ २४ ॥

इति श्रीवेदान्तदीपे प्राणाधिकरणम् ॥ ९ ॥

( श्रीशारीरकमीमांसाभाष्ये ज्योतिरधिकरणम् ॥ १० ॥ )

अतः परं जगत्कारणत्वव्याप्तेन येनकेनापि निरतिशयोत्कृष्टगुणेन जुष्टं ज्योतिरिन्द्रादिशब्दैरर्थान्तरप्रसिद्धैरप्यभिधीयमानं परं ब्रह्मैवेत्यभिधीयते—ज्योतिश्चरणाभिधानात्—इत्यादिना—

## ज्योतिश्चरणाभिधानात् । १। १। २५ ॥

इदमाम्नायते छान्दोग्ये [2] "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः" इति । तत्र संशयः—किमयं ज्योतिश्शब्देन निर्दिष्टो निरतिशयदीप्तियुक्तोऽर्थः प्रसिद्धमादित्यादिज्योतिरेव कारणभूतं ब्रह्म, उत समस्तचिदचिद्वस्तुजातविसजातीयः परमकारणभूतोऽ-

---

१. छा. १-११-४,७॥ | २. छा. ३-१३-७॥

मितभास्सर्वज्ञस्सत्यसङ्कल्पः पुरुषोत्तमः—इति । किं युक्तम् ? प्रसिद्धमेवं ज्योतिरिति । कुतः ? प्रसिद्धवन्निर्देशेऽप्याकाशप्राणादिवत् स्ववाक्योपात्तपरमात्मव्याप्तलिङ्गविशेषादर्शनात्, परमपुरुषप्रत्यभिज्ञानासम्भवात्, [1]कौक्षेयज्योतिषैक्योपदेशाच्च प्रसिद्धमेव ज्योतिः कारणत्वव्याप्तनिरतिशयदीप्तियोगाज्जगत्कारणं [2]ब्रह्मेति ॥

—(सिद्धान्तः)—

एवं प्राप्ते प्रचक्ष्महे—ज्योतिश्चरणाभिधानात्—द्युसम्बन्धितया निर्दिष्टं निरतिशयदीप्तियुक्तं ज्योतिः परमपुरुष एव । कुतः ? [3]"पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इत्यस्यैव द्युसम्बन्धिनश्चरणत्वेन सर्वभूताभिधानात् ॥

एतदुक्तं भवति—यद्यपि[4]"अथ यदतः परो दिवो ज्योतिः" इत्यस्मिन्वाक्ये परमपुरुषासाधारणलिङ्गं नोपलभ्यते; तथापि पूर्ववाक्ये द्युसम्बन्धितया परमपुरुषस्य निर्देशादिदमपि द्युसम्बन्धिज्योतिस्स एवेति प्रत्यभिज्ञायत इति । [1]कौक्षेयज्योतिषैक्योपदेशश्च फलाय तदात्मकत्वानुसन्धानविधिरिति न कश्चिद्दोषः । [1]कौक्षेयज्योतिषश्च तदात्मकत्वं भगवता स्वयमेवोक्तम्[5]"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः" इति ॥

## छन्दोभिधानान्नेतिचेन्न तथा चेतोर्पणनिगमात्तथाहि दर्शनम् । १ । १ । २६ ॥

पूर्वस्मिन्वाक्ये[6]"गायत्री वा इदं सर्वम्" इति गायत्र्याख्यं छन्दोऽभिधाय [7]"तदेतदृचाऽभ्यनूक्तम्" इत्युदाहृतायाः[8]"तावानस्य महिमा" इत्यस्या ऋचोऽपि छन्दोविषयत्वान्नात्र परमपुरुषाभिधानमिति चेत्—

---

१. कौशेयकज्योतिष. पा॥
२. ब्रह्मेति प्राप्ते प्रचक्ष्महे. पा॥
३. छा.३-१२-६॥ ४. छा. ३-१३-७॥
५. गी. १५-१ ४॥ ६. छा. ३-१२-१॥
७. छा.३-१२-५ ॥
८. छा. ३-१२-६॥

तन्न, तथा चेतोर्पणनिगमात् न गायत्रीशब्देन छन्दोमात्रमिहाभिधीयते, छन्दोमात्रस्य सर्वात्मकत्वानुपपत्तेः अपि तु ब्रह्मणएव गायत्रीचेतोर्पणमिह निगम्यते। ब्रह्मणि गायत्रीसादृश्यानुसन्धानं फलायोपदिश्यत इत्यर्थः। सम्भवति च[१]"पादोऽस्य सर्वा भूतानि।त्रिपादस्यामृतं दिवि" इति चतुष्पदो ब्रह्मणश्चतुष्पदया गायत्र्या च सादृश्यम्। चतुष्पदा च गायत्री क्वचिद्दृश्यते। तद्यथा [२]"इन्द्रश्शचीपतिः। वलेन पीडितः। दुश्च्यवनो वृषा। समित्सुसासहिः" इति। तथा ह्यन्यत्रापि सादृश्याच्छन्दोभिधायी शब्दोऽर्थान्तरे प्रयुज्यमानो दृश्यते। यथा संवर्गविद्यायाम् [३]"ते वा एते पञ्चान्ये पञ्चान्ये दश [४]सम्पद्यन्ते" इत्यारभ्य [३]"सैषा विराडन्नात्" इत्युच्यते॥ २६॥

इतश्च गायत्रीशब्देन ब्रह्मैवाभिधीयते—

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् १।१।२७॥

भूतपृथिवीशरीरहृदयानि निर्दिश्य [५]"सैषा चतुष्पदा" इति व्यपदेशो ब्रह्मण्येव गायत्रीशब्दाभिधेय उपपद्यते॥

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्।१।१।२८॥

पूर्ववाक्ये [६]"त्रिपादस्यामृतं दिवि" इति दिवोऽधिकरणत्वेन निर्देशादिह च दिवः पर इत्यवधित्वेन निर्देशादुपदेशस्य [७]भिन्नरूपत्वेन पूर्ववाक्योक्तं ब्रह्म परस्मिन्न प्रत्यभिज्ञायत इति चेत्—तन्न, उभयस्मिन्नपि उपदेशे अर्थस्वभावैक्येन प्रत्यभिज्ञाया अविरोधात्; यथा 'वृक्षाग्रे श्येनो वृक्षाग्रात्परतश्श्येनः' इति। तस्मात्परमपुरुष एव निरतिशयतेजस्को

---

१. छा. ३-१२-६॥ २. 
३. छा. ४-३-८॥ ४. सन्त इति रङ्गरामानुजीयादिषु पाठो दृश्यते॥ ५. छा. ३-१२-५॥
६. छा. ६-१२-६॥ ७. भिन्नत्वेन. पा॥

दिवः परो ज्योतिर्दीप्यत इति प्रतिपाद्यते । [१]"एतावानस्य महिमा । अतो ज्यायाँश्च पुरुषः । पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि" इति प्रतिपादितस्य चतुष्पदः परमपुरुषस्य [२]"वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे" इत्यभिहिताप्राकृतरूपस्य तेजोऽप्यप्राकृतमिति तद्वत्तया स एव ज्योतिश्शब्दाभिधेय इति निरवद्यम् ॥

इति श्रीशारीरकमीमांसाभाष्ये ज्योतिरधिकरणम् ॥ १० ॥

(वेदान्तसारे ज्योतिरधिकरणम् ॥ १० ॥)

# ज्योतिश्चरणाभिधानात् ।१।१।२५॥

[३]"अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिः" इत्यत्र सर्वस्मात्परत्वेन निर्दिश्यमानतया सकलकारणभूतज्योतिषः कौक्षेयज्योतिषैक्याभिधानात्, स्ववाक्ये विरोधिलिङ्गादर्शनाच्च, प्रसिद्धमेव ज्योतिर्जगत्कारणत्वेन प्रदिपाद्यत इति शङ्कायाम्, यद्यपि स्ववाक्ये विरोधिलिङ्गं न दृश्यते; तथापि पूर्वस्मिन् वाक्ये [४]"पादोऽस्य विश्वा भूतानि।त्रिपादस्यामृतन्दिवि" इति प्रतिपादितस्य सर्वभूतचरणस्य परमपुरुषस्यैव द्युसम्बन्धितयाऽत्रापि प्रत्यभिज्ञानात् स एव ज्योतिश्शब्देन सर्वस्मात् परत्वेन सकलकारणतयाऽभिधीयते। अस्य च कौक्षेयज्योतिषैक्याभिधानं फलायोपदिश्यत इति न कश्चिद्विरोधः। अखिलजगदेककारणभूतः परमपुरुषोऽप्राकृतस्वासाधारणदिव्यवर्णो दिव्यरूपस्तमसः परस्ताद्वर्तत इति तस्यैव निरतिशयदीप्तियोगात् ज्योतिश्शब्दाभिधेयत्वम् [३]"विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेषु" वासश्च युज्यत एव ॥ २५ ॥

# छन्दोभिधानान्नेतिचेन्न तथा चेतोर्पणनिगमात्तथा हि दर्शनम्।१।१।२६॥

---

१. २. यजु. आरण्य. ३. प्र. १२. अ. पुरुषसू ॥

३. छा. ३. १३. ७॥

४. छा. ३-१२-६॥

पूर्वत्र १"गायत्री वा इदं सर्वम्" इति गायत्र्याख्यच्छन्दः प्रस्तुतमिति नात्र परमपुरुषाभिधानमिति चेत्—नैतत्, परमपुरुषस्यैव गायत्रीसादृश्यस्य अनुसन्धानोपदेशत्वात्, तस्य छन्दोमात्रस्य सर्वभूतात्मकत्वानुपपत्तेरेवेति निगम्यते। अन्यत्रापि ह्यन्यस्य छन्दस्सादृश्यात् छन्दोनिर्देशः दृश्यते २"ते वा एते पञ्चान्ये" इत्यारभ्य "सैषा विराट्" इत्यादौ ॥ २६ ॥

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् । १ । १ । २७ ॥

भूतपृथिवीशरीरहृदयैश्चतुष्पदेति व्यपदेशश्च परमपुरुषे गायत्रीशब्दनिर्दिष्टे ह्युपपद्यत इति पूर्वोक्तप्रकार एव समञ्जसः ॥ २७ ॥

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् । १ । १ । २८ ॥

पूर्वत्र ३"त्रिपादस्यामृतन्दिवि" इति परमपुरुषो व्यपदिश्यते। अत्र ४"अथ यदतः परो दिवः" इति पञ्चम्या निर्दिष्टः द्युसम्बन्धिज्योतिरिति न प्रत्यभिज्ञेति चेत्—नैतत्, उभयस्मिन्नपि व्यपदेशे विरोधाभावात्; यथा 'वृक्षाग्रे श्येनः, वृक्षाग्रात्परतश्श्येनः' इति व्यपदेशः। अत्र दिवः परत्वमेव उभयत्र विवक्षितमित्यर्थः ॥ २८ ॥

इति श्रीवेदान्तसारे ज्योतिरधिकरणम् ॥ ९ ॥

(वेदान्तदीपे ज्योतिरधिकरणम् ॥ १० ॥)

## ज्योतिश्चरणाभिधानात् । १ । १ । २५ ॥

छान्दोग्ये ४"अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः" इत्यत्र जगत्कारणत्वव्याप्तनिरतिशयदीप्तियुक्ततया ज्योतिश्शब्दनिर्दिष्टं किं प्रसिद्धादित्यादि ज्योतिः, उत परमेव ब्रह्मेति संशयः, प्रसिद्धज्योतिरिति पूर्वः पक्षः। कुतः? ५"इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः" इति कौक्षेयज्योतिषा

१. छा. ३. १२. १॥
२. छा. ४. ३. ८॥
३. छा. ३. १२. ६॥
४. ५. छा. ३. १३. ७॥

प्रसिद्धेनैक्यावगमात्, स्ववाक्ये तदतिरिक्तपरब्रह्मासाधारणलिङ्गादर्शनाच्च। राद्धान्तस्तु—प्रसिद्धज्योतिषोऽन्यदेव परं ब्रह्म इह निरतिशयदीप्तियुक्तं ज्योतिश्शब्दनिर्दिष्टम्, कुतः, [1]"पादोस्य सर्वा भूतानि। त्रिपादस्यामृतन्दिवि" इति पूर्ववाक्ये द्युसम्बन्धितया निर्दिष्टस्यैव चतुष्पदो ब्रह्मणः [2]" अथ यदतः परो दिवो ज्योतिः" इत्यत्र प्रत्यभिज्ञानात्। तच्च परमेव ब्रह्मेति विज्ञातम्, सर्वेषां भूतानां तस्य पादत्वेन व्यपदेशात्। एवं परब्रह्मत्वे निश्चिते कौक्षेयज्योतिषः तदात्मकत्वानुसन्धानं फलायोपदिश्यत इति ज्ञायते।सूत्रार्थस्तु—ज्योतिश्शब्दनिर्दिष्टं परं ब्रह्म; अस्य ज्योतिषः पूर्ववाक्ये सर्वभूतचरणत्वाभिधानात्। सर्वभूतपादत्वञ्च परस्यैव ब्रह्मण उपपद्यते ॥ २५ ॥

## छन्दोभिधानान्नेतिचेन्न तथा चेतोर्पणनिगमात्तथा हि दर्शनम्। १। १। २६ ॥

[3]"गायत्री वा इदं सर्वम्" इति गायत्र्याख्यच्छन्दसः प्रकृतत्वात्, सर्वभूतपादत्वेन गायत्र्या एवाभिधानान्न ब्रह्मेति चेत्—नैतत्, तथा चेतोर्पणनिगमात् गायत्री यथा भवति, तथा ब्रह्मणि चेतोर्पणोपदेशात्। गायत्रीसादृश्यं चतुष्पात्त्वं ब्रह्मण्यनुसन्धेयमित्युपदिश्यते, गायत्र्यास्सर्वात्मकत्वानुपपत्तेरित्यर्थः। तथाहि दर्शनम्—तथा ह्यन्यत्रापि अच्छन्दस एव सादृश्याच्छन्दश्शब्देनाभिधानं दृश्यते [4]" ते वा एते पञ्चान्ये पञ्चान्ये दश सम्पद्यन्ते " इत्यारभ्य [4]" सैषा विराडन्नात् " इति ॥ २६ ॥

## भूतादिपादव्यपदेशोपपत्तेश्चैवम्। १। १। २७॥

भूतपृथिवीशरीरहृदयानि निर्दिश्य [5] "सैषा चतुष्पदा" इति भूतादीनां पादत्वव्यपदेशश्च ब्रह्मण्येवोपपद्यत इति ब्रह्मैव गायत्रीशब्दनिर्दिष्टमिति गम्यते॥

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्। १। १। २८॥

---

१. छा. ३. १२. ६॥
२. छा. ३. १३. ७॥
३. छा. ३. १२. १॥
४. छा. ४. ३. ८॥
५. छा. ३. १२. ५॥

१"पादोऽस्य सर्वा भूतानि। त्रिपादस्यामृतन्दिवि" इति पूर्ववाक्योदितं परं ब्रह्मैवास्तु,तथापि २"अथ यदतः परो दिवो ज्योतिः"इति द्युसम्बन्धमात्रेण नेह तत्प्रत्यभिज्ञायते ; तत्र चात्र च उपदेशप्रकारभेदात् । तत्र हि 'दिवि' इति द्यौस्सप्तम्या निर्दिश्यते। इह च 'दिवः परो ज्योतिः' इति पञ्चम्या। ततो न प्रतिसन्धानमिति चेन्न ; उभयस्मिन्नपि व्यपदेशो उपरिस्थितिरूपार्थैक्येन प्रतिसन्धानाविरोधात्। यथा 'वृक्षाग्रे श्येनः, वृक्षाग्रात्परतश्श्येनः'इति॥ २८॥

इति श्रीवेदान्तदीपे ज्योतिरधिकरणम् ॥ १० ॥

---

( श्रीशारीरकमीमांसाभाष्ये इन्द्रप्राणाधिकरणम् ॥११॥ )

---

निरतिशयदीप्तियुक्तं ज्योतिश्शब्दाभिधेयं प्रसिद्धवन्निर्दिष्टं परमपुरुष एवेत्युक्तम्। इदानीं कारणत्वव्याप्तामृतत्वप्राप्त्युपायतयोपास्यत्वेन श्रुत इन्द्रप्राणादिशब्दाभिधेयोऽपि परमपुरुष एवेत्याह—

## प्राणस्तथाऽनुगमात् । १ । १ । २९ ॥

कौषीतकीब्राह्मणे प्रतर्दनविद्यायां ३"प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च"इत्यारभ्य३"वरं वृणीष्व" इति वक्तारमिन्द्रं प्रति ३"त्वमेव मे परं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इति प्रतर्दनेनोक्ते ३"स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व"इति श्रूयते। तत्र संशयः—किमयं हिततमोपासनकर्मतयेन्द्रप्राणशब्दनिर्दिष्टो जीव एव ; उत तदतिरिक्तः परमात्मा—इति। किं युक्तम्, जीव एवेति। कुतः? इन्द्रशब्दस्य जीवविशेष एव प्रसिद्धेः, तत्समानाधिकरणस्य प्राणशब्दस्यापि तत्रैव वृत्तेः। अयमिन्द्राभिधानो जीवः प्रतर्दनेन३" त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इत्युक्तः ३" मामुपास्स्व" इति स्वात्मोपासनं हिततममुपदिदेश। हिततमश्चामृतत्वप्राप्त्युपाय एव। जगत्कारणोपासनस्यैवामृतत्वप्राप्तिहेतुता

---

१. छा. ३-१२-६॥ २. छा. ३-१३-७॥ ३. कौषीतक्यां ३. १॥

[1]"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये"इत्यवगता। अतः प्रसिद्धजीवभाव इन्द्र एव कारणं ब्रह्म ॥

इत्याशङ्कायामभिधीयते—प्राणस्तथानुगमात्—इति ; अयमिन्द्रप्राणशब्दनिर्दिष्टो न जीवमात्रम् ; अपि तु जीवादर्थान्तरभूतं परं ब्रह्म। [2]"स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः"इतीन्द्रप्राणशब्दाभ्यां प्रस्तुतस्याऽनन्दाजरामृतशब्दसामानाधिकरण्येनानुगमो हि तथा सत्येवोपपद्यते ॥ २९ ॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् । १। १ । ३० ॥

यदुक्तमिन्द्रप्राणशब्दनिर्दिष्टस्य [2]" आनन्दोऽजरोऽमृतः" इत्यनेनैकार्थ्यादयं परं ब्रह्मेति । तन्नोपपद्यते, [3]"मामेव विजानीहि" [3]"प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व" इति वक्ता हीन्द्रः[2]"त्रिशीर्षाणं त्वाष्ट्रमहनम्" इत्येवमादिना त्वाष्ट्रवधादिभिः प्रज्ञातजीवभावस्य स्वात्मन एवोपास्यतां प्रतर्दनायोपदिशति । अत उपक्रमे जीवविशेष इत्यवगते सति [2]"आनन्दोऽजरोऽमृतः" इत्यादिभिरुपसंहारस्तदनुगुण एव वर्णनीय इति चेत्—

परिहरति—अध्यात्मसम्बन्धभूमा ह्यस्मिन्— आत्मनि यस्सम्बन्धस्सोऽध्यात्मसम्बन्धः । तस्य भूमा-भूयस्त्वम्,—बहुत्वमित्यर्थः । आत्मन्याधेयतया सम्बध्यमानानां बहुत्वेन सम्बन्धबहुत्वम्। तच्चास्मिन्वक्तरि परमात्मन्येव हि सम्भवति। [2]" तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पितास्स एष प्राण एव प्रज्ञात्माऽनन्दोऽजरोऽमृतः" इति भूतमात्राशब्दे-

१. छा. ६. १४. २॥ २. कौ. ३. ९॥ ३. कौ. ३. १॥

नाचेतनवस्तुजातमभिधाय प्रज्ञामात्राशब्देन तदाधारतया चेतनवर्गं चाभिधाय तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्य तमेव [1]"आनन्दोऽजरोऽमृतः" इत्युपदिशति। तदेतच्चेतनाचेतनात्मककृत्स्नवस्त्वाधारत्वं जीवादर्थान्तरभूतेऽस्मिन् परमात्मन्येवोपपद्यत इत्यर्थः ॥

अथवा—अध्यात्मसम्बन्धभूमा ह्यस्मिन्—परमात्मासाधारणधर्मसम्बन्धोऽध्यात्मसम्बन्धः। तस्य भूमा बहुत्वं हि अस्मिन् प्रकरणे विद्यते। तथाहि—प्रथमं [2]"त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इति [1]"मामुपास्स्व" इति च परमात्मासाधारणमोक्षसाधनोपासनकर्मत्वं प्राणशब्दनिर्दिष्टस्येन्द्रस्य प्रतीयते। तथा [2]"एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति एष एवासाधु कर्म कारयति तं यमधो निनीषति" इति सर्वस्य कर्मणः कारयितृत्वं च परमात्मधर्मः। तथा [2]"तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः" इति सर्वाधारत्वं च तस्यैव धर्मः। तथा [2]"स एष प्राण एव प्रज्ञात्माऽनन्दोऽजरोऽमृतः" इत्येतेऽपि परमात्मन एव धर्माः। [2]"एष लोकाधिपतिरेष सर्वेशः" इति च परमात्मन्येव सम्भवति। तदेवमध्यात्मसम्बन्धभूम्नोऽत्र विद्यमानत्वात्परमात्मैवात्रेन्द्रप्राणशब्दनिर्दिष्टः ॥ ३० ॥

कथं तर्हि प्रज्ञातजीवभावस्येन्द्रस्य स्वात्मन उपास्यत्वोपदेशस्सङ्गच्छते; तत्राह—

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् ।१।१।३१॥

प्रज्ञातजीवभावेनेन्द्रेण [3]"मामेव विजानीहि" [3]"मामुपास्स्व" इत्युपास्यस्य ब्रह्मणस्स्वात्मत्वेनोपदेशोऽयं न प्रमाणान्तरप्राप्तस्वात्मावलोकनकृतः, अपितु शास्त्रेण स्वात्मदृष्टिकृतः। एतदुक्तं भवति—[4]"अनेन

१. कौ. ३. ९॥ २. कौ ३. ९॥ ३. कौ. ३. १॥ ४. छा. ६. ३. २॥

जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" [1]"ऐतदात्म्यमिदं सर्वम्"[2]"अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा"[3]"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽत्मा शरीरं य आत्मानमन्तरो यमयति"[4]"एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इत्येवमादिना शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य जीवात्मवाचिनामहंत्वमादिशब्दानामपिं परमात्मन्येव पर्यवसानं ज्ञात्वा [5]"मामेव विजानीहि" [5]"मामुपास्स्व" इति स्वात्मशरीरकं परमात्मानमेवोपास्यत्वेनोपदिदेश—इति । वामदेववत्—यथा वामदेवः परस्य ब्रह्मणः सर्वान्तरात्मत्वं सर्वस्य च तच्छरीरत्वं शरीरवाचिनां च शब्दानां शरीरिणि पर्यवसानं पश्यन् 'अहम्' इति स्वात्मशरीरकं परं ब्रह्म निर्दिश्य तत्सामानाधिकरण्येन मनुसूर्यादीन् व्यपदिशति [6]"तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मि विप्र" इत्यादिना । यथा च प्रह्लादः [7]"सर्वगत्वादनन्तस्य स एवाहमवस्थितः । मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने" इत्यादि वदति ॥ ३१॥

अस्मिन् प्रकरणे जीववाचिभिश्शब्दैरचिद्विशेषाभिधायिभिश्चोपास्यभूतस्य परस्य ब्रह्मणोऽभिधाने कारणं चोद्यपूर्वकमाह—

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् । १।१।३२॥

[8]"न वाचं विजिज्ञासीत वक्तारं विद्यात्" [5]"त्रिशीर्षाणं त्वाष्ट्रमहनम् अरुन्मुखान्यतीन् सालावृकेभ्यः प्रायच्छम्" इत्यादिजीवलिङ्गात्, [5]"या-

१. छा. ६.८. ७॥ २. यजु.आरण॥
३. बृ.५.७.२२॥ ४. सुबाल. ७. ख॥
५. कौ. ३. १॥
६. बृ. ३. ४. १०. 'अहम्मनु-सूर्यश्च' इत्यन्तमेव बृहदारण्यके दृश्यते। ऋक्संहिता (३-६-१५-४-३-२६-१) वाक्यम 'अहम्' इत्यारभ्य 'विप्र' इत्यन्तम् ॥
७. वि.पु.१.१९.८९॥ ८. कौ.१.८

वदस्मिन् शरीरे प्राणो वसति तावदायुः"[1]"अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" इति मुख्यप्राणलिङ्गाच्च नाध्यात्मसम्बन्धभूमेति चेत्—न, उपासात्रैविध्यात् हेतोः, उपासनात्रैविध्यमुपदेष्टुं तत्तच्छब्देनाभिधानम्–निखिलकारणभूतस्य ब्रह्मणस्स्वरूपेणानुसन्धानम्, भोक्तृवर्गशरीरकत्वानुसन्धानम्, भोग्यभोगोपकरणशरीरकत्वानुसन्धानंचेति त्रिविधमनुसन्धानमुपदेष्टुमित्यर्थः। तदिदं त्रिविधं ब्रह्मानुसन्धानं प्रकरणान्तरेष्वप्याश्रितम्–[2]"सत्यं ज्ञानमनन्तं ब्रह्म" [3]"आनन्दो ब्रह्म"–इत्यादिषु स्वरूपानुसन्धानम्;[4]"तत्सृष्ट्वा तदेवानुप्राविशत्।तदनुप्रविश्य। सच्च त्यच्चाभवत्। निरुक्तं चानिरुक्तं च। निलयनं चानिलयनं च। विज्ञानं चाविज्ञानं च। सत्यं चानृतं च सत्यमभवत्" इत्यादिषु भोक्तृशरीरतया, भोग्यभोगोपकरणशरीरतया चानुसन्धानम्। इहापि प्रकरणे तत्त्रिविधमनुसन्धानं युज्यत एवेत्यर्थः॥

एतदुक्तं भवति–यत्र हिरण्यगर्भादिजीवविशेषाणां प्रकृत्याद्यचेतनविशेषाणां च परमात्मासाधारणधर्मयोगः तदभिधायिनां शब्दानां परमात्मवाचिशब्दैस्सामानाधिकरण्यं वा दृश्यते; तत्र परमात्मनस्तत्तच्चिदचिद्विशेषान्तरात्मत्वानुसन्धानं प्रतिपिपादयिषितम्–इति। अतोऽत्रेन्द्रप्राणशब्दनिर्दिष्टो जीवादर्थान्तरभूतः परमात्मैवेति सिद्धम्॥ ३२॥

इति श्रीशारीरकमीमांसाभाष्ये इन्द्रप्राणाधिकरणम्॥ ११॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
प्रथमस्याध्यायस्य प्रथमः पादः॥ १॥

---

१. कौ. ३. १॥
२. तै. आन. १. अनु॥
३. तै. भृ. ६. अनु॥
४. तै. आन. ६. २॥

## प्राणस्तथाऽनुगमात् । १ । १ । २९ ॥

आत्मनां हिततमरूपमोक्षसाधनोपासनकर्मतया प्रज्ञातजीवभावस्य इन्द्रस्य १"प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व" इति विधानात् स एव जगत्कारणम् । कारणोपासनं हि मोक्षसाधनम्, २"तस्य तावदेव चिरं यावन्न विमोक्ष्ये । अथ सम्पत्स्ये" इति श्रुतेरिति नाशङ्कनीयम्; प्राणशब्दसमानाधिकरणेन्द्रशब्दनिर्दिष्टो जीवादर्थान्तरभूत उक्तलक्षणः परमात्मैव । कुतः ? तथानुगमात्; परमात्मासाधारणानन्दाजरामृतादिष्वस्येन्द्रप्राण३शब्दनिर्दिष्टस्यानुगमो हि दृश्यते—१" स एष प्राण एव प्रज्ञात्माऽनन्दोऽजरोऽमृतः " इति ॥ २९ ॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्भन्धभूमा ह्यस्मिन् । १ । १ । ३० ॥

उपक्रमे हि१"मामेव विजानीहि" इति त्वाष्ट्रवधादिना प्रज्ञातजीवभावस्य इन्द्रस्योपदेशात्, उपसंहारस्तदनुगुणो वर्णनीय इति चेत्—नैतत्; अध्यात्मसम्बन्धभूमा ह्यस्मिन्—अध्यात्मं—परमात्मधर्मः । परमात्मधर्मसम्बन्धबहुत्वमस्मिन्निन्द्रशब्दाभिधेये, वाक्योपक्रमप्रभृत्युपसंहाराद्दृश्यते । १" यं त्वं मनुष्याय हिततमं मन्यसे" इति हिततमोपासनं प्रारब्धम् । तच्च परमात्मधर्मः । ४"तमेवं विद्वानमृत इह भवति। नान्यः पन्थाः" इत्यादिश्रुतेः। तथा ५"एष एव साधु कर्म कारयति" इत्यादिना सर्वस्य कारयितृत्वम्, ५"एवमेवैता भूतमात्राः" इत्यारभ्य ५"प्रज्ञामात्राः प्राणेष्वर्पिताः" इति सर्वाधारत्वं, तथा आनन्दादयश्च, ५"एष लोकाधिपतिः" इत्यादिना सर्वेश्वरत्वञ्च ॥ ३० ॥

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् । १ । १ । ३१ ॥

नामरूपव्याकरणादिशास्त्रात्सर्वशब्दैः परमात्मैवाभिधीयत इति दृष्ट्या तज्ज्ञापनायायमिन्द्रशब्देन परमात्मोपदेशः । शास्त्रस्था हि वामदेवादयः तथैव

१. कौ. ३-१॥ २. छा. ६-१४-७॥ ४. पुरुषसू॥ ५. कौ. ३-९॥
३. प्राणशब्दस्यानुगमो. पा॥

वदन्ति—१" तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च " इति ॥ ३१ ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ।१।१।३२॥

२"त्रिशीर्षाणं त्वाष्ट्रमहनम्, यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः" इत्यादिजीवलिङ्गं, मुख्यप्राणलिङ्गं चास्मिन् दृश्यत इति नैवमिति चेन्न; उपासात्रैविध्यात् हेतोर्जीवशब्देन प्राणशब्देन च परमात्मनोऽभिधानम्। अन्यत्रापि परमात्मनः स्वरूपेणोपासनं भोक्तृशरीरकत्वेन भोग्यभोगोपकरणशरीरकत्वेन इति त्रिविधं परमात्मोपासनमाश्रितम्। यथा ३" सत्यं ज्ञानमनन्तं ब्रह्म" इति स्वरूपेण,४"तदनुप्रविश्य सच्च त्यच्चाभवत्"इत्यादि ५"सत्यञ्चानृतञ्च सत्यमभवत्" इति भोक्तृशरीरकत्वेन भोग्यभोगोपकरणशरीरकत्वेन च; इहापि तत्सम्भवादेवमुपदेशः। ६" जन्माद्यस्य यतः" इत्यादिषु सद्ब्रह्मात्मेति सामान्यशब्दैर्हि जगत्कारणं प्रकृतिपुरुषाभ्यामर्थान्तरभूतमिति साधितम्। ७" ज्योतिश्चरणाभिधानात्" इत्यस्मिन् सूत्रे पुरुषसूक्तोदितो महापुरुषो जगत्कारणमिति विशेषतो निर्णीतम्। स एव प्रज्ञातजीववाचिभिरिन्द्रादिशब्दैरपि क्वचित्क्वचिच्छास्त्रदृष्ट्या तत्तच्छरीरकतया चोपास्यत्वायोपदिश्यतइति ८"शास्त्रदृष्ट्या तूपदेशो वामदेववत्"इति उपासात्रैविध्यात् इति साधितम् ॥

इति श्रीवेदान्तसारे इन्द्रप्राणाधिकरणम् ॥ ११ ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तसारे प्रथमस्याध्यायस्य प्रथमः पादः ॥

---

( वेदान्तदीपे इन्द्रप्राणाधिकरणम् ॥ ११ ॥ )

---

## प्राणस्तथाऽनुगमात्।१।१।२९॥

कौषीतकीब्राह्मणे प्रतर्दनविद्यायां ९"त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे"इति प्रतर्दनेनोक्त इन्द्रः ९"प्राणोऽस्मि प्रज्ञात्मा तं मामा-

---

१. बृ. ३-४-१०॥ २. कौ. ३-१॥ ३. तै. आन. १॥ ४,५. तै. आन.६॥ ६. शारी. १-१-२॥ ७.शारी.१-१-२६॥ ८. शारी. १-१-३१॥ ९. कौ. ३-१.

युरमृतमित्युपास्स्व" इत्याह। अत्र हिततमोपासनकर्मतया निर्दिष्ट इन्द्रप्राणशब्दाभिधेयः,किं जीवः? उत परमात्मेति संशयः। जीव इति पूर्वः पक्षः। कुतः? इन्द्रशब्दस्य जीवविशेषे प्रसिद्धेः, प्राणशब्दस्यापि तत्समानाधिकरणस्य स एवार्थ इति १"तम्मामायुरमृतमित्युपास्स्व"इति तस्यैवोपास्यत्वोपदेशात् इति। राद्धान्तस्तु—इन्द्रप्राणशब्दनिर्दिष्टं जीवादर्थान्तरभूतं परं ब्रह्म,१"स एष प्राण एव प्रज्ञात्मा ऽऽनन्दो ऽजरो ऽमृतः"इतीन्द्रप्राणशब्दनिर्दिष्टस्यैव जीवेष्वसम्भावितानन्दत्वाजरत्वामृतत्वादिश्रवणात्।सूत्रार्थस्तु – उपास्यतयोपदिष्टम् इन्द्रप्राणशब्दाभिधेयं परं ब्रह्म; तथेति प्रकारवचनः, परब्रह्मप्रकारभूतेष्वानन्दादिष्वस्यानुगमात् ॥ २९ ॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्। १। १। ३०॥

नायमुपास्यः परमात्मा—१"मामेव विजानीहि"१"तं मामायुरमृतमित्युपास्स्व"इति प्रज्ञातजीवभावस्येन्द्रस्य वक्तुस्स्वात्मन उपास्यत्वोपदेशात्। उपक्रमे जीवभावनिश्चये सति उपसंहारस्य तदनुगुणतया नेयत्वादिति चेन्न; अध्यात्मसम्बन्धभूमा ह्यस्मिन्—आत्मनि सम्बन्धः अध्यात्मसम्बन्धः, तस्य भूमा बहुत्वम्। जीवादर्थान्तरभूतात्मासाधारणधर्मसम्बन्धबहुत्वमस्मिन् प्रकरणे उपक्रमप्रभृत्युपसंहारादुपलभ्यते। उपक्रमे तावत् १"यं त्वं मनुष्याय हिततमं मन्यसे" इति ह्यनेनोच्यमानमुपासनं परमात्मोपासनमेव, तस्यैव हिततमत्वात्। तथा २"एष एव साधु कर्म कारयति" इत्यादिसाध्वसाधुकर्मणोः कारयितृत्वं परमात्मन एव धर्मः। तथा २"तद्यथा रथस्यारेषु नेमिरर्पिता, नाभावरा अर्पिताः, एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः" इति सर्वाधारत्वञ्च तस्यैव धर्मः। आनन्दादयश्च, २"एष लोकाधिपतिरेष सर्वेशः" इति च। हीति हेतौ। अतः परं ब्रह्मैवायमित्यर्थः ॥ ३० ॥

परमात्मैवोपास्यश्चेत् – कथमिन्द्रः १"मामुपास्स्व"इत्युपदिदेश—इत्यत आह—

## शास्त्रदृष्ट्या तूपदेशो वामदेववत्। १। १। ३१॥

---

१. कौ. ३-१॥ २. कौ. ३-९॥

इन्द्रस्य जीवस्यैव सतः स्वात्मत्वेनोपास्यभूतपरमात्मोपदेशोऽयं शास्त्रदृष्ट्या। १"अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा" २"तत्त्वमसि"३"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः"४"एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादीनि हि शास्त्राणि परमात्मानं जीवात्मन आत्मतयोपदिदिशुः; अतो जीवात्मवाचिनश्शब्दाः जीवात्मशरीरं परमात्मानमेव वदन्तीति शास्त्रदृष्टार्थस्य तस्य५"मामेव विजानीहि"५"माम्...उपास्स्व"इति स्वात्मशब्देन परमात्मोपदेशो न विरुध्यते। यथा वामदेवश्शास्त्रदृष्ट्या स्वात्मशरीरकं परमात्मानं पश्यन् अहमिति परमात्मानमवोचत्, ६"तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मि विप्र" इति॥ ३१॥

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्।१।१।३२॥

५"त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान्यतीन्सालावृकेभ्यः प्रायच्छम्"५"यावदस्मिन् शरीरे प्राणो वसति तावदायुः" इति जीवमुख्यप्राणलिङ्गात् नाध्यात्मसम्बन्धभूम्ना परमात्मत्वनिश्चय इति चेन्न;परमात्मन एव स्वाकारेण,जीवशरीरकत्वेन, प्राणशरीरकत्वेन चोपासात्रैविध्याद्धेतोः तत्तच्छब्देनाभिधानमिति निश्चीयते। अन्यत्रापि ब्रह्मोपासनात्रैविध्यस्याश्रितत्वात्—७"सत्यं ज्ञानमनन्तं ब्रह्म" ८"आनन्दो ब्रह्म" इति स्वाकारेणोपास्यत्वम्, ८"सच्च त्यच्चाभवत्" इत्यादिना भोक्तृशरीरकत्वेन, भोग्यशरीरकत्वेन च। इह प्रतर्दनविद्यायामपि तस्य त्रैविध्यस्य सम्भवात्। अतः इन्द्रप्राणशब्दनिर्दिष्टः परमात्मा॥

इति श्रीवेदान्तदीपे इन्द्रप्राणाधिकरणम्॥ ११॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे प्रथमस्याध्यायस्य प्रथमः पादः॥

---

१. आरण. ३. प्र. अनु. २१॥
२. छा. ६-८-७॥
३. बृ. ५-७-२२. माध्यन्दिनपाठे॥
४. सुबाल. ७. ख॥
५. कौ. ३-१॥
६. बृ. ३-४-१०॥
७. तै. आन. १॥
८. तै. आन. ६॥



श्रीमते रामानुजाय नमः.

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

(प्रथमाध्याये-द्वितीयपादे-सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १ ॥)



प्रथमे पादे अधीतवेदः पुरुषः कर्ममीमांसाश्रवणाधिगतकर्मयाथात्म्यविज्ञानः केवलकर्मणामल्पास्थिरफलत्वमवगम्य, वेदान्तवाक्येषु चापातप्रतीतानन्तस्थिरफलब्रह्मस्वरूप [1]तदुपासनसमुपजातपरमपुरुषार्थलक्षणमोक्षापेक्षो ऽवधारितपरिनिष्पन्नवस्तुबोधनशब्दशक्तिः वेदान्तवाक्यानां परस्मिन् ब्रह्मणि निश्चितप्रमाणभावस्तादितिकर्तव्यतारूपशारीरकमीमांसाश्रवणमारभेतेत्युक्तं शास्त्रारम्भसिद्धये ॥ १ ॥

अनन्तविचित्रस्थिरत्रसरूपभोक्तृभोग्यभोगोपकरणभोगस्थानलक्षणनिखिलजगदुदयविभवलयमहानन्दैककारणं परं ब्रह्म "यतो वा इमानि" इत्यादिवाक्यं बोधयतीति च प्रत्यपादि ॥ २ ॥

जगदेककारणं परं ब्रह्म सकलेतरप्रमाणाविषयतया शास्त्रैकप्रमाणकमित्यभ्यधाम ॥ ३ ॥

शास्त्रप्रमाणकत्वं च ब्रह्मणः प्रवृत्तिनिवृत्त्यन्वयविरहेऽपि स्वरूपेणैव परमपुरुषार्थभूते परस्मिन् ब्रह्मणि वेदान्तवाक्यानां समन्वयान्निरूह्यत इत्यब्रूम ॥ ४ ॥

---

१. तदुपासनः समुपजात. पा॥

निखिलजगदेककारणतया वेदान्तवेद्यं ब्रह्म च ईक्षणाद्यन्वयादानुमानिकप्रधानादर्थान्तरभूतश्चेतनविशेष एवेत्युपापीपदाम ॥ ५ ॥

स च स्वाभाविकानवधिकातिशयानन्दविपश्चित्त्वनिखिलचेतनभयाभयहेतुत्वसत्यसङ्कल्पत्वसमस्तचेतनाचेतनान्तरात्मत्वादिभिर्बद्धमुक्तोभयावस्थाज्जीवशब्दाभिलपनीयाच्चार्थान्तरभूत इति च समर्तिथामहि ॥

स चाप्राकृताकर्मनिमित्तस्वासाधारणदिव्यरूप इत्युदैरिराम॥७॥

आकाशप्राणाद्यचेतनविशेषाभिधायिभिर्जगत्कारणतया प्रसिद्धवन्निर्दिश्यमानस्सकलेतरचेतनाचेतनविलक्षणस्स एवेति समगारिष्महि ॥

परतत्त्वासाधारणनिरतिशयदीप्तियुक्तज्योतिश्शब्दाभिधेयो द्युसम्बन्धितया प्रत्यभिज्ञानात्स एवेत्यातिष्ठामहि ॥ १० ॥

परमकारणासाधारणामृतत्वप्राप्तिहेतुभूतः परमपुरुष एव शास्त्रदृष्ट्येन्द्रादिशब्दैरभिधीयत इत्यब्रूमहि ॥ ११ ॥

तदेवमतिपतितसकलेतरप्रमाणसम्भावनाभूमिस्सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरतया स्वेतरसमस्तवस्तुविलक्षणः परं ब्रह्म पुरुषोत्तमो नारायण एव वेदान्तवेद्य इत्युक्तम् ॥

अतः परं द्वितीयतृतीयचतुर्थेषु पादेषु यद्यपि वेदान्तवेद्यं ब्रह्मैव, तथापि कानिचिद्वेदान्तवाक्यानि प्रधानक्षेत्रज्ञान्तर्भूतवस्तुविशेषस्वरूपप्रतिपादनपराण्येवेत्याशङ्क्य तन्निरसनमुखेन तत्तद्वाक्योदितकल्याणगुणाकरत्वं ब्रह्मणः प्रतिपाद्यते ॥

तत्रास्पष्टजीवादिलिङ्गकानि वाक्यानि द्वितीये पादे विचार्यन्ते ; स्पष्टलिङ्गकानि तृतीये ; तत्तत्प्रतिपादनच्छायानुसारीणि चतुर्थे ॥

## सर्वत्र प्रसिद्धोपदेशात् । १ । २ । १ ॥

इदमाम्नायते छान्दोग्ये [१]"अथ खलु क्रतुमयः पुरुषो यथाक्रतु-

---

१. छा. ३-१४-१ ॥

रस्मिल्लोँके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः" इत्यादि ॥

अत्र [१]"स क्रतुं कुर्वीत" इतिं प्रतिपादितस्योपासनस्योपास्यः [१]"मनोमयः प्राणशरीरः" इति निर्दिश्यत इति प्रतीयते। तत्र संशयः— किं मनोमयत्वादिगुणकः क्षेत्रज्ञः ; उत परमात्मा—इति । किं युक्तम्? क्षेत्रज्ञ इति । कुतः? मनःप्राणयोः क्षेत्रज्ञोपकरणत्वात्, परमात्मनस्तु [२]"अप्राणो ह्यमनाः" इति तत्प्रतिषेधाच्च । न च [१]"सर्वं खल्विदं ब्रह्म" इतिं [३]पूर्वनिर्दिष्टं ब्रह्मात्रोपास्यतया सम्बद्धुं शक्यते, [१]"शान्त उपासीत" इत्युपासनोपकरणशान्तिनिर्वृत्त्युपायभूतब्रह्मात्मकत्वोपदेशायोपात्तत्वात्। न च [१]"स क्रतुं कुर्वीत" इत्युपासनस्योपास्यसाकाङ्क्षत्वाद्वाक्यान्तरस्थमपि ब्रह्म सम्बध्यत इति युक्तं वक्तुम्, स्ववाक्योपात्तेन मनोमयत्वादिगुणकेन निराकाङ्क्षत्वात् ; [१]"मनोमयः प्राणशरीरः" इत्यनन्यार्थतया निर्दिष्टस्य विभक्तिविपरिणाममात्रेणोभयाकाङ्क्षानिवृत्तिसिद्धेः । एवं निश्चिते जीवत्वे [१]'एतद्ब्रह्म' इत्युपसंहारस्थब्रह्मपदमपि जीव एव पूजार्थं प्रयुक्तमित्यध्यवसीयत इति ॥

एवं प्राप्ते ब्रूमः—सर्वत्र प्रसिद्धोपदेशात्—मनोमयत्वादिगुणकः परमात्मा । कुतः? सर्वत्र—वेदान्तेषु परस्मिन्नेव ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेरुपदेशात् । प्रसिद्धं हि मनोमयत्वादि ब्रह्मणः । यथा—[४]"मनोमयः प्राणशरीरनेता" [५]"स एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः" [६]"हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति" [७]"न चक्षुषा गृह्यते नापि वाचा" [८]"मनसा तु

१. छा, ३-१४-१॥
२. मु. २-१-२॥
३. पूर्ववाक्यनिर्दिष्ट. पा॥
४. मु. २-२-७॥
५. तै. शिक्षावल्ल्यां. ६-३॥
६. तै. नारायण. ३॥
७. मु. ३-१-८॥
८.

विशुद्धेन" तथा[1]"प्राणस्य प्राणः" [2]"अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" [3]"सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इत्यादिषु। मनोमयत्वं--विशुद्धेन मनसा ग्राह्यत्वम्। प्राणशरीरत्वं--प्राणस्याप्याधारत्वं नियन्तृत्वंच॥

एवं च सति [4]"एष म आत्माऽन्तर्हृदय एतद्ब्रह्म" इति ब्रह्मशब्दोऽपि मुख्य एव भवति। [5]"अप्राणो ह्यमनाः"इति मनआयत्तं ज्ञानं प्राणायत्तां स्थितिं च ब्रह्मणो निषेधति॥

अथवा [6]"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इत्यत्रैवोपासनं विधीयते--सर्वात्मकं ब्रह्म शान्तस्सन्नुपासीतेति। [6]"स क्रतुं कुर्वीत" इति तस्यैव गुणोपादानार्थोऽनुवादः। उपादेयाश्च गुणा मनोमयत्वादयः; यतस्सर्वात्मकं ब्रह्म मनोमयत्वादिगुणकमुपासीतेति वाक्यार्थः। तत्र सन्देहः--किमिह ब्रह्मशब्देन प्रत्यगात्मा निर्दिश्यते; उत परमात्मा--इति। किं युक्तम्? प्रत्यगात्मेति। कुतः? तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः। सर्वशब्दनिर्दिष्टं हि ब्रह्मादिस्तम्बपर्यन्तं कृत्स्नं जगत्। ब्रह्मादिभावश्च प्रत्यगात्मनोऽनाद्यविद्यामूलकर्मविशेषोपाधिको विद्यत एव; परस्य तु ब्रह्मणस्सर्वज्ञस्य सर्वशक्तेरपहतपाप्मनो निरस्तसमस्ताविद्यादिदोषगन्धस्य समस्तहेयाकरसर्वभावो नोपपद्यते। प्रत्यगात्मन्यपि क्वचित्क्वचिद्ब्रह्मशब्दः प्रयुज्यते। अत एव परमात्मा परं ब्रह्मेति परमेश्वरस्य क्वचित्सविशेषणो निर्देशः। प्रत्यगात्मनश्च निर्मुक्तोपाधेर्बृहत्त्वं च विद्यते [7]"स चानन्त्याय कल्पते" इति श्रुतेः। अविदुषस्तस्यैव कर्मनिमित्तत्वाज्जन्मस्थितिलयानां तज्जलानिति हेतुनिर्देशोऽ-

---

१. केनोप. १-२॥ २. कौ. ३-२. अथ खल्वित्यधिकः पाठोनो पनिषदि॥ ३. छा. १-११-५॥

४. छा. ३-१४-४॥ ५. मु. २-१-२॥ ६. छा. ३-१४-१॥ ७. श्वे.५-९॥

त्युपपद्यते । तदयमर्थः–अयं जीवात्मा स्वतोऽपरिच्छिन्नस्वरूपत्वेन ब्रह्मभूतस्सन्ननाद्यविद्यया देवतिर्यङ्मनुष्यस्थावरात्मनाऽवतिष्ठते–इति ॥

अत्र प्रतिविधीयते–सर्वत्र प्रसिद्धोपदेशात्–सर्वत्र–[१]"सर्वं खल्विदम्" इति निर्दिष्टे सर्वस्मिन् जगति ब्रह्मशब्देन तदात्मतया विधीयमानं परं ब्रह्मैव न प्रत्यगात्मा । कुतः? प्रसिद्धोपदेशात्, [१]"तज्जलान्" इति हेतुतः 'सर्वं खल्विदं ब्रह्म' इति प्रसिद्धवदुपदेशात्। ब्रह्मणो जातत्वाद्ब्रह्मणि लीनत्वाद्ब्रह्माधीनजीवनत्वाच्च हेतोर्ब्रह्मात्मकं सर्वं खल्विदं जगदित्युक्ते यस्माज्जगज्जन्मस्थितिलया वेदान्तेषु प्रसिद्धास्तदेवात्र ब्रह्मेति प्रतीयते । तच्च परमेव ब्रह्म ;तथाहि [२]"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्म" इत्युपक्रम्य [३]"आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादिना पूर्वानुवाकप्रतिपादितानवधिकातिशयानन्दयोगिनो विपश्चितः परस्माद्ब्रह्मण एव जगदुत्पत्तिस्थितिलया निर्दिश्यन्ते; तथा [४]"स कारणं करणाधिपाधिपो नचास्य कश्चिज्जनिता नचाधिपः" इति करणाधिपस्य जीवस्याधिपः परं ब्रह्मैव कारणं व्यपदिश्यते। एवं सर्वत्र परस्यैव ब्रह्मणः कारणत्वं प्रसिद्धम् । अतः परब्रह्मणो जातत्वात्तस्मिन् प्रलीनत्वात्तेन प्राणनात्तदात्मकतया तादात्म्यमुपपन्नम्। अतस्सर्वप्रकारं सर्वशरीरं सर्वात्मभूतं परं ब्रह्म शान्तो भूत्वोपासीतेति श्रुतिरेव परस्य ब्रह्मणस्सर्वात्मकत्वमुपपाद्य तस्योपासनमुपदिशति । परं ब्रह्म हि कारणावस्थं कार्यावस्थं सूक्ष्मस्थूलचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतम् । एवम्भूततादात्म्यस्य प्रतिपादने परस्य ब्रह्मणस्सकलहेयप्रत्यनीककल्याणगुणाकरत्वं न विरुध्यते, प्रकारभूत-

१. छा. ३-१४-१ ॥
२. तै. भृ. १ ॥
३. तै. भृ. ६ ॥
४. श्वे. ६-९ ॥

शरीरगतानां दोषाणां प्रकारिण्यात्मन्यप्रसङ्गात्; प्रत्युत निरतिशयैश्वर्यापादनेन गुणायैव भवतीति पूर्वमेवोक्तम्॥

यदुक्तं जीवस्य सर्वतादात्म्यमुपपद्यत इति; तदसत्, जीवानां प्रतिशरीरं भिन्नानामन्योन्यतादात्म्यासम्भवात्। मुक्तस्याप्यनवच्छिन्नस्वरूपस्यापि जगत्तादात्म्यं जगज्जन्मस्थितिप्रलयकारणत्वनिमित्तं न सम्भवतीति [1]"जगद्व्यापारवर्जम्" इत्यत्र वक्ष्यते। जीवकर्मनिमित्तत्वाज्जगज्जन्मस्थितिलयानां स एव कारणमित्यपि न साधीयः, तत्कर्मनिमित्तत्वेऽपीश्वरस्यैव जगत्कारणत्वात्। अतः परमात्मैवाऽत्र ब्रह्मशब्दाभिधेयः। इममेव सूत्रार्थमभियुक्ता बहुमन्वते। यथाह वृत्तिकारः [2]"सर्वं खल्विति सर्वात्मा ब्रह्मेशः" इति॥ १॥

## विवक्षितगुणोपपत्तेश्च।१।२।२॥

वक्ष्यमाणाश्च गुणाः परमात्मन्येवोपपद्यन्ते [3]"मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः" इति। मनोमयः—परिशुद्धेन मनसैकेन ग्राह्यः; विवेकविमोकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मलीकृतेन हि मनसा गृह्यते। अनेन हेयप्रत्यनीककल्याणैकतानतया सकलेतरविलक्षणस्वरूपतोच्यते; मलिनमनोभिर्मलिनानामेव ग्राह्यत्वात्। प्राणशरीरः—जगति सर्वेषां प्राणानां धारकः; प्राणो यस्य शरीरम् आधेयं विधेयं शेषभूतं च स प्राणशरीरः। आधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानीत्युपपादयिष्यते। भारूपः—भास्वररूपः; अप्राकृतस्वासाधारणनिरतिशयकल्याणदिव्यरूपत्वेन निरतिशयदीप्तियुक्त इत्यर्थः। सत्यसङ्कल्पः—अप्रतिहतसङ्कल्पः। आकाशात्मा—आकाशवत्सूक्ष्मस्व-

---

१. शारी. ४-४-१७॥
२. वृत्तिः.
३. छा. ३-१४-२॥

च्छस्वरूपः; सकलेतरकारणभूतस्याऽकाशस्याप्यात्मभूत इति वा आकाशात्मा; स्वयं च प्रकाशते अन्यानपि प्रकाशयतीति वा आकाशात्मा। सर्वकर्मा—क्रियत इति कर्म ; सर्वं जगद्यस्य कर्म, असौ सर्वकर्मा; सर्वा वा क्रिया यस्यासौ सर्वकर्मा। सर्वकामः—काम्यन्त इति कामाः—भोग्यभोगोपकरणादयः ; ते परिशुद्धाः सर्वविधास्तस्य सन्तीत्यर्थः। सर्वगन्धः सर्वरसः—[१]"अशब्दमस्पर्शम्"इत्यादिना प्राकृतगन्धरसादिनिषेधादप्राकृताः स्वासाधारणा निरवद्या निरतिशयाः कल्याणाः स्वभोग्यभूतास्सर्वविधा गन्धरसास्तस्य सन्तीत्यर्थः। सर्वमिदमभ्यात्तः—उक्तं रसपर्यन्तं सर्वमिदं कल्याणगुणजातं स्वीकृतवान्। 'अभ्यात्तः' इति 'भुक्ता ब्राह्मणाः' इतिवत्कर्तरि क्तः प्रतिपत्तव्यः। अवाकी—वाकः उक्तिः ; सोऽस्य नास्तीत्यवाकी। कुत इत्याह—अनादर इति—अवाप्तसमस्तकामत्वेनादर्तव्याभावादादररहितः। अत एव अवाकी—अजल्पाकः; परिपूर्णैश्वर्यत्वाद्ब्रह्मादिस्तम्बपर्यन्तं निखिलं जगत्तृणीकृत्य जोषमासीन इत्यर्थः। त एते विवक्षिता गुणाः परमात्मन्येवोपपद्यन्ते ॥ २ ॥

## अनुपपत्तेस्तु न शारीरः । १ । २ । ३ ॥

तमिमं गुणसागरं पर्यालोचयतां खद्योतकल्पस्य शरीरसम्बन्धनिबन्धनापरिमितदुःखसम्बन्धयोग्यस्य बद्धमुक्तावस्थस्य जीवस्य प्रस्तुतगुणलेशसम्बन्धगन्धोऽपि नोपपद्यत इति नास्मिन् प्रकरणे शारीरपरिग्रहशङ्का जायत इत्यर्थः ॥ ३ ॥

## कर्मकर्तृव्यपदेशाच्च । १ । २ । ४ ॥

[२]"एतमितः प्रेत्याभिसम्भविताऽस्मि" इति प्राप्यतया परं ब्रह्म व्यपदिश्यते, प्राप्तृतया च जीवः। अतः प्राप्ता जीव उपासकः, प्राप्यं परं ब्रह्मोपास्यमिति प्राप्तुरन्यदेवेदमिति विज्ञायते ॥ ४ ॥

१. कठ. १-३-१५ ॥ २. छा. ३-१४-४ ॥

## शब्दविशेषात् । १ । २ । ५ ॥

[१]“ एष म आत्माऽन्तर्हृदये ” इति शारीरष्षष्ठ्या निर्दिष्टः उपास्यस्तु प्रथमया । एवं समानप्रकरणे वाजिनां च श्रुतौ शब्दविशेषश्श्रूयते जीवपरयोः ; यथा [२]“व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा एवमयमन्तरात्मन् पुरुषो हिरण्मयो यथा ज्योतिरधूमम् ” इति । अत्र [२]“ अन्तरात्मन् ” इति सप्तम्यन्तेन शारीरो निर्दिश्यते ; [२]“ पुरुषो हिरण्मयः ” इति प्रथमयोपास्यः । अतः पर एवोपास्यः ॥

इतश्च शारीरादन्यः—

## स्मृतेश्च । १ । २ । ६ ॥

[३]“सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनश्च” [४]“ यो मामेवमसम्मूढो जानाति पुरुषोत्तमम् ”[५]“ ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया । तमेव शरणं गच्छ ” इति शारीरमुपासकं, परमात्मानं चोपास्यं स्मृतिर्दर्शयति ॥ ६ ॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेतिचेन्न निचाय्यत्वादेवं व्योमवच्च । १ । २ । ७ ॥

अल्पायतनत्वमर्भकौकस्त्वम् ; तद्व्यपदेशः—अल्पत्वव्यपदेशः । [६]“एष म आत्माऽन्तर्हृदये”इत्यणीयसि हृदयायतने स्थितत्वात्[६]“ अणीयान् व्रीहेर्वा यवाद्वा”इत्यादिनाऽणीयस्त्वस्य स्वरूपेण व्यपदेशाच्च नायं

---

१. छा. ३-१४-३ ॥
२. शतपथब्राह्मण. १-६-३ ॥
३. गी. १५-१५ ॥
४. गी. १५-१९ ॥
५. गी. १८-६१ ॥
६. छा. ३-१४-३ ॥

परमात्मा,अपि तु जीव एव; [1]"सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इत्यादिभिः परमात्मनोऽपरिच्छिन्नत्वावगमात्, जीवस्य चाराग्रमात्रत्वव्यपदेशादिति चेत्—

नैतदेवम्, परमात्मैव ह्यणीयानित्येवं निचाय्यत्वेन व्यपदिश्यते; एवं निचाय्यत्वेन—एवं द्रष्टव्यत्वेन, एवमुपास्यत्वेनेति यावत्। न पुनरणीयस्त्वमेवास्य स्वरूपमिति;व्योमवच्चायं व्यपदिश्यते, स्वाभाविकं महत्त्वं चात्रैव व्यपदिश्यते—[2]"ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः" इति। अत उपासनार्थमेवाल्पत्वव्यपदेशः। तथाहि [2]"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इति सर्वोत्पत्तिप्रलयकारणत्वेन सर्वस्याऽऽत्मतयाऽनुप्रवेशकृतजीवयितृत्वेन च सर्वात्मकं ब्रह्मोपासीतेत्युपासनं विधाय [2]"अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति यथोपासनं प्राप्यसिद्धिमभिधाय [2]"स क्रतुं कुर्वीत" इति गुणविधानार्थमुपासनमनूद्य [2]"मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः" इति जगदैश्वर्यविशिष्टस्य स्वरूपगुणांश्चोपादेयान् प्रतिपाद्य [2]"एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा" इत्युपासकस्य हृदयेऽणीयस्त्वेन तदात्मतयोपास्यस्य परमपुरुषस्योपासनार्थमवस्थानमुक्त्वा [2]"एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यस्सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः" इत्यन्तर्हृदयेऽवस्थितस्योपास्यमानस्य प्राप्याकारं निर्दिश्य [2]"एष म आत्माऽन्तर्हृदय एतद्ब्रह्म" इत्येवम्भूतं परं ब्रह्म परमकारुण्ये-

---

१. मुण्ड. १-१-६ ॥ २. छा. ३-१४-१,४॥

नास्मदुज्जिजीवयिषयाऽस्मद्धृदये सन्निहितमितीदमनुसन्धानं विधाय [1]"एतमितः प्रेत्याभिसम्भविताऽस्मि" इति यथोपासनं प्राप्तिनिश्चयानुसन्धानं च विधाय [1]"इति यस्य स्यादद्धा न विचिकित्साऽस्ति" इत्येवंविधप्राप्यप्राप्तिनिश्चयोपेतस्योपासकस्य प्राप्तौ न संशयोऽस्तीत्युपसंहृतम् । अत उपासनार्थमर्भकौकस्त्वमणीयस्त्वं च ॥ ७ ॥

## सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् । १ । २ । ८ ॥

जीवस्येव परस्यापि ब्रह्मणश्शरीरान्तर्वर्तित्वमभ्युपगतं चेत्—तद्वदेव शरीरसम्बन्धप्रयुक्तसुखदुःखोपभोगप्राप्तिरिति चेत्—तन्न, हेतुवैशेष्यात्—नहि शरीरान्तर्वर्तित्वमेव सुखदुःखोपभोगहेतुः; अपि तु पुण्यपापरूपकर्मपरवशत्वम्; तत्त्वपहतपाप्मनः परमात्मनो न सम्भवति । तथा च श्रुतिः[2]"तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति ॥ ८ ॥

इति श्रीशारीरकमीमांसाभाष्ये सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १ ॥

---

(श्रीवेदान्तसारे सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १ ॥)

---

## सर्वत्र प्रसिद्धोपदेशात् । १ । २ । १ ॥

[3]"सर्वं खल्विदम्" इति निर्दिष्टेन सामानाधिकरण्येन निर्दिष्टं ब्रह्म परमात्मा; कुतः ?, प्रसिद्धोपदेशात् [3]"तज्जलान्" इति हेतुतस्सर्वात्मकत्वोपदेशादित्यर्थः । प्रसिद्धं हि हेतुतया व्यपदिश्यते । सकलोपनिषत्सु ब्रह्मैव हि जगज्जन्मलयजीवनहेतुतया प्रसिद्धं [4]"यतो वा इमानि" इत्यादिषु ॥ १ ॥

## विवक्षितगुणोपपत्तेश्च । १ । २ । २ ॥

मनोमयत्वसत्यसङ्कल्पत्वादयो विवक्षितगुणाः ब्रह्मण्येवोपपद्यन्ते ॥

---

१. छा. ३-१४-४ ॥
२. मुण्ड. ३-१-१ ॥
३. छा. ३-१४-१ ॥
४. तै. भृ. १ ॥

## अनुपपत्तेस्तु न शारीरः । १ । २ । ३ ॥

दुःखमिश्रपरिमितसुखलवभागिनि शारीरे तु एषां गुणानाम् अनुपपत्तेर्न शारीरोऽयम् ॥ ३ ॥

## कर्मकर्तृव्यपदेशाच्च । १ । २ । ४ ॥

१"एतमितः प्रेत्याभिसंभविताऽस्मि" इत्यभिसंभाव्याभिसंभवितृत्वेन प्रस्तुतब्रह्मजीवयोर्व्यपदेशादभिसंभाव्यं ब्रह्म जीवादर्थान्तरम् ॥ ४ ॥

## शब्दविशेषात् । १ । २ । ५ ॥

२"एष म आत्माऽन्तर्हृदये" इति षष्ठ्या प्रथमया च जीवो ब्रह्म च व्यपदिश्यते । ततश्चार्थान्तरम् ॥ ५ ॥

## स्मृतेश्च । १ । २ । ६ ॥

अत्रापि प्रथमया निर्दिष्टः पुरुषोत्तम इति निश्चीयते। ३"सर्वस्य चाहं हृदि सन्निविष्टः" इति हि स्मृतिः ॥ ६ ॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेतिचेन्न निचाय्यत्वादेवं व्योमवच्च । १ । २ । ७ ॥

२"एष म आत्माऽन्तर्हृदये अणीयन् व्रीहेः" इत्यादिना अल्पायतनत्वात्, स्वरूपाल्पत्वस्य व्यपदेशाच्च, नायं पर इतिचेन्न, उपास्यत्वाद्धेतोस्तथा व्यपदेशः, नतु स्वरूपाल्पत्वेन।व्योमवत्—स्वरूपमहत्वं चात्रैव व्यपदिश्यते—२"ज्यायान् पृथिव्याः ज्यायानन्तरिक्षात्" इत्यादिना ॥ ७ ॥

## सम्भोगप्राप्तिरितिचेन्न वैशेष्यात् । १ । २ । ८ ॥

परोऽप्यन्तश्शरीरे वसति चेत्—जीववत् सुखदुःखोपभोगप्राप्तिस्स्यादितिचेन्न, हेतुवैशेष्यात् ; परस्य हि छन्दतो जीवरक्षायै शरीरान्तर्वासः ॥

इति श्रीवेदान्तसारे सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १ ॥

---

१. छा. ३-१४-४ ॥ २. छा. ३-१४-३ ॥ ३. गी. १५-१५ ॥

# सर्वत्रप्रसिद्धोपदेशात् । १ । २ । १ ॥

छान्दोग्ये श्रूयते, १"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत, अथ खलु क्रतुमयोऽयं पुरुषः यथा क्रतुरस्मिँल्लोके पुरुषो भवति, तथेतः प्रेत्य भवति, स क्रतुं कुर्वीत मनोमयः प्राणशरीरः" इति । अत्र, १"सर्वं खल्विदं ब्रह्म" इति सर्वात्मकत्वेन निर्दिष्टं ब्रह्म, किं प्रत्यगात्मा, उत परमात्मेति संशयः। प्रत्यगात्मेति पूर्वः पक्षः, सर्वत्र तादात्म्योपदेशो हि तस्यैवोपपद्यते । परस्य तु ब्रह्मणः सकलहेयप्रत्यनीककल्याणैकतानस्य समस्तहेयाकारं सर्वतादात्म्यं विरोधादेव न सम्भवति । प्रत्यगात्मनो हि कर्मनिमित्तो ब्रह्मादिस्तम्बपर्यन्तसर्वभाव उपपद्यते । सृष्ट्यादिहेतुत्वञ्च तत्तत्कर्मनिमित्तत्वेन सृष्ट्यादेरुपपद्यते । ब्रह्मशब्दोऽपि बृहत्त्वगुणयोगेन २"तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते" इतिवत्तत्रैव वर्तते। राद्धान्तस्तु— १"तज्जलान्" इति १"सर्वं खल्विदं ब्रह्म" इति तज्जन्मस्थितिलयहेतुकं तदात्मकत्वं प्रसिद्धवन्निर्दिश्यमानं परस्यैव ब्रह्मण उपपद्यते । परस्माद्ब्रह्मण एव हि जगज्जन्मस्थितिलयाः प्रसिद्धाः ३"सोऽकामयत बहु स्यां प्रजायेयेति" ३" इदं सर्वमसृजत " इत्यादिषु । तथा सर्वात्मकत्वञ्च जन्मादिहेतुकं परस्यैव ब्रह्मणः प्रसिद्धम्, ४"सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः" ५"ऐतदात्म्यमिदं सर्वम्" इति । हेयप्रत्यनीककल्याणैकतानात्मनश्च परस्य हेयाकरसर्वभूतात्मत्वमविरुद्धम् । ६"यः पृथिव्यां तिष्ठन्...यस्य पृथिवी शरीरम्" ७"य आत्मनि तिष्ठन्...यस्यात्मा शरीरं स त आत्माऽन्तर्याम्यमृतः" इत्यादिना शरीरात्मभावेन सर्वात्मत्वोपपादनात्; शरीरात्मनोश्च स्वभावव्यवस्थानात् । सर्वं ब्रह्मेति सामानाधिकरण्यनिर्देशश्च सर्वशब्दस्य सर्वशरीरके ब्रह्मण्येव प्रवृत्तेरुपपद्यते । शरीरवाची हि शब्दः शरीरिण्यात्मन्येव पर्यवस्यति; देवमनुष्यादिशब्दवत् । सूत्रार्थस्तु —सर्वत्र— १"सर्वं खल्विदं ब्रह्म" इति निर्दिष्टे वस्तुनि सर्वशब्दवाच्ये सामानाधिकरण्येन तदात्मतया निर्दिष्टं परं ब्रह्मैव । कुतः ?

---

१. छा. ३-१४-१ ॥
२. मुण्ड, १-१-९ ॥
३. तै. आ. ६ ॥
४. छा. ६. ८. ६ ॥
५. छा. ६. ८. ७ ॥
६. बृ. ५. ७. ३ ॥
७. बृ.. ५-७-२२ मध्यन्दिनपाठः ॥

प्रसिद्धोपदेशात्; १"तज्जलान्"इति 'सर्वमिदं ब्रह्म खलु'इति प्रसिद्धवत्तस्योपदेशात् ,सर्वात्मकत्वस्योपदेशाच्च । तदेव हि जगज्जन्मस्थितिलयहेतुत्वेन वेदान्तेषु प्रसिद्धम् ॥ १ ॥

## विवक्षितगुणोपपत्तेश्च । १ । २ । २॥

मनोमयत्वादिकास्सत्यसङ्कल्पत्वमिश्रा विवक्षिता गुणाः परस्मिन्नेवोपपद्यन्ते ॥ २ ॥

## अनुपपत्तेस्तु न शारीरः । १ । २ । ३ ॥

एतेषां गुणनाम् अनन्तदुःखमिश्रपरिमितसुखलवभागिनि अज्ञे कर्मपरवशे शारीरे प्रत्यगात्मन्यनुपपत्तेश्चायं न शारीरः, अपि तु परमेव ब्रह्म ॥ ३ ॥

## कर्मकर्तृव्यपदेशाच्च । १ । २ । ४॥

२"एतमितः प्रेत्याभिसम्भविताऽस्मि" इति प्राप्यतयोपास्यो निर्दिश्यते; प्राप्तृतया च जीवः । अतश्च जीवादन्यदेवेदं परं ब्रह्म ॥४ ॥

## शब्दविशेषात् । १ । २ । ५ ॥

३"एष म आत्माऽन्तर्हृदये" इति शारीरष्षष्ठ्या निर्दिष्टः,उपास्यः प्रथमया । अतश्च जीवादन्यः ॥ ५ ॥

## स्मृतेश्च । १ । २ । ६ ॥

४"सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च" इति स्मृतेश्च । अतश्च जीवादन्य उपास्यः परमात्मा ॥ ६ ॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेतिचेन्न निचाय्यत्वादेवं व्योमवच्च । १ । २ । ७ ॥

१"एष म आत्माऽन्तर्हृदये" इति अल्पस्थानत्वात्, १"अणीयान्व्रीहेर्वा यवाद्वा" इत्यल्पत्वव्यपदेशाच्च न परं ब्रह्मेति चेन्न, निचाय्यत्वादेवम् , एवमुपा

१. छा. ३-१४-१॥
२, छा. ३. १४. ४॥
३. छा. ३. १४. ३॥
४. गी. १५-१५॥

स्यत्वाद्धेतोरल्पायतनत्वालपत्वव्यपदेशः न स्वरूपाल्पत्वेन, १"ज्यायान्पृथिव्याः" इत्यादिना सर्वस्माज्ज्यायस्त्वोपदेशात्।ज्यायसोऽप्यस्य हृदयायतनावच्छेदेनाल्पत्वानुसन्धानमुपपद्यते । व्योमवत्—यथा महतोऽपि व्योम्नस्सूचीपथादिष्वल्पत्वानुसन्धानम्। चशब्दोऽवधारणे। तद्वदेवेत्यर्थः । २स्वाभाविकं चास्य महत्त्वमत्राभिधीयत इत्यर्थः । १"ज्यायान्पृथिव्याः ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः" इति ह्यनन्तरमेवोपदिश्यते ॥ ७ ॥

## सम्भोगप्राप्तिरितिचेन्न वैशेष्यात् । १ । २ । ८ ॥

यद्युपासकशरीरे हृदयेऽयमपि वर्तते ; ततस्तद्वदेवास्यापि शरीरप्रयुक्तसुखदुःखसम्भोगप्राप्तिरिति चेन्न, हेतुवैशेष्यात् । न हि शरीरान्तर्वर्तित्वमात्रमेव सुखदुःखोपभोगहेतुः ; अपि तु कर्मपरवशत्वम् ; तत्त्वपहतपाप्मनः परमात्मनो न सम्भवति ॥ ८ ॥

इति श्रीवेदान्तदीपे सर्वत्रप्रसिद्ध्यधिकरणम् ॥ १ ॥

---

( श्रीशारीरकमीमांसाभाष्ये अत्त्रधिकरणम् ॥ २ ॥ )

---

यदि परमात्मा न भोक्ता, एवं तर्हि सर्वत्र भोक्तृतया प्रतीयमानो जीव एव स्यादित्याशङ्क्याह—

## अत्ता चराचरग्रहणात् । १ । २ । ९ ॥

कठवल्लीष्वाम्नायते ३"यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इति । अत्रौदनोपसेचनसूचितोऽत्ता किं जीव एव, उत परमात्मेति सन्दिह्यते । किं युक्तम्? जीव इति । कुतः? भोक्तृत्वस्य कर्मनिमित्तत्वाज्जीवस्यैव तत्सम्भवात् ॥

अत्रोच्यते—अत्ता चराचरग्रहणात्—अत्ता परमात्मैव । कुतः? चराचरग्रहणात्–चराचरस्य कृत्स्नस्यात्तृत्वं हि तस्यैव सम्भवति । न चेदं कर्मनिमित्तभोक्तृत्वम्; अपि तु जगज्जन्मस्थितिलयहेतुभूतस्य पर-

---

१. छा. ३. १४. ३॥ २. व्योमवच्चायं व्यपदिश्यते स्वाभाविकं. पा॥ ३. कठ. १-२-२५ ॥

स्य ब्रह्मणो विष्णोस्संहर्तृत्वम् ; [१]"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्"इत्यत्रैव दर्शनात् । तथा च [२]"मृत्युर्यस्योपसेचनम्" इति वचनात्, [२]"ब्रह्म च क्षत्रं च"इति कृत्स्नं चराचरं जगदिहादनीयौदनत्वेन गृह्यते । उपसेचनं हि नाम स्वयमद्यमानं सदन्यस्यादनहेतुः । अत उपसेचनत्वेन मृत्योरप्यद्यमानत्वात्तदुपसिच्यमानस्य कृत्स्नस्य ब्रह्मक्षत्रपूर्वकस्य जगतश्चराचरस्यादनमत्र विवक्षितमिति गम्यते । ईदृशं चादनमुपसंहार एव । तस्मादीदृशं जगदुपसंहारित्वरूपं भोक्तृत्वं परमात्मन एव ॥ ९ ॥

## प्रकरणाच्च ।१।२।१०॥

प्रकरणं चेदं परस्यैव ब्रह्मणः—[३]"महान्तं विभुमात्मानं मत्वा धीरो न शोचति" [३]"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति हि प्रकृतम् । [२]"क इत्था वेद यत्र सः" इत्यपि हि तत्प्रसादादृते तस्य दुरवबोधत्वमेव पूर्वप्रस्तुतं प्रत्यभिज्ञायते ॥ १० ॥

अथ स्यात्—नायं ब्रह्मक्षत्रौदनमूचितः पुरुषोऽपहतपाप्मा परमात्मा ;अनन्तरम् [४]"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" इति कर्मफलभोक्तुरेव सद्वितीयस्याभिधानात् । द्वितीयश्च प्राणो बुद्धिर्वा स्यात् । ऋतपानं हि कर्मफलभोग एव ; स च परमात्मनो न सम्भवति; बुद्धिप्राणयोस्तु भोक्तुर्जीवस्योपकरणभूतयोर्यथा कथञ्चित्पानेऽन्वयस्सम्भवतीति तयोरन्यतरेण सद्वितीयो जीव एव प्रतिपाद्यते, तदेकप्रकरणत्वात्पूर्वप्रस्तुतोऽत्ताऽपि स एव भवितुमर्हति—इति । तत्रोच्यते—

---

१. कठ. १-३-९॥
२. कठ. १-२-२५ ॥
३. कठ. १-२-२२-२३ ॥
४. कठ. १-३-१ ॥

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्। १।२।११॥

न प्राणजीवौ बुद्धिजीवौ वा गुहां प्रविष्टावृतं पिबन्तावित्युच्येते; अपि तु जीवपरमात्मानौ हि तथा व्यपदिश्येते। कुतः? तद्दर्शनात्। अस्मिन् प्रकरणे जीवपरयोरेव गुहाप्रवेशव्यपदेशो दृश्यते। परमात्मनस्तावत् [१]"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति। जीवस्यापि [२]"या प्राणेन सम्भवत्यदितिर्देवतामयी। गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत" इति। कर्मफलान्यत्तीत्यदितिर्जीव उच्यते। प्राणेन सम्भवति–प्राणेन सह वर्तते। देवतामयी–इन्द्रियाधीनभोगा। गुहां प्रविश्य तिष्ठन्ती–हृदयपुण्डरीकोदरवर्तिनी। भूतेभिर्व्यजायत–पृथिव्यादिभिर्भूतैस्सहिता देवादिरूपेण विविधा जायते। एवं च सति [३]"ऋतं पिबन्तौ" इति व्यपदेशः 'छत्रिणो गच्छन्ति' इति वत्प्रतिपत्तव्यः। यद्वा—प्रयोज्यप्रयोजकरूपेण पाने कर्तृत्वं जीवपरयोरुपपद्यते॥ ११॥

## विशेषणाच्च। १।२।१२॥

अस्मिन् प्रकरणे जीवपरमात्मानावेवोपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वविशिष्टौ सर्वत्र प्रतिपाद्येते। तथाहि–[४]"ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति" इति। ब्रह्मजज्ञो जीवः, ब्रह्मणो जातत्वात् ज्ञत्वाच्च। तं देवमीड्यं विदित्वा–जीवात्मानमुपासकं ब्रह्मात्मकत्वेनावगम्येत्यर्थः। तथा [५]"यस्सेतुरीजानानामक्षरं ब्रह्म यत्परम्। अभयं तितीर्षतां पारं नाचिकेतं शकेमहि" इत्युपास्यः परमात्मोच्यते। नाचिकेतम्–नाचिकेतस्य कर्मणः प्राप्यमित्यर्थः। [६]"आत्मानं रथिनं

---

१. कठ. १-२-१२॥
२. कठ. २-४-७॥
३. कठ. १-३-१॥
४. कठ. १-१-१७॥
५. कठ. १-३-२॥
६. कठ. १-३-३॥

विद्धि शरीरं रथमेव च" इत्यादिनोपासको जीव उच्यते। तथा [1]"विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति प्राप्यप्राप्तारावभिधीयेते जीवपरमात्मानौ । इहापि [2]"छायातपौ" इत्यज्ञत्वसर्वज्ञत्वाभ्यां तावेव विशिष्य व्यपदिश्येते ॥

अथ स्यात् [3]"येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके" इति जीवस्वरूपयाथात्म्यप्रश्नोपक्रमत्वात्सर्वमिदं प्रकरणं जीवपरमिति प्रतीयते—इति। नैतदेवम्, न हि जीवस्य देहातिरिक्तस्यास्तित्वनास्तित्वशङ्कयाऽयं प्रश्नः, तथा सति पूर्ववरद्वयवरणानुपपत्तेः। तथा हि पितुस्सर्ववेदसदक्षिणक्रतुसमाप्तिवेलायां दीयमानदक्षिणावैगुण्येन क्रतुवैगुण्यं मन्यमानेन कुमारेण नचिकेतसा आस्तिकाग्रेसरेण स्वात्मदानेनापि पितुः क्रतुसाद्गुण्यमिच्छता [4]"कस्मै मां दास्यसि" इत्यसकृत्पितरं पृष्टवता स्वनिर्बन्धरुष्टपितृवचनान्मृत्युसदनं प्रविष्टेन स्वसदनात्प्रोषुषि यमे तद्दर्शनात्तत्र तिस्रो रात्रीरुपोषुषा स्वोपवासभीततत्प्रतिविधानप्रवृत्तमृत्युप्रदत्ते वरत्रये आस्तिक्यातिरेकात्प्रथमेन वरेण स्वात्मानं प्रति पितुः प्रसादो वृतः; एतच्च सर्वं देहातिरिक्तमात्मानमजानतो नोपपद्यते। द्वितीयेन च वरेणोत्तीर्णदेहात्मानुभाव्यफलसाधनभूताऽग्निविद्या वृता; तदपि देहातिरिक्तात्मानभिज्ञस्य न सम्भवति । अतस्तृतीयेन वरेण यदिदं व्रियते [3]"येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः" इति; अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्यविज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मतत्त्वजिज्ञासयाऽयं प्रश्नः क्रियते। एवं च [3]"येयं प्रेते" इति न शरीरवियोगमात्राभिप्रायम्;अपि तु सर्वबन्ध-

१. कठ. १-३-९ ॥
२. कठ. १-३-१ ॥
३. कठ. १-१-२० ॥
४. कठ. १-१-४ ॥

विनिर्मोक्षाभिप्रायम्। यथा [१]"न प्रेत्य संज्ञाऽस्ति" इति। अयमर्थः—मोक्षाधिकृते मनुष्ये प्रेते सर्वबन्धविनिर्मुक्ते तत्स्वरूपविषया वादिविप्रतिपत्तिनिमित्ताऽस्तिनास्त्यात्मिका येयं विचिकित्सा, तदपनोदनाय तत्स्वरूपयाथात्म्यं त्वयाऽनुशिष्टोऽहं विद्यां—जानीयाम्—इति। तथा हि बहुधा विप्रतिपद्यन्ते—केचिद्वित्तिमात्रस्याऽत्मनस्स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते। अन्ये वित्तिमात्रस्यैव सतोऽविद्यास्तमयम्। अपरे—पाषाणकल्पस्याऽत्मनो ज्ञानाद्यशेषवैशेषिकगुणोच्छेदलक्षणं कैवल्यरूपम्। अपरे तु— अपहतपाप्मानं परमात्मानमभ्युपगच्छन्तस्तस्यैवोपाधिसंसर्गनिमित्तजीवभावस्योपाध्यपगमेन तद्भावलक्षणं मोक्षमातिष्ठन्ते। त्रय्यन्तनिष्णातास्तु—निखिलजगदेककारणस्याशेषहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य सर्वात्मभूतस्य परस्य ब्रह्मणश्शरीरतया प्रकारभूतस्यानुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्यानादिकर्मरूपाविद्यातिरोहितस्वरूपस्याविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते। तत्र मोक्षस्वरूपं तत्साधनं च त्वत्प्रसादाद्विद्यामिति नचिकेतसा पृष्टो मृत्युस्तस्यार्थस्य दुरवबोधत्वप्रदर्शनेन विविधभोगवितरणप्रलोभनेन चैनं परीक्ष्य योग्यतामभिज्ञाय परावरात्मतत्त्वविज्ञानं परमात्मोपासनं तत्पदप्राप्तिलक्षणं मोक्षं च [२]"तं दुर्दर्शं गूढमनुप्रविष्टम्"इत्यारभ्य [३]"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यन्तेनोपदिश्य तदपेक्षितांश्च विशेषानुपदिदेशेति सर्वं समञ्जसम्। अतः परमात्मैवात्तेति सिद्धम्॥ १२॥

इति श्रीशारीरकमीमांसाभाष्ये अत्त्रधिकरणम्॥ २॥

---

१. बृ. ४-४-१२
२. कठ. १-२-१२॥
३. कठ. १-३-९॥

(श्रीवेदान्तसारे अत्त्रधिकरणम् ॥ २ ॥)

## अत्ता चराचरग्रहणात् । १ । २ । ९ ॥

१"यस्य ब्रह्म च क्षत्रञ्चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इत्यत्र ओदनोपसेचनसूचितोऽत्ता परमपुरुषः, ब्रह्मक्षत्रोपलक्षितस्य चराचरस्य कृत्स्नस्य मृत्यूपसेचनत्वेन अदनीयतया ग्रहणात् ॥ ९ ॥

## प्रकरणाच्च । १ । २ । १० ॥

२"महान्तं विभुमात्मानं मत्वा धीरो न शोचति" ३"नायमात्मा प्रवचनेन लभ्यः" इत्यादिना परस्यैव प्रकृतत्वात् स एवायम् ॥ १० ॥

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् । १ । २ । ११ ॥

अनन्तरम् ४"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये" इत्यादिना जीवपरमात्मानावेव प्रयोज्यप्रयोजकभावेन कर्मफलाशनेऽन्वयादुपदिष्टौ, तयोरेवास्मिन् प्रकरणे गुहाप्रवेशदर्शनात्; ५"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितम्" इति परस्य, ६"या प्राणेन सम्भवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती" इति जीवस्य । कर्मफलादनाददितिर्जीवः ॥ ११ ॥

## विशेषणाच्च । १ । २ । १२ ॥

जीवपरावेव हि सर्वत्रास्मिन्प्रकरणे विशेष्येते, ७"न जायते म्रियते वा विपश्चित्" इत्यादौ जीवः ८"अणोरणीयान् महतो महीयान्" २"महान्तं विभुमात्मानम्"३"नायमात्मा प्रवचनेन"९"विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्"इत्यादिषु परः। १०"त्रिपादस्यामृतं दिवि" ११"अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषु उत्तमेषु लोकेषु" इति विश्वतः प्राकृतात् स्थानात् परं विष्णोः परस्थानमेव हि संसाराध्वनः पारभूतं मुमुक्षुभिः प्राप्यम् १०"परमं पदं

१. कठ. १-२-२५ ॥
२. कठ. १-२-२२, ॥
३. कठ. १-२-२३॥ ४. कठ. १-३-१॥
५. कठ. १-२-१२ ॥ ६. कठ. २-४-७॥
७. कठ. १-२-१८ ॥
८. कठ. १-२-२० ॥
९. कठ. १-३-९ ॥ १०. पुरुषसू ॥
११. छा. ३-१३-७ ॥

सदा पश्यन्ति सूरयः''१''तदक्षरे परमे व्योमन्''२''क्षयन्तमस्य रजसः पराके
३''विश्वं पुराणं तमसः परस्तात्'' ४'' ते ह नाकं महिमानस्सचन्ते। यत्र पू
साध्यास्सन्ति देवाः'' इत्यादिसकलोपनिषत्प्रसिद्धम् ॥ १२ ॥

इति श्रीवेदान्तसारे अत्त्रधिकरणम् ॥ २ ॥

(श्रीवेदान्तदीपे अत्त्रधिकरणम् ॥ २ ॥)

## अत्ता चराचरग्रहणात्। १। २। ९॥

कठवल्लीष्वाम्नायते५''यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्यो पसेचनं क इत्था वेद यत्र सः'' इति । अत्रौदनोपसेचनसूचितोऽत्ता किं जीवः ? उत परमात्मेति संशयः । जीव इति पूर्वः पक्षः । कुतः ? भोक्तृत्वस्य कर्मनिमित्तत्वात् , जीवस्यैव तत्सम्भवात् । राद्धान्तस्तु—सर्वोपसंहारे मृत्यू पसेचनमदनीयं चराचरात्मकं कृत्स्नं जगदिति तस्यैतस्यात्ता परमात्मैव। न चे दं कर्मनिमित्तं भोक्तृत्वम् , अपि तु जगत्सृष्टिस्थितिलयलीलस्य परमात्मन जगदुपसंहारित्वरूपं भोक्तृत्वम् । सूत्रार्थः—ब्रह्मक्षत्रौदनस्यात्ता परमात्मा, ब्र ह्मक्षत्रशब्देन चराचरस्य कृत्स्नस्य जगतो ग्रहणात् । मृत्यूपसेचनो ह्योदनो ब्रह्मक्षत्रमात्रम् ; अपि तु तदुपलक्षितं चराचरात्मकं कृत्स्नं जगदेव ॥ ९॥

## प्रकरणाच्च। १। २। १०॥

६''महान्तं विभुमात्मानं मत्वा धीरो न शोचति'' ६''नायमात्मा प्रवचने लभ्यो न मेधया'' इति परस्यैव हीदं प्रकरणम् ; अतश्चायं परमात्मा ॥ १० ॥

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्।१। २। ११।

नन्वनन्तरम् ७''ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये इति द्वयोः कर्मफलादनश्रवणात् , परमात्मनश्च कर्मफलादनानन्वयात् ,अन्त करणद्वितीयो जीव एव तत्रात्तेति प्रतीयते ; अतोऽत्रापि स एव जीवोऽत्ता भवितुमर्हतीत्याशङ्क्याह—गुहां प्रविष्टौ जीवात्मपरमात्मानौ ; जीवद्विती

१.तै.नारा. ६-२॥ २.सामवे.उत्तर.१७-२-२॥ ३. तै. नारा. ६-५ ॥ ४. पुरुषसू.॥ ५. कठ. १-२-२५ ॥ ६. कठ. १-२-२२, २३ ॥ ७. कठ. १-३-१ ॥

परमात्मैव तत्र प्रतीयत इत्यर्थः । स्वयमनश्नतोऽपि परमात्मनः प्रयोजकतया पानेऽन्वयो विद्यते । जीवद्वितीयः परमात्मेति कथमवगम्यते ? तद्दर्शनात्—तयोरेव ह्यस्मिन्प्रकरणे गुहाप्रवेशव्यपदेशो दृश्यते—[1]"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति परमात्मनः; [2]"या प्राणेन सम्भवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत" इति जीवस्य । कर्मफलान्यत्तीत्यदितिः जीवः ॥ ११ ॥

# विशेषणाच्च ।१।२।१२॥

अस्मिन्प्रकरणे ह्युपक्रमप्रभृत्योपसंहाराज्जीवपरमात्मानावेवोपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वादिभिर्विशेष्येते [3]"महान्तं विभुमात्मानं मत्वा धीरो न शोचति" [4]"विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यादिषु ; अतश्चात्ता परमात्मा ॥ १२ ॥

इति श्रीवेदान्तदीपे अत्त्रधिकरणम् ॥ २ ॥

( श्रीशारीरकमीमांसाभाष्ये अन्तराधिकरणम् ॥ ३ ॥ )

# अन्तर उपपत्तेः ।१।२।१३॥

[5]इदमामनन्ति च्छन्दोगाः [6]"य एषोऽक्षिणि पुरुषो दृश्यते । एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म" इति । तत्र सन्देहः—किमयमक्ष्याधारतया निर्दिश्यमानः पुरुषः प्रतिबिम्बात्मा, उत चक्षुरिन्द्रियाधिष्ठाता देवताविशेषः, उत जीवात्मा, अथ परमात्मा—इति । किं युक्तम् ? प्रतिबिम्बात्मेति । कुतः? प्रसिद्धवन्निर्देशात् ; 'दृश्यते' इत्यपरोक्षाभिधानाच्च । जीवात्मा वा, तस्यापि हि चक्षुषि विशेषेण सन्निधानात्प्रसिद्धिरुपपद्यते? उन्मीलितं हि चक्षुरुद्वीक्ष्य जीवात्मनश्शरीरे स्थितिगती निश्चिन्वन्ति । [7]"रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः" इति [8]श्रुतिप्रसिद्ध्या चक्षुःप्रति-

१. कठ. १-२-१२॥ २. कठ. २-४-७॥
३. कठ. १-२-२२॥ ४. कठ. १-३-९॥
५. इदं समामनन्ति पा॥
६. छा. ४-१५-१॥
७. बृ. ७-५-१॥
८. श्रुतिप्रसिद्ध पा॥

ष्ठो देवताविशेषो वा ; एष्वेव प्रसिद्धवन्निर्देशोपपत्तेरेषामन्यतमः—

इति प्राप्ते प्रचक्ष्महे—अन्तर उपपत्तेः—अक्ष्यन्तरः परमात्मा । कुतः? [1]"एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति एतं संयद्वाम इत्याचक्षते । एतं हि सर्वाणि वामान्यभिसंयन्ति एष उ एव वामनिः । एष हि सर्वाणि वामानि नयति । एष उ एव भामनिः । एष हि सर्वेषु लोकेषु भाति" इत्येषां गुणानां परमात्मन्येवोपपत्तेः ॥ १३ ॥

## स्थानादिव्यपदेशाच्च । १ । २ । १४ ॥

चक्षुषि स्थितिनियमनादयः परमात्मन एव [2]"यश्चक्षुषि तिष्ठन्" इत्येवमादौ व्यपदिश्यन्ते । अतश्च[3]"य एषोऽक्षिणि पुरुषः" इति स एव प्रतीयते । अतः प्रसिद्धवन्निर्देशश्च परमात्मन्युपपद्यते । तत एव 'दृश्यते' इति साक्षात्कारव्यपदेशोऽपि योगिभिर्दृश्यमानत्वादुपपद्यते ॥ १४ ॥

## सुखविशिष्टाभिधानादेव च । १ । २ । १५ ॥

इतश्चाक्ष्याधारः पुरुषोत्तमः—[4]"कं ब्रह्म खं ब्रह्म" इति प्रकृतस्य सुखविशिष्टस्य ब्रह्मणः उपासनस्थानविधानार्थं संयद्वामत्वादिगुणविधानार्थं च [3]"य एषोऽक्षिणि पुरुषः" इत्यभिधानात् । एवकारो नैरपेक्ष्यं हेतोर्द्योतयति ॥

नन्वग्निविद्याव्यवधानात् [4]"कं ब्रह्म" इति प्रकृतं ब्रह्म नेह सन्निधत्ते। तथा हि—अग्नयः[4]" प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इति ब्रह्मविद्यामुपदिश्य[5]"अथ हैनं गार्हपत्योऽनुशशास" इत्यारभ्याग्नीनामुपासनमुपदिदिशुः। नचाग्निविद्या ब्रह्मविद्याङ्गमिति शक्यं वक्तुम् ; ब्रह्मविद्याफलानन्तर्गततद्विरोधिसर्वायुःप्राप्तिसन्तत्यविच्छेदादिफलश्रवणात्। उच्यते—[4]"प्राणो ब्रह्म"[1]"एतदमृतमभयमेतद्ब्रह्म" इत्युभयत्र ब्रह्मसंशब्दनात् ।[6]"आ-

---

१. छा. ४-१५-३॥ २. बृ. ५-७-१८॥ ३. छा. ४-१५-१॥ ४. छा. ४-१०-५॥ ५. छा. ४-११-१॥ ६. छा. ४-१४-१॥

चार्यस्तु ते गतिं वक्ता" इत्यग्निवचनाच्च गत्युपदेशात्पूर्वं ब्रह्मविद्याया असमाप्तेस्तन्मध्यगताग्निविद्या ब्रह्मविद्याङ्गमिति निश्चीयते; [१]"अथ हैनं गार्हपत्योऽनुशशास" इति ब्रह्मविद्याधिकृतस्यैवाग्निविद्योपदेशाच्च। किञ्च [२]"व्याधिभिः प्रतिपूर्णोऽस्मि" इति ब्रह्मप्राप्तिव्यतिरिक्तनानाविधकामोपहतिपूर्वकगर्भजन्मजरामरणादिभव[३]भयोपतप्तायोपकोसलाय [४]"एषा सोम्य तेऽस्मद्विद्याऽऽत्मविद्या च"इति समुच्चित्योपदेशान्मोक्षैकफलात्मविद्याङ्गत्वमग्निविद्यायाः प्रतीयते। एवं चाङ्गत्वेऽवगते सति फलानुकीर्तनमर्थवाद इति गम्यते। नचात्र मोक्षविरोधिफलं किञ्चिच्छ्रूयते,[५]"अपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते उप वयन्तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च" इत्यमीषां फलानां मोक्षाधिकृतस्यानुगुणत्वात्। अपहते पापकृत्याम्—ब्रह्मप्राप्तिविरोधि पापं कर्मापहन्ति। लोकी भवति—तद्विरोधिनि पापे निरस्ते ब्रह्मलोकं प्राप्नोति। सर्वमायुरेति—ब्रह्मोपासनसमाप्तेर्यावदायुरपेक्षितम्,तत्सर्वमेति। ज्योग्जीवति—व्याध्यादिभिरनुपहतो यावद्ब्रह्मप्राप्ति जीवति। नास्यावरपुरुषाः क्षीयन्ते—अस्य शिष्यप्रशिष्यादयः पुत्रपौत्रादयोऽपि ब्रह्मविद एव भवन्ति।[६]"नास्याब्रह्मवित्कुले भवति" इति च श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन श्रूयते। उप वयन्तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च—वयम् अग्नयस्तमेनमुपभुञ्जामः—यावद्ब्रह्मप्राप्ति विघ्नेभ्यः परिपालयाम इति। अतोऽग्निविद्याया ब्रह्मविद्याङ्गत्वेन तत्सन्निधानाविरोधात्सुखविशिष्टं प्रकृतमेव [७]ब्रह्मोपासनस्थानविधानार्थं गुणविधानार्थं चोच्यते। ननु [८]"आचार्यस्तु ते गतिं वक्ता" इति गतिमात्रपरिशेषणादाचार्येण गतिरेवोपदेश्येति गम्यते; तत्कथं स्थानगुणविध्यर्थतोच्यते। तदभिधीयते[८]"आचार्यस्तु ते ग-

१. छा. ४-११-१॥
२. छा. ४. १०. ३॥
३. भयाभि. पा॥ ४. छा.४.१४.१॥
५. छा. ४-१३-२॥ ६. मु. ३-२-९॥
७. ब्रह्म इहोपासनस्थान पा॥
८. छा. ४-५-९॥

तिं वक्ता" इत्यस्यायमभिप्रायः—ब्रह्मविद्यामनुपदिश्य प्रोषुषि गुरौ तदलाभादनाश्वासमुपकोसलमुज्जीवयितुं स्वपरिचरणप्रीता गार्हपत्यादयो गुरोरग्नयस्तस्मै ब्रह्मस्वरूपमात्रं तदङ्गभूतां चाग्निविद्यामुपदिश्य[1] "आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" इति श्रुत्यर्थमालोच्य साधुतमत्वप्राप्त्यर्थमाचार्य एवास्य संयद्वामत्वादिगुणकं ब्रह्म तदुपासनस्थानमर्चिरादिकां च गतिमुपदिशत्विति मत्वा [2]"आचार्यस्तु ते गतिं वक्ता" इत्यवोचन् । गतिग्रहणमुपदेश्यविद्याशेषप्रदर्शनार्थम् । अत एवाचार्योऽपि[3]"अहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते" इत्युपक्रम्य संयद्वामत्वादिकल्याणगुणविशिष्टं ब्रह्माक्षिस्थानोपास्यमर्चिरादिकां च गतिमुपदिदेश । अतः [4]"कं ब्रह्म खं ब्रह्म" इति सुखविशिष्टस्य प्रकृतस्यैव ब्रह्मणोऽत्राभिधानादयमक्ष्याधारः परमात्मा ॥ १५ ॥

ननु च[4]"कं ब्रह्म खं ब्रह्म" इति परं ब्रह्माभिहितमिति कथमवगम्यते, यस्येहाक्ष्याधारतयाऽभिधानं ब्रूषे ; यावता [4]"कं ब्रह्म खं ब्रह्म" इति प्रसिद्धाकाशलौकिकसुखयोरेव ब्रह्मदृष्टिर्विधीयत इति प्रतिभाति,[5]"नाम ब्रह्म"[6]"मनो ब्रह्म" इत्यादिवचनसारूप्यात्। तत्राह—

## अत एव च स ब्रह्म। १। २। १६॥

यतस्तत्र[7]"यदेव कं तदेव खम्"इति सुखविशिष्टस्याऽकाशस्याभिधानम्, अत एव खशब्दाभिधेयस्सः आकाशः परं ब्रह्म। एतदुक्तं भवति—अग्निभिः[4]"प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इत्युक्ते उपकोसल उवाच[8]"विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामि" इति॥

---

१. छा. ४-९-३॥ २. छा. ४-१४-१॥ ३. छा. ४-१४-३॥ ४. छा. ४-१०-५॥ ५. छा. ७-१-५ ॥ ६. छा. ७-३-२॥ ७, ८. छा. ४-१०-५॥

अस्यायमभिप्रायः—न तावत्प्राणादिप्रतीकोपासनमग्निभिरभिहितम्, जन्मजरामरणादिभवभयभीतस्य मुमुक्षोर्ब्रह्मोपदेशाय प्रवृत्तत्वात्। अतो ब्रह्मैवोपास्यमुपदिष्टम्। तत्र प्रसिद्धैः प्राणादिभिस्समानाधिकरणं ब्रह्म निर्दिष्टम्; तेषु च प्राणविशिष्टत्वं जगद्विधरणयोगेन वा प्राणशरीरतया प्राणस्य नियन्तृत्वेन वा ब्रह्मण उपपद्यत इति[1] "विजानाम्यहं यत्प्राणो ब्रह्म" इत्युक्तवान्। तथा सुखाकाशयोरपि ब्रह्मणः शरीरतया तन्नियाम्यत्वेन विशेषणत्वम्; उतान्योन्यव्यवच्छेदकतया निरतिशयानन्दरूपब्रह्मस्वरूपसमर्पणपरत्वेन वा; तत्र पृथग्भूतयोश्शरीरतया विशेषणत्वे वैषयिकसुखभूताकाशयोर्नियामकत्वं ब्रह्मणस्स्यादिति स्वरूपावगतिर्न स्यात्, अन्योन्यव्यवच्छेदकत्वेऽपरिच्छिन्नानन्दैकस्वरूपत्वं ब्रह्मणस्स्यादित्यन्यतरप्रकारनिर्दिधारयिषया[1] "कं च तु खं च न विजानामि" इत्युक्तवान्। उपकोसलस्येममाशयं जानन्तोऽग्नयः [1] "यद्वाव कं तदेव खं यदेव खं तदेव कम्" इत्यूचिरे। ब्रह्मणस्सुखरूपत्वमेवापरिच्छिन्नमित्यर्थः। अतः प्राणशरीरतया प्राणविशिष्टं यद्ब्रह्म, तदेवापरिच्छिन्नसुखरूपं चेति निगमितम्—[1] "प्राणं च हास्मै तदाकाशं चोचुः" इति। अतः [1] "कं ब्रह्म खं ब्रह्म" इत्यत्रापरिच्छिन्नसुखं ब्रह्म प्रतिपादितमिति परं ब्रह्मैव तत्र प्रकृतम्, तदेव चात्राक्ष्याधारतयाऽभिधीयत इत्यक्ष्याधारः परमात्मा॥ १६॥

## श्रुतोपनिषत्कगत्यभिधानाच्च। १। २। १७॥

श्रुतोपनिषत्कस्य—अधिगतपरमपुरुषयाथात्म्यस्यानुसन्धेयतया श्रुत्यन्तरप्रतिपाद्यमाना अर्चिरादिका गतिर्या, तामपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीमुपकोसलायाक्षिपुरुषं श्रुतवते [2] "तेऽर्चिषमेवाभिसम्भव-

---

१. छा. ४-१०-५॥ २. छा. ४-१५-५॥

न्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षम्" इत्यारभ्य[1] "चन्द्रमसो विद्युतं तत्पुरुषोऽमानवस्स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इत्यन्तेनोपदिशति । अतोऽप्ययमक्षिपुरुषः परमात्मा ॥ १७ ॥

## अनवस्थितेरसम्भवाच्च नेतरः । १ । २ । १८ ॥

प्रतिबिम्बादीनामक्षिणि नियमेनानवस्थानादमृतत्वादीनां च निरुपाधिकानां तेष्वसम्भवान्न परमात्मन इतरः छायादिः अक्षिपुरुषो भवितुमर्हति। प्रतिबिम्बस्य तावत्पुरुषान्तरसन्निधानायत्तत्वान्न नियमेनावस्थानसम्भवः । जीवस्यापि सर्वेन्द्रियव्यापारानुगुणत्वाय सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति चक्षुषि नावस्थानम् । देवतायाश्च[2] "रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः" इति रश्मिद्वारेणावस्थानवचनादेशान्तरावस्थितस्यापीन्द्रियाधिष्ठानोपपत्तेर्न चक्षुष्यवस्थानम् । सर्वेषामेवैषां निरुपाधिकामृतत्वादयो न सम्भवन्त्येव । तस्मादक्षिपुरुषः परमात्मा ॥

इति श्रीशारीरकमीमांसाभाष्ये अन्तराधिकरणम् ॥ ३ ॥

---

( वेदान्तसारे अन्तराधिकरणम् ॥ ३ ॥ )

---

## अन्तर उपपत्तेः । १ । २ । १३ ॥

[3] "य एषोऽन्तरक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म" इत्यत्र अक्ष्याधारः परमपुरुषः, निरुपाधिकामृतत्वाभयत्वसंयद्वामत्वादीनामस्मिन्नेवोपपत्तेः ॥ १३ ॥

## स्थानादिव्यपदेशाच्च । १ । २ । १४ ॥

[4] "यश्चक्षुषि तिष्ठन्" इत्यादिना स्थितिनियमनादिव्यपदेशाच्चायं परः ॥

---

१. छा. ४-१५-५॥
२. बृ. ७-५-१०॥
३. छा. ४-१५-१॥
४. बृ. ५-७-१८॥

## सुखविशिष्टाभिधानादेव च । १ । २ । १५ ॥

१"कं ब्रह्म खं ब्रह्म" इति पूर्वत्रास्यैव सुखविशिष्टतया अभिधानाच्चायं परः ॥ १५ ॥

## अत एव च स ब्रह्म । १ । २ । १६ ॥

यतस्तत्र भवभीताय उपकोसलाय ब्रह्मजिज्ञासवे १"कं ब्रह्म खं ब्रह्म" इत्युपदिष्टः १"यद्वा व कं तदेव खम्" इति सुखरूपः; अतस्सुखशब्दाभिधेय आकाशः परमेव ब्रह्म ॥ १६ ॥

## श्रुतोपनिषत्कगत्यभिधानाच्च । १ । २ । १७ ॥

श्रुतब्रह्मस्वरूपाणामधिगन्तव्याया अर्चिरादिगतेरक्षिपुरुषं श्रुतवते२"तेऽर्चिषमेवाभिसम्भवन्ति" इत्यादिनाऽभिधानाच्चायं परमपुरुषः ॥ १७ ॥

## अनवस्थितेरसम्भवाच्चनेतरः । १ । २ । १८ ॥

परस्मादितरो जीवादिर्नाक्ष्याधारः, चक्षुषि नियमेन अनवस्थितेः अमृतत्वाद्यसम्भवाच्च ॥ १८ ॥

इति वेदान्तसारे अन्तराधिकरणम् ॥ ३ ॥

---

( वेदान्तदीपे अन्तराधिकरणम् ॥ ३ ॥)

---

## अन्तर उपपत्तेः । १ । २ । १३ ॥

छान्दोग्ये३"य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म" इत्यत्राक्ष्याधारः पुरुषः किं प्रतिबिम्बात्मजीवदेवताविशेषान्यतमः ? उत परमात्मेति संशयः । एष्वन्यतम इति पूर्वः पक्षः । कुतः ? 'य एष दृश्यते' इति प्रसिद्धवत्साक्षात्कारनिर्देशात् । राद्धान्तस्तु— परमात्मैवायमक्ष्याधारः पुरुषः, अक्षिपुरुषसम्बन्धितया श्रूयमाणा हि निरुपाधिकात्मत्वामृतत्वाभयत्वब्रह्मत्वसंयद्वामत्वादयः परमात्मन्येवोपपद्यन्ते । प्रसिद्धवन्निर्देशश्च

---

१. छा. ४-१०-५॥ २. छा. ४-१५-५॥ ३. छा. ४-१५-१॥

१"यश्चक्षुषि तिष्ठन्" इत्यादिश्रुत्यन्तरप्रसिद्धेरुपपद्यते। साक्षात्कारश्च, तदुपासननिष्ठानां योगिनाम्। सूत्रार्थस्तु—अक्ष्यन्तरः परमात्मा, संयद्वामत्वादीनां गुणानामत्रैवोपपत्तेः॥ १३॥

## स्थानादिव्यपदेशाच्च। १। २। १४॥

स्थानं—स्थितिः। परमात्मन एव १"यश्चक्षुषि तिष्ठन्" इत्यादौ २चक्षुषि स्थितिनियमनादीनां व्यपदेशाच्चायं परमात्मा॥ १४॥

## सुखविशिष्टाभिधानादेव च। १। २। १५॥

३"प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इति सुखविशिष्टतया प्रकृतस्य परस्यैव ब्रह्मणोऽक्ष्याधारतया उपास्यत्वाभिधानाच्चायं परमात्मा। एवकारोऽस्यैव हेतोर्नैरपेक्ष्यावगमाय॥ १५॥

३"प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म"इत्यत्र सुखविशिष्टं परमेव ब्रह्माभिहितमिति कथमिदमवगम्यते? यावता नामादिवत्प्रतीकोपासनमेवेत्याशङ्क्याह—

## अत एव च स ब्रह्म। १। २। १६॥

यतस्तत्र भवभयभीतायोपकोसलाय ब्रह्मस्वरूपजिज्ञासवे ३"कं च तु खं च न विजानामि" इति पृच्छते ३"यद्वाव कं तदेव खं यदेव खं तदेव कम्" इत्यन्योन्यव्यवच्छेदकतया अपरिच्छिन्नसुखस्वरूपं ब्रह्मेत्यभिधाय, ३ "प्राणं च हास्मै तदाकाशं चोचुः" इत्युक्तम्। अत एव खशब्दाभिधेयस्स आकाशोऽपरिच्छिन्नसुखविशिष्टं परं ब्रह्मैव॥ १६॥

## श्रुतोपनिषत्कगत्यभिधानाच्च। १। २। १७॥

श्रुतोपनिषत्कैः अधिगतपरब्रह्मयाथात्म्यैः ब्रह्मप्राप्तये या गतिरर्चिरादिकाऽधिगन्तव्यतयाऽवगता श्रुत्यन्तरे, तस्याश्चेहाक्षिपुरुषं श्रुतवतोऽधिगन्तव्यतया ४"तेऽर्चिषमेवाभिसम्भवन्ति" इत्यादिनाऽभिधानादक्षिपुरुषः परमात्मा॥

१. बृ. ५-७-१८॥ २. चक्षुःस्थिति. पा॥ ३. छा. ४-१०-५॥ ४. छा. ४-१५-५॥

## अनवस्थितेरसम्भवाच्च नेतरः । १ । २ । १८ ॥

परमात्मन इतरः जीवादिकः, तस्याक्ष्णि नियमेनानवस्थितेः, अमृतत्व-संयद्वामत्वादीनां चासम्भवान्न सोऽक्ष्याधारः ॥ १८ ॥

इति वेदान्तदीपे अन्तराधिकरणम् ॥ ३ ॥

---

( श्रीशारीरकमीमांसाभाष्ये अन्तर्याम्यधिकरणम् ॥४॥ )

---

[१]"स्थानादिव्यपदेशाच्च" इत्यत्र [२]"यश्चक्षुषि तिष्ठन्" इत्यादिना प्रतिपाद्यमानं चक्षुषि स्थितिनियमनादिकं परमात्मन एवेति सिद्धं कृत्वाऽक्षिपुरुषस्य परमात्मत्वं साधितम्? इदानीं तदेव समर्थयते—

## अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् । १ । २ । १९ ॥

काण्वा माध्यन्दिनाश्च वाजसनेयिनस्समामनन्ति [३]"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः" इति । एवमम्ब्वग्न्यन्तरिक्षवाय्वादित्यदिक्चन्द्रतारकाकाशतमस्तेजस्सु दैवेषु च सर्वेषु भूतेषु प्राणवाक्चक्षुश्श्रोत्रमनस्त्वग्विज्ञानरेतस्स्वात्मात्मीयेषु च तिष्ठन्तं तत्तदन्तरभूतं तत्तदवेद्यं तत्तच्छरीरकं तत्तद्यमयन्तं कञ्चिन्निर्दिश्य [४]"एष त आत्माऽन्तर्याम्यमृतः" इत्युपदिश्यते । माध्यन्दिनपाठे तु[४]"यस्सर्वेषु लोकेषु तिष्ठन्"[४]"यस्सर्वेषु वेदेषु" [४]"यस्सर्वेषु यज्ञेषु" इति च पर्यायाः । [४]"यो विज्ञाने तिष्ठन्" इत्यस्य पर्यायस्य स्थाने [४]"य आत्मनि तिष्ठन् इति प-

---

१. शारी. १-२-१४॥
२. बृ. ५-७-१८॥
३. बृ. ५-७-३॥
४. बृ. ५-७॥

र्यायः । [१]"स त आत्माऽन्तर्याम्यमृतः" इति च विशेषः। तत्र संशय्यते —किमयमन्तर्यामी प्रत्यगात्मा, उत परमात्मा—इति । किं युक्तम् ? प्रत्यगात्मेति । कुतः ? वाक्यशेषे[२]"द्रष्टा श्रोता" इति करणायत्तज्ञानताश्रुतेः । एवं द्रष्टुरेवान्तर्यामित्वोपदेशात्, [२]"नान्योऽतोऽस्ति द्रष्टा" इति द्रष्ट्रन्तरनिषेधाच्चेति ॥

एवं प्राप्तेऽभिधीयते—अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्—अधिदैवाधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणोऽन्तर्याम्यपहतपाप्मा परमात्मा नारायणः। काण्वपाठसिद्धेभ्योऽधिदैवादिमद्भ्यो वाक्येभ्योऽधिकान्यधिलोकादिमन्ति वाक्यानि माध्यन्दिनपाठे सन्तीति ज्ञापनार्थमधिदैवाधिलोकादिष्वित्युभयोरुपादानम् । तदेवमुभयेष्वपि वाक्येष्वन्तर्यामी परमात्मेत्यर्थः । कुतः ? तद्धर्मव्यपदेशात्; परमात्मधर्मो ह्ययम्, यदेक एव सन् सर्वलोकसर्वभूतसर्वदेवादीन्नियमयतीति । तथा उद्दालकप्रश्नः—[३]"य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति" इत्युपक्रम्य [३]"तमन्तर्यामिणं ब्रूहि" इति, तस्य चोत्तरम् [४]"यः पृथिव्यां तिष्ठन्" इत्यारभ्योक्तम्। तदेतत्सर्वाँल्लोकान् सर्वाणि च भूतानि सर्वान् देवान् सर्वान्वेदान् सर्वांश्च यज्ञानन्तः प्रविश्य सर्वप्रकारनियमनम्, सर्वशरीरतया सर्वस्यात्मत्वं च सर्वज्ञात्सत्यसङ्कल्पात्पुरुषोत्तमादन्यस्य न सम्भवति । तथाहि [५]"अन्तः प्रविष्टश्शास्ता जनानाँ सर्वात्मा" [६]"तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनुप्रविश्य । सच्च त्यच्चाभवत्" इत्यादीन्यौपनिषदानि वाक्यानि परमात्मन एव सर्वस्य प्रशासितृत्वं सर्वस्याऽत्मत्वमित्यादीनि वदन्ति । तथा सुबालोपनिषदि[७]"नैवेह किञ्चनाग्र आसीदमूलमनाधारमिमाः प्रजाः प्रजाय-

१. बृ. ५-७-२३. एषत इति स्थाने सत इति माध्यन्दिनपाठः॥ २. बृ. ५-७-२३॥ ३. बृ. ५-७-१॥ ४. बृ. ५-७-३॥

५. तै. आरण्य. ११. अनु. २०॥ ६. तै. आन. ६॥ ७. सुबाल. ६. ख॥

न्ते दिव्यो देव एको नारायणः। चक्षुश्च द्रष्टव्यं च नारायणः। श्रोत्रं च श्रोतव्यं च नारायणः" इत्यारभ्य [१]"अन्तश्शरीरे निहितो गुहायामज एको नित्यः यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन् यं पृथिवी न वेद यस्यापश्शरीरम्" इत्यादि, [१]"यस्य मृत्युश्शरीरं यो मृत्युमन्तरे सञ्चरन्यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः"–इति परस्यैव ब्रह्मणस्सर्वात्मत्वं सर्वशरीरत्वं सर्वस्य नियन्तृत्वं च प्रतिपाद्यते। स्वाभाविकं चामृतत्वं परमात्मन एव धर्मः। न च परस्यात्मनः करणायत्तं द्रष्टृत्वादिकम्; अपितु स्वभावत एव सर्वज्ञत्वात्सत्यसङ्कल्पत्वाच्च स्वत एव। तथाच श्रुतिः[२]"पश्यत्यचक्षुस्स शृणोत्यकर्णः अपाणिपादो जवनो ग्रहीता"इति। न च दर्शनश्रवणादिशब्दाश्चक्षुरादिकरणजन्मनो ज्ञानस्य वाचकाः; अपितु रूपादिसाक्षात्कारस्य। सच रूपादिसाक्षात्कारः कर्मतिरोहितस्वाभाविकज्ञानस्य जीवस्य चक्षुरादिकरणजन्मा;परस्यतु स्वतएव। [३]"नान्योऽतोऽस्ति द्रष्टा"इत्येतदपि पूर्ववाक्योदितान्नियन्तुर्द्रष्टुरन्यो द्रष्टा नास्तीति वदति। [१]"यं पृथिवी न वेद" [१]"यमात्मा न वेद" इत्येवमादिभिर्वाक्यैः पृथिव्यात्मादिनियाम्यैरनुपलभ्यमान एव नियमयतीति यत्पूर्वमुक्तम्, तदेव [३]"अदृष्टो द्रष्टा अश्रुतश्श्रोता" इति निगमय्य [३]"नान्योऽतोऽस्ति द्रष्टा" इत्यादिना तस्य नियन्तुर्नियन्त्रन्तरं निषिध्यते। [४]"एष त आत्मा" [*]"स त आत्मा" इति च त इति व्यतिरेकविभक्तिनिर्दिष्टस्य जीवस्यात्मतयोपदिश्यमानोऽन्तर्यामी न प्रत्यगात्मा भवितुमर्हति ॥ १९॥

## न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च।१।२।२०॥

१. सुबाल. ७. ख॥
२. श्वे. ३-१९॥
३. बृ. ५-७-२३॥
४. बृ. ५-७; *माध्यन्दिनपाठः ॥

स्मार्तं प्रधानम्। शारीरः जीवः। स्मार्तं च शारीरश्च नान्तर्यामी, अतद्धर्माभिलापात्—तयोरसम्भावितधर्माभिलापात्। स्वभावत एव सर्वस्य द्रष्टृत्वम्, सर्वस्य नियन्तृत्वम्, सर्वस्याऽऽत्मत्वम्, स्वत एवामृतत्वं च तयोर्न सम्भावनागन्धमर्हति। एतदुक्तं भवति—यथा स्मार्तमचेतनं सर्वज्ञत्वनियन्तृत्वसर्वात्मत्वादिकं नार्हति, तथा जीवोऽपि, अतद्धर्मत्वात्—इति ॥

अमीषां गुणानां परमात्मन्यन्वयः, प्रत्यगात्मनि व्यतिरेकश्च सूत्रद्वयेन दर्शितः ॥ २० ॥

निरपेक्षं च हेत्वन्तरमाह—

## उभयेऽपि हि भेदेनैनमधीयते। १। २। २१॥

उभये—माध्यन्दिनाः काण्वाश्च, अन्तर्यामिणो नियाम्यत्वेन वागादिभिरचेतनैस्समम् एनं शारीरमपि विभज्याधीयते—[१]"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इति माध्यन्दिनाः, [२]" यो विज्ञाने तिष्ठन्" इत्यादि च काण्वाः,परमात्मनियाम्यतया तस्माद्विलक्षणत्वेनैनमधीयत इत्यर्थः। अतोऽन्तर्यामी प्रत्यगात्मनो विलक्षणोऽपहतपाप्मा परमात्मा नारायण इति सिद्धम् ॥ २१ ॥

इति श्रीशारीरकमीमांसाभाष्ये अन्तर्याम्यधिकरणम् ॥ ४ ॥

---

( श्रीवेदान्तसारे अन्तर्याम्यधिकरणम् ॥४॥ )

---

## अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्। १। २। १९॥

---

१. बृ. ५-७-२२॥ २. बृ. ५-७-२२. माध्यन्दिनपाठः॥

१"यः पृथिव्यां तिष्ठन्" इत्यादिषु अधिदैवाधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणोऽन्तर्यामी परमपुरुषः, सर्वान्तरत्वसर्वाविदितत्वसर्वशरीरकत्वसर्वनियन्तृत्वादिपरमात्मधर्मव्यपदेशात् ॥ १९ ॥

## न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च।१।२।२०॥

नायं प्रधानं जीवश्च, तयोरसम्भावितसर्वाविदितत्वादिधर्माभिलापात् असम्भावनया यथा न स्मार्तम्, तथा जीवोऽपीत्यर्थः ॥ २० ॥

## उभयेऽपि हि भेदेनैनमधीयते।१।२।२१॥

उभये काण्वा माध्यन्दिनाश्च, २"यो विज्ञाने तिष्ठन्" ३"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽत्मा शरीरं य आत्मानमन्तरो यमयति" इति प्रत्यगात्मनो भेदेन, एनम् अन्तर्यामिणम् अधीयते; अतः पर एवायम् ॥ २१ ॥

इति वेदान्तसारे अन्तर्याम्यधिकरणम् ॥ ४ ॥

---

( वेदान्तदीपे अन्तर्याम्यधिकरणम् ॥ ४ ॥ )

---

## अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात्।१।२।१९॥

बृहदारण्यके १"यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः" इत्यादिषु सर्वेषु पर्यायेषु श्रूयमाणोऽन्तर्यामी किं प्रत्यगात्मा? उत परमात्मेति संशयः। प्रत्यागात्मेति पूर्वः पक्षः, वाक्यशेषे ४"द्रष्टा...श्रोता...मन्ता" इति द्रष्टृत्वादिश्रुतेः, ४"नान्योऽतोऽस्ति द्रष्टा" इति द्रष्ट्रन्तरनिषेधाच्च। राद्धान्तस्तु— पृथिव्याद्यात्मपर्यन्तसर्वतत्त्वानां सर्वैः तैरदृष्टेनैकेन नियमनं निरुपाधिकामृतत्वादिकश्च परमात्मन एव धर्म इत्यन्तर्यामी परमात्मा। द्रष्टृत्वादिश्च रूपादिसा-

---

१. बृ. ५-७-३॥ २. बृ. ५-७-२२॥ ३. बृ. ५-७-२२. माध्यन्दिनपाठः॥ ४. बृ ५-७-२३॥

क्षात्कारः। स च[1]"पश्यत्यचक्षुः" इत्यादिना परमात्मनोऽप्यस्ति।[2]"नान्योऽतोऽस्ति द्रष्टा" इति च जीवेनादृष्टान्तर्यामिद्रष्टृवत्, अन्तर्यामिणाऽप्यदृष्टद्रष्ट्रन्तरनिषेधपरः। सूत्रार्थः—अधिदैवाधिलोकादिपदचिह्नितेषु वाक्येषु श्रूयमाणोऽन्तर्यामी परमात्मा, सर्वान्तरत्वसर्वाविदितत्वसर्वशरीरकत्वसर्वनियमनसर्वात्मकत्वामृतत्वादिपरमात्मधर्माणां व्यपदेशात्॥ १९॥

## न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च।१।२।२०॥

स्मार्तं प्रधानम्, शारीरः प्रत्यगात्मा। स्मार्तं च शारीरश्च नान्तर्यामी, तयोरसम्भावितोक्तधर्माभिलापात्। यथा स्मार्तस्याचेतनस्यासंभावनया नान्तर्यामित्वप्रसक्तिः, तथा प्रत्यगात्मनोऽपीत्यर्थः॥ २०॥

## उभयेऽपि हि भेदेनैनमधीयते।१।२।२१॥

उभये काण्वा माध्यन्दिना अपि,[3]"यो विज्ञाने तिष्ठन्"[3]"य आत्मनि तिष्ठन्" इति यतः प्रत्यगात्मनो भेदेन—एनम् अन्तर्यामिणम् अधीयते; अतोऽयं तदतिरिक्तः परमात्मा॥ २१॥

इति वेदान्तदीपे अन्तर्याम्यधिकरणम्॥ ४॥

---

(श्रीशारीरकमीमांसाभाष्ये अदृश्यत्वादिगुणकाधिकरणम्॥)

---

## अदृश्यत्वादिगुणको धर्मोक्तेः। १। २। २२॥

आथर्वणिका अधीयते–[4]"अथ परा यया तदक्षरमधिगम्यते। यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादम्। नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः"इति; तथोक्त-

---

१. श्वे. ३-१९॥
२. बृ. ५-७-२३॥
३. बृ.५-७-२२॥
४. मुण्ड. १-१-५,६॥

रत्र [१]"अक्षरात्परतः परः" इति। तत्र सन्दिह्यते—किमिहादृश्यत्वादिगुणकमक्षरमक्षरात्परतः परश्च प्रकृतिपुरुषौ; अथोभयत्र परमात्मैव—इति। किं प्राप्तम्? प्रकृतिपुरुषाविति। कुतः? अस्याक्षरस्य [२]"अदृष्टो द्रष्टा" इत्यादाविव न द्रष्टृत्वादिश्चेतनधर्मविशेष इह श्रूयते, [१]"अक्षरात्परतः परः" इति च सर्वस्माद्विकारात्परभूतादक्षरादस्मात्परः क्षेत्रज्ञ समष्टिपुरुषः प्रतिपाद्यते। एतदुक्तं भवति—रूपादिमत्स्थूलरूपाचेतनपृथिव्यादिंभूताश्रयं दृश्यत्वादिकं प्रतिषिध्यमानं पृथिव्यादिसजातीयसूक्ष्मरूपाचेतनमेवोपस्थापयति, तच्च प्रधानमेव। तस्मात्परत्वं च समष्टिपुरुषस्यैव प्रसिद्धम्। तदधिष्ठितं च प्रधानं महदादिविशेषपर्यन्तं विकारजातं प्रसूत इति तत्र दृष्टान्ता उपन्यस्यन्ते [३]"यथोर्णनाभिस्सृजते गृह्णते च यथा पृथिव्यामोषधयस्सम्भवन्ति। यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम्" इति। अतोऽस्मिन् प्रकरणे प्रधानपुरुषावेव प्रतिपाद्येते—इति॥

एवं प्राप्ते ब्रूमः—अदृश्यत्वादिगुणको धर्मोक्तेः—अदृश्यत्वादिगुणकोऽक्षरात्परतः परश्च परमपुरुष एव; कुतः? तद्धर्मोक्तेः [४]"यस्सर्वज्ञस्सर्ववित्"इत्यादिना सर्वज्ञत्वादिकास्तस्यैव धर्मा उच्यन्ते; तथा हि [५]"यया तदक्षरमधिगम्यते" इत्यादिना अदृश्यत्वादिगुणकमक्षरमभिधाय [३]"अक्षरात्सम्भवतीह विश्वम्"इति तस्माद्विश्वसम्भवं चाभिधाय[४]"यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते"

१. मुण्ड. २-१-२॥
२. बृ. ५-७-२३॥
३. मुण्ड. १-१-७॥
४. मुण्ड. १-१-९॥
५. मुण्ड. १-१-५॥

इति भूतयोनेरक्षरस्य सर्वज्ञत्वादिः प्रतिपाद्यते। पश्चात् [१]"अक्षरात्परतः परः" इति च प्रकृतमदृश्यत्वादिगुणकं भूतयोन्यक्षरं सर्वज्ञमेव परत्वेन व्यपदिश्यते। अतः [१]"अक्षरात्परतः परः" इत्यक्षरशब्दः पञ्चम्यन्तः प्रकृतमदृश्यत्वादिगुणकमक्षरं नाभिधत्ते, तस्य सर्वज्ञस्य विश्वयोनेस्सर्वस्मात्परत्वेन तस्मादन्यस्य परत्वासम्भवात् । अतोऽत्राक्षरशब्दो भूतसूक्ष्ममचेतनं ब्रूते ॥ २२ ॥

इतश्च न प्रधानपुरुषौ—

## विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ। १। २। २३॥

विशिनष्टि हि प्रकरणं—प्रधानाच्च पुरुषाच्च भूतयोन्यक्षरं व्यावर्तयतीत्यर्थः; एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनादिभिः।तथा ताभ्यामक्षरस्य भेदश्च व्यपदिश्यते[१]"अक्षरात्परतः परः" इत्यादिना। तथाहि—[२]"स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह" इति सर्वविद्याप्रतिष्ठाभूता ब्रह्मविद्या प्रक्रान्ता; परविद्यैव च सर्वविद्याप्रतिष्ठा; तामिमां सर्वविद्याप्रतिष्ठां विद्यां चतुर्मुखाथर्वादिगुरुपरम्परयाऽङ्गिरसा प्राप्तां जिज्ञासुः [३]"शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति। ब्रह्मविद्यायास्सर्वविद्याश्रयत्वाद्ब्रह्मविज्ञानेन सर्वं विज्ञातं भवतीति कृत्वा ब्रह्मस्वरूपमनेन पृष्टम्; [४]"तस्मै स होवाच द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च" इति । ब्रह्मप्रेप्सुना द्वे विद्ये वेदितव्ये—ब्रह्मविषये परोक्षापरोक्षरूपे द्वे विज्ञाने उपादेये इत्यर्थः । तत्र परोक्षं शास्त्रजन्यं ज्ञानम्, अपरोक्षं योगजन्यम्; तयोर्ब्रह्मप्राप्त्युपाय-

---

१. मुण्ड. २-१-२॥
२. मुण्ड. १-१-१॥
३. मुण्ड. १-१-३॥
४. मुण्ड. १-१-४॥

भूतमपरोक्षं ज्ञानम्; तच्च भक्तिरूपापन्नम् , [१]"यमेवैष वृणुते तेन लभ्यः" इत्यत्रैव विशेष्यमाणत्वात् ; तदुपायश्चागमजन्यं विवेकादिसाधनसप्तकानुगृहीतं ज्ञानम् , [२]"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतेः। आह च भगवान्पराशरः [३]"तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने । आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते " इति । [४]" तत्रापरा ऋग्वेदो यजुर्वेदः" इत्यादिना [४]" धर्मशास्त्राणि " इत्यन्तेन आगमोत्थं ब्रह्मसाक्षात्कारहेतुभूतं परोक्षज्ञानमुक्तम् । साङ्गस्य सेतिहासपुराणस्य सधर्मशास्त्रस्य समीमांसस्य वेदस्य ब्रह्मज्ञानोत्पत्तिहेतुत्वात् [५]"अथ परा यया तदक्षरमधिगम्यते" इत्युपासनाख्यं ब्रह्मसाक्षात्कारलक्षणं भक्तिरूपापन्नं ज्ञानम् " यत्तदद्रेश्यमग्राह्यम्" इत्यादिना परोक्षापरोक्षरूपज्ञानद्वयविषयस्य परस्य ब्रह्मणस्स्वरूपमुच्यते [६]"यथोर्णनाभिस्सृजते गृह्णते च" इत्यादिना। यथोक्तस्वरूपात्परस्माद्ब्रह्मणोऽक्षरात्कृत्स्नस्य चेतनाचेतनात्मकप्रपञ्चस्योत्पत्तिरुक्ता; विश्वमिति वचनान्नाचेतनमात्रस्य; [७]"तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। अन्नात्प्राणो मनस्सत्यं लोकाः कर्मसु चामृतम्"इति ब्रह्मणो विश्वोत्पत्तिप्रकार उच्यते;तपसा—ज्ञानेन,[८]"यस्य ज्ञानमयं तपः"इति वक्ष्यमाणत्वात्; चीयते—उपचीयते; [९]"बहु स्याम्" इति सङ्कल्परूपेण ज्ञानेन ब्रह्म सृष्ट्युन्मुखं भवतीत्यर्थः।ततोऽन्नमभिजायते—अद्यत इत्यन्नम्, विश्वस्य भोक्तृवर्गस्य भोग्यभूतं भूतसूक्ष्ममव्याकृतं परस्माद्ब्रह्मणो जायत इत्यर्थः; प्राणमनःप्रभृति च स्वर्गापवर्गरूपफलसाधनभूतकर्मपर्यन्तं सर्वं विकारजातं तस्मादेव जायते । [८]" यस्सर्वज्ञस्सर्ववित् " इत्यादिना सृष्ट्युपकरणभूतं

---

१. मुण्ड. ३-२-३ ॥
२. बृ. ६-४-२२॥
३. वि. पु. ६-५-६० ॥
४, ५. मुण्ड. १-१-५ ॥
६. मुण्ड. १-१-७ ॥
७. मुण्ड. १-१-८ ॥
८. मुण्ड. १-१-९ ॥
९. छा. ६-२-३, तै. आन. ६॥

सार्वज्ञ्यसत्यसङ्कल्पत्वादिकमुक्तम्। सर्वज्ञात्सत्यसङ्कल्पात्परस्माद्ब्रह्मणोऽक्षरादेतत् कार्याकारं ब्रह्म नामरूपविभक्तं भोक्तृभोग्यरूपं च जायते। [१]"तदेतत्सत्यम्" इति परस्य ब्रह्मणो निरुपाधिकसत्यत्वमुच्यते । [१]"मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि। तान्याचरत नियतं सत्यकामाः" इति सार्वज्ञ्यसत्यसङ्कल्पत्वादिकल्याणगुणाकरमक्षरं पुरुषं स्वतस्सत्यं कामयमानास्तत्प्राप्तये फलान्तरेभ्यो विरक्ता ऋग्यजुस्सामाथर्वसु कविभिर्दृष्टानि वर्णाश्रमोचितानि त्रेताग्निषु बहुधा सन्ततानि कर्माण्याचरतेति [१]"एष वः पन्थाः" इत्यारभ्य [२]"एष वः पुण्यस्सुकृतो ब्रह्मलोकः" इत्यन्तेन कर्मानुष्ठानप्रकारं, श्रुतिस्मृतिचोदितेषु कर्मस्वेकतरकर्मवैधुर्येऽपीतरेषामनुष्ठितानामपि निष्फलत्वम्, अयथानुष्ठितस्य चाननुष्ठितसमत्वम् अभिधाय [३]"प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म। एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापि यन्ति"इत्यादिना फलाभिसन्धिपूर्वकत्वेन ज्ञानविधुरतया चावरं कर्माचरतां पुनरावृत्तिमुक्त्वा [४]"तपश्श्रद्धे ये ह्युपवसन्ति" इत्यादिना पुनरपि फलाभिसन्धिरहितं ज्ञानिनानुष्ठितं कर्म ब्रह्मप्राप्तये भवतीति प्रशस्य [५]"परीक्ष्य लोकान्" इत्यादिना केवलकर्मफलेषु विरक्तस्य यथोदितकर्मानुगृहीतं ब्रह्मप्राप्त्युपायभूतं ज्ञानं जिज्ञासमानस्य च आचार्योपसदनं विधाय[६]"तदेतत्सत्यं यथा सुदीप्तात्"इत्यादिना [७]"सोऽविद्याग्रन्थिं विकिरतीह सोम्य" इत्यन्तेन पूर्वोक्तस्याक्षरस्य भूतयोनेः परस्य ब्रह्मणः परमपुरुषस्यानुक्तैस्स्वरूपगुणैस्सह सर्वभूतान्तरात्मतया विश्वशरीरत्वेन विश्वरूपत्वम्, तस्माद्विश्वसृष्टिं च विस्पष्टमभिधाय [८]"आविस्सन्नि-

१. मुण्ड. १-२-१.
२. मुण्ड. १-२-६ ॥
३. मुण्ड. १-२-७ ॥
४. मुण्ड. १-२-११ ॥
५. मुण्ड. १-२-१२॥ ६.मुण्ड. २-१-१॥
७. मुण्ड. २-१-१०॥ ८. मुण्ड.२-२-१॥

हितम्" इत्यादिना तस्यैवाक्षरस्याव्याकृतात्परतोऽपि पुरुषात्परभूतस्य परस्य ब्रह्मणः परमव्योम्नि प्रतिष्ठितस्यानवधिकातिशयानन्दस्वरूपस्य हृदयगुहायामुपासनप्रकारम् उपासनस्य च परभक्तिरूपत्वमुपासीनस्याविद्याविमोकपूर्वकं ब्रह्मसमं ब्रह्मानुभवफलं चोपदिश्योपसंहृतम् । अत एवं विशेषणाद्भेदव्यपदेशाच्च नास्मिन्प्रकरणे प्रधानपुरुषौ प्रतिपाद्येते ॥

भेदव्यपदेशोऽपि हि ताभ्यां परस्य ब्रह्मणोऽत्र विद्यते । [१]"दिव्यो ह्यमूर्तः पुरुषस्सबाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात्परतः परः" इत्यादिभिः अक्षरादव्याकृतात्परो यस्समष्टिपुरुषः तस्मादपि परभूतोऽदृश्यत्वादिगुणकोऽक्षरशब्दाभिहितः परमात्मेत्यर्थः । अश्नुत इति वा, न क्षरतीति वाऽक्षरम् । तदव्याकृतेऽपि स्वविकारव्याप्त्या वा महदादिवन्नामान्तराभिलापयोग्यक्षरणाभावाद्वाऽक्षरत्वं कथञ्चिदुपपद्यते ॥ २३ ॥

## रूपोपन्यासाच्च । १ । २ । २४ ॥

[२]"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" इतीदृशं रूपं सर्वभूतान्तरात्मनः परमात्मन एव सम्भवति; अतश्च परमात्मा ॥ २४ ॥

इति श्रीशारीरकमीमांसाभाष्ये अदृश्यत्वादिगुणकाधिकरणम् ॥ ५ ॥

---

(वेदान्तसारे अदृश्यत्वादिगुणकाधिकरणम् ॥ ५ ॥)

---

## अदृश्यत्वादिगुणको धर्मोक्तेः । १ । २ । २२ ॥

[३]"अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यम्" इत्यारभ्य [४]"यद्भूत-

---

१. मु. २-१-२. २. मु. २-१-४ ॥ ३. ४. मु. १-१-५-६ ॥

योनिं परिपश्यन्ति धीराः" १"अक्षरात् परतः परः" इत्यादौ प्रधानात्प्रत्यगात्मनश्च अर्थान्तरभूतः परमात्मा प्रतिपाद्यते, २"यस्सर्वज्ञस्सर्ववित्" इत्यादिधर्मोक्तेः ॥ २२ ॥

## विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ । १ । २ । २३ ॥

एकविज्ञानेन सर्वविज्ञानरूपविशेषणव्यपदेशान्न प्रधानम्, १"अक्षरात् परतः परः" इति प्रधानात्परतः प्रत्यगात्मनोऽपि पर इति भेदव्यपदेशात्, न प्रत्यगात्मा च । अथवा सामानाधिकरण्येन परतोऽक्षरात् पञ्चविंशकात् पर इति भेदव्यपदेशः ॥ २३ ॥

## रूपोपन्यासाच्च । १ । २ । २४ ॥

३"अग्निर्मूर्धा" इत्यादिना त्रैलोक्यशरीरोपन्यासाच्च परमात्मा ॥ २४ ॥

इति श्रीवेदान्तसारे अदृश्यत्वादिगुणकाधिकरणम् ॥ ५ ॥

---

(वेदान्तदीपे अदृश्यत्वादिगुणकाधिकरणम् ॥ ५ ॥)

---

## अदृश्यत्वादिगुणको धर्मोक्तेः । १ । २ । २२ ॥

आथर्वणे—४"अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यम्"इत्यारभ्य, ५"यद्भूतयोनिं परिपश्यन्ति धीराः"१"अक्षरात्परतः परः"इत्यादौ किं प्रधानपुरुषौ प्रतिपाद्येते ? उत परमात्मैवेति संशयः । प्रधानपुरुषाविति पूर्वः पक्षः । पृथिव्याद्यचेतनगतदृश्यत्वादीनां प्रतिषेधात्तज्जातीयाचेतनं प्रधानमेव भूतयोन्यक्षरमिति प्रतीयते। तथा१"अक्षरात्परतः परः" इति च तस्याधिष्ठाता पुरुष एवेति । राद्धान्तस्तु—उत्तरत्र २"यस्सर्वज्ञस्सर्ववित्" इति प्रधानपुषयोरसम्भावितं सार्वज्ञ्यमभिधाय २"तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते" इति सर्वज्ञात्सत्यसङ्कल्पाज्जगदुत्पत्तिश्रवणात्पूर्वोक्तमदृश्यत्वादिगुणकं भूतयोन्यक्षरम् १"अक्षरात्परतः परः" इति च निर्दिष्टं तदक्षरं परं ब्रह्मैवेति विज्ञायते ।

---

१. मु. २-१-२ ॥
२. मु. १-१-९ ॥
३. मु. २-१-४ ॥
४. ५. मु. १-१-५, ६ ॥

सूत्रार्थस्तु—अदृश्यत्वादिगुणकः परमात्मा, सर्वज्ञत्वादितद्धर्मोक्तेः ॥ २२ ॥

## विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ । १ । २ । २३ ॥

विशिनष्टि हि प्रकरणं प्रधानाद्भूतयोन्यक्षरम् एकविज्ञानेन सर्वविज्ञानादिना? तथा १"अक्षरात्परतः परः" इति ; अक्षरात् अव्याकृतात् परतोऽवस्थितात्पुरुषात् पर इति पुरुषाच्चास्य भूतयोन्यक्षरस्य भेदो व्यपदिश्यते। अतश्च न प्रधानपुरुषौ ; अपितु परमात्मैवात्र निर्दिष्टः ॥ २३ ॥

## रूपोपन्यासाच्च । १ । १ । २४ ॥

२"अग्निर्मूर्धा" इत्यादिना समस्तस्य चिदचिदात्मकस्य प्रपञ्चस्य भूतयोन्यक्षररूपत्वेनोपन्यासाच्चायमदृश्यत्वादिगुणकः परमात्मा ॥ २४ ॥

इति वेदान्तदीपे अदृश्यत्वादिगुणकाधिकरणम् ॥ ५ ॥

( श्रीशारीरकमीमांसाभाष्ये वैश्वानराधिकरणम् ॥ ६ ॥ )

## वैश्वानरस्साधारणशब्दविशेषात् । १ । २ । २५ ॥

इदमामनन्ति च्छन्दोगाः ३"आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" इति प्रक्रम्य ४"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति। तत्र सन्देहः—किमयं वैश्वानर आत्मा, परमात्मेति शक्यनिर्णयः, उत न—इति। किं प्राप्तम्? अशक्यनिर्णय इति। कुतः? वैश्वानरशब्दस्य चतुर्ष्वर्थेषु प्रयोगदर्शनात्—जाठराग्नौ तावत् ५"अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यावदेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैनं घोषं शृणोति" इति ; महाभूततृतीये च ६"विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्" इति ; देवतायां च ७"वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः" इति; परमात्मनि च ८"तदात्मन्येव हृदयेऽग्नौ

१. मु. २-१-२ ॥ २. मु. २-१-४ ॥
३. छा. ५-११-६॥ ४. छा. ५-१८-१ ॥
५. बृ. ७-९-१ ॥
६.
७. यजु. का. १-५-११ ॥
८. अष्टक ३. प्रश्न-११-अनु-८ ॥

वैश्वानरे प्रास्यत्" इति, [1]"स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते" इति च। वाक्योपक्रमादिषूपलभ्यमानान्यपि लिङ्गानि सर्वानुगुणतया नेतुं शक्यानीति ॥

एवं प्राप्तेऽभिधीयते—वैश्वानरस्साधारणशब्दविशेषात्—वैश्वानरः पर एवात्मा, कुतः? साधारणशब्दविशेषात्-विशेष्यत इति विशेषः-साधारणस्य वैश्वानरशब्दस्य परमात्मासाधारणैर्धर्मैर्विशेष्यमाणत्वादित्यर्थः। तथाहि—औपमन्यवादयः पञ्चेमे महर्षयस्समेत्य [2]"को न आत्मा किं ब्रह्म" इति विचार्य [3]"उद्दालको ह वै भगवन्तोऽयमारुणिस्सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम" इत्युद्दालकस्य वैश्वानरात्मविज्ञानमवगम्य तमभ्याजग्मुः। स चोद्दालक एतान्वैश्वानरात्मजिज्ञासूनभिलक्ष्यात्मनश्च तत्राकृत्स्नवेदित्वं मत्वा [4]"तान् होवाच अश्वपतिर्वै भगवन्तोऽयं कैकयस्सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम" इति। ते चोद्दालकषष्ठास्तमश्वपतिमभ्याजग्मुः। स च तान्महर्षीन्यथार्हं पृथगभ्यर्च्य [5]"न मे स्तेनः" इत्यादिना [5]"यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि" इत्यन्तेनाऽऽत्मनो व्रतस्थतया प्रतिग्रहयोग्यतां ज्ञापयन्नेव ब्रह्मविद्भिरपि प्रतिषिद्धपरिहरणीयतां विहितकर्मकर्तव्यतां च प्रज्ञाप्य [5]"यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भवन्तः" इत्यवोचत्। ते च मुमुक्षवो वैश्वानरमात्मानं जिज्ञासमानास्तमेवात्मानमस्माकं ब्रूहीत्यवोचन्। तदेवं [2]"को न आत्मा किं ब्रह्म" इति जीवात्मनामात्मभूतं ब्रह्म जिज्ञासमानैस्तज्ज्ञमन्विच्छद्भिर्वैश्वानरात्मज्ञसकाशमागम्य पृच्छ्यमानो वैश्वानरात्मा परमात्मेति विज्ञायते, आत्मब्रह्मशब्दाभ्यामुपक्रम्य पश्चात्सर्वत्रात्मवैश्वानरशब्दाभ्यां व्यवहाराच्च ब्रह्मशब्दस्थाने निर्दिश्यमानो वैश्वानरशब्दो ब्रह्मैवा-

१. प्रश्नो. १-७ ॥ २. छा. ५-११-१ ॥ ३. छा. ५-११-२ ॥ ४. छा. ५-११-४ ॥ ५. छा. ५-११-५ ॥

भिधत्त इति विज्ञायते ; किञ्च [१]"स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" [२]"तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति च वक्ष्यमाणं वैश्वानरात्मविज्ञानफलं वैश्वानरात्मानं परं ब्रह्मेति ज्ञापयति ॥ २५ ॥

इतश्च वैश्वानरः परमात्मा—

## स्मर्यमाणमनुमानं स्यादिति। १। २। २६॥

द्युप्रभृति पृथिव्यन्तमवयवविभागेन वैश्वानरस्य रूपमिहोपदिश्यते । तच्च श्रुतिस्मृतिषु परमपुरुषरूपतया प्रसिद्धम् । तदिह तदेवेदमिति स्मर्यमाणं—प्रत्यभिज्ञायमानं वैश्वानरस्य परमपुरुषत्वे अनुमानं—लिङ्गमित्यर्थः ; इतिशब्दः प्रकारवचनः ; इत्थंभूतं रूपं प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वेऽनुमानं स्यात् । श्रुतिस्मृतिषु हि परमपुरुषस्येत्थं रूपं प्रसिद्धम् । यथा आथर्वणे [३]"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" इति । अग्निरिह द्युलोकः, [४]"असौ वै लोकोऽग्निः"इति श्रुतेः । स्मरन्ति च मुनयः [५]"द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे । दिशश्श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता" इति, [६]"यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशश्श्रोत्रं तस्मै लोकात्मने नमः" इति च । इह च द्युप्रभृतयो वैश्वानरस्य मूर्धाद्यवयवत्वेनोच्यन्ते । तथा हि—तैरौपमन्यवप्रभृतिभिर्महर्षिभिः [७]"आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" इति पृष्टः केकयस्तेभ्यो वैश्वानरात्मानमुपदिदिक्षुर्विशेषप्रश्नान्यथानुपपत्त्या वैश्वानरात्मन्येतैः किञ्चित् ज्ञातं किञ्चिदज्ञातमिति विज्ञाय ज्ञाताज्ञातांशबुभुत्सया तानेकैकं पप्रच्छ । तत्र [१]"औप-

१. छा. ५-१८-१॥ २. छा. ५-२४-३ ॥ ३. मु. २-१-४ ॥ ४. बृ. ८-२-९ ॥ ५. ६. भारते-शान्तिपर्व-राजधर्म. ४७-७० ॥ ७. छा. ५-११-६ ॥

मन्यव कं त्वमात्मानमुपास्से" इति पृष्टे [१]"दिवमेव भगवो राजन्" इति तेन चोक्ते दिवि तस्य पूर्णवैश्वानरात्मबुद्धिं निवर्तयन्वैश्वानरस्य द्यौर्मूर्धेति चोपदिशंस्तस्या वैश्वानरांशभूताया दिवः सुतेजा इति गुणनामधेयं प्राचिख्यपत्। एवं सत्ययज्ञादिभिरादित्यवाय्वाकाशाप्पृथिवीनामेकैकेनैकैकमुपास्यमानतया कथितानां 'विश्वरूपः, पृथग्वर्त्मा, बहुलो, रयिः, प्रतिष्ठा' इत्येकैकगुणनामधेयानि वैश्वानरात्मनश्चक्षुःप्राणसन्देहवस्तिपादावयवत्वं चोपदिष्टम्। सन्देहो मध्यकाय उच्यते। अत एवम्भूतद्युमूर्धत्वादिविशिष्टं परमपुरुषस्यैव रूपमिति वैश्वानरः परमपुरुष एव॥ २६॥

पुनरप्यनिर्णयमेवाशङ्क्य परिहरति—

## शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेतिचेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते।१।२।२७॥

यदुक्तं वैश्वानरः परमात्मेति निश्चीयत इति, तन्न, शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च जाठरस्याप्यग्नेरिह प्रतीयमानत्वात्। शब्दस्तावद्वाजिनां वैश्वानरविद्याप्रकरणे [२]"स एषोऽग्निर्वैश्वानरः" इति वैश्वानरसमानाधिकरणतयाऽग्निरिति श्रूयते; अस्मिन्प्रकरणे च [३]"हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः" इति वैश्वानरस्य हृदयादिस्थस्याग्नित्रयकल्पनं क्रियते। [४]"तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहा" इत्यादिना प्राणाहुत्याधारत्वं च वैश्वानरस्यावगम्यते। तथा वैश्वानरस्यास्मिन्पुरुषेऽन्तःप्रतिष्ठानं वाजसनेयिनस्समामनन्ति [५]"स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" इति। अतोऽग्निशब्दसामानाधिकरण्याद-

---

१. छा. ५-१२-१॥
२. प्रश्न. १-७, अर्थनिर्देशोऽयम्॥
३. छा. ५-१८-२॥
४. छा. ५-१९-१॥ ५.

ग्नित्रेतापरिकल्पनात्प्राणाहुत्याधारभावादन्तःप्रतिष्ठानाच्च वैश्वानरस्य जाठरत्वमपि प्रतीयत इति नैकान्ततः परमात्मत्वमिति चेत्—

तन्न, तथा दृष्ट्युपदेशात्—पूर्वोक्तस्य त्रैलोक्यशरीरस्य परस्य ब्रह्मणो वैश्वानरस्य जाठराग्निशरीरतया तद्विशिष्टस्योपासनोपदेशात् । अग्निशब्दादिभिर्हि न केवलो जाठरः प्रतिपाद्यते ; अपितु जाठराग्निविशिष्टः परमात्मा । कथमिदमवगम्यत इति चेत्—असम्भवात्—जाठरस्य केवलस्य त्रैलोक्यशरीरत्वासम्भवात् । त्रैलोक्यशरीरतया प्रतिपन्नवैश्वानरसमानाधिकरणो जाठरविषयतया प्रतीयमानोऽग्निशब्दो जाठरशरीरतया तद्विशिष्टं परमात्मानमेवाभिदधातीत्यर्थः । यथोक्तं भगवता [1]"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" इति जाठरानलशरीरो भूत्वेत्यर्थः । अतस्तद्विशिष्टस्योपासनमत्रोपदिश्यते । किंच पुरुषमपिचैनमधीयते वाजसनेयिनः [2]"स एषोऽग्निर्वैश्वानरो यत्पुरुषः" इति ; नहि जाठरस्य केवलस्य पुरुषत्वम् , परमात्मन एव हि निरुपाधिकं पुरुषत्वम्, यथा [3]"सहस्रशीर्षा पुरुषः" [3]"पुरुष एवेदं सर्वम्" इत्यादौ ॥ २७ ॥

## अत एव न देवता भूतश्च । १ । २ । २८ ॥

उक्तेभ्य एव हेतुभ्यो देवतायाश्च तृतीयस्य महाभूतस्यापि न वैश्वानरत्वप्रसङ्गः ॥ २८ ॥

## साक्षादप्यविरोधं जैमिनिः । १ । २ । २९ ॥

वैश्वानरसमानाधिकरणस्याग्निशब्दस्य जाठराग्निशरीरतया तद्विशिष्टस्य परमात्मनो वाचकत्वम् , तथैव परमात्मन उपास्यत्वं चोक्तम् ! जैमिनिस्त्वाचार्यो वैश्वानरशब्दवदग्निशब्दस्यापि परमात्मन एव साक्षात् अव्यवधानेन वाचकत्वे न कश्चिद्विरोध इति मन्यते ॥

१. गी. १५-१४ ॥ २. | ३. पुरुषसू. ॥

एतदुक्तं भवति—यथा वैश्वानरशब्दस्साधारणोऽपि परमात्मासाधारणधर्मविशेषितो विश्वेषां नराणां नेतृत्वादिना गुणेन परमात्मानमेवाभिदधातीति निश्चीयते ; एवमग्निशब्दोऽप्यग्रनयनादिना येनैव गुणेन योगाज्ज्वलने वर्तते, तस्यैव गुणस्य निरुपाधिकस्य काष्ठागतस्य परमात्मनि सम्भवादस्मिन्प्रकरणे परमात्मासाधारणधर्मविशेषितः परमात्मानमेवाभिधत्त इति ॥ २९ ॥

[१]"यस्त्वेतमेवं प्रादेशमात्रमभिविमानम्" इत्यपरिच्छिन्नस्य परस्य ब्रह्मणो द्युप्रभृतिपृथिव्यन्तप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कथमुपपद्यते—तत्राह—

## अभिव्यक्तेरित्याश्मरथ्यः । १ । २ । ३० ॥

उपासकाभिव्यक्त्यर्थं प्रादेशमात्रत्वं परमात्मन इत्याश्मरथ्य आचार्यो मन्यते । 'द्यौर्मूर्धा आदित्यश्चक्षुः, वायुः प्राणः, आकाशो मध्यकायः, आपो वस्तिः, पृथिवी पादौ' इति द्युप्रभृतिप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वम् कृत्स्नमभिव्याप्तवता विगतमानस्य ह्यभिव्यक्तेरेव हेतोर्भवति ॥ ३० ॥

मूर्धप्रभृत्यवयवविशेषैः पुरुषविधत्वं परस्य ब्रह्मणः किमर्थमिति चेत्—तत्राह—

## अनुस्मृतेर्बादरिः । १ । २ । ३१ ॥

तथोपासनार्थमिति बादरिराचार्यो मन्यते । [१]" यस्त्वेतमेवमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति " इति ब्रह्मप्राप्तये ह्युपासनमुपदिश्यते । एतमेवमिति—उक्तप्रकारेण पुरुषाकारमित्यर्थः । सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु वर्तमानं यदन्नं भोग्यं तदत्ति—सर्वत्र वर्तमानं स्वत एवानवधि-

१. छा. ५-१८-१ ॥

कातिशयानन्दं ब्रह्मानुभवति । यत्तु सर्वैः कर्मवश्यैरात्मभिः प्रत्येकमनन्यसाधारणमन्नं भुज्यते, तन्मुमुक्षुभिस्त्याज्यत्वादिह न गृह्यते ॥ ३१ ॥

यदि परमात्मा वैश्वानरः, कथं तर्ह्युरःप्रभृतीनां वेद्यादित्वोपदेशः, यावता जाठराग्निपरिग्रह एवैतदुपपद्यत इत्यत्राह—

## सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति।१।२।३२॥

अस्य परमात्मन एव वैश्वानरस्य द्युप्रभृतिपृथिव्यन्तशरीरस्य समाराधनभूतायाः उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसम्पादनायायमुरःप्रभृतीनां वेदित्वाद्युपदेश इति जैमिनिराचार्यो मन्यते। तथाहि—परमात्मोपासनोचितमेव फलं प्राणाहुत्या अग्निहोत्रसम्पत्तिं च दर्शयतीयं श्रुतिः । [१]"स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति ॥

## आमनन्ति चैनमस्मिन् । १ । २ । ३३ ॥

एनं परमपुरुषं द्युमूर्धत्वादिविशिष्टं वैश्वानरम् अस्मिन् उपासकशरीरे प्राणाहुत्याधारत्वाय आमनन्ति च [२]"तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः" इत्यादिना। अयमर्थः—[३]"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इति त्रैलोक्यशरीरस्य परमात्मनो वैश्वानरस्योपासनं विधाय[३]"सर्वेषु लोकेषु" इत्यादिना ब्रह्मप्राप्तिं च फलमुपदिश्य अस्यैवोपासनस्याङ्गभूतं प्राणाग्निहोत्रं [२]"तस्य ह वा एतस्य" इत्यादिनोपदिशति ; यः पूर्वमुपास्यतयोपदिष्टो वैश्वानरस्तस्यावयवभूतानग्न्यादित्यादीन् सुतेजोविश्वरूपादिनामधेयानुपास-

१. छा. ५-२४-१ ॥ २. छा. ५-१८-२ ॥ ३. छा. ५-१८-१॥

कशरीरे मूर्धादिपादान्तेषु सम्पादयति । मूर्धैव सुतेजाः—उपासकस्य मूर्धैव परमात्ममूर्धभूता द्यौरित्यर्थः। चक्षुर्विश्वरूपः—आदित्य इत्यर्थः । प्राणः पृथग्वर्त्मा—वायुरित्यर्थः। सन्देहो बहुलः—उपासकस्य मध्यकाय एव परमात्ममध्यकायभूत आकाश इत्यर्थः। पृथिव्येव पादौ—अस्य पादावेव तत्पादभूता पृथिवीत्यर्थः। एवमुपासकः स्वशरीरे परमात्मानं त्रैलोक्यशरीरं वैश्वानरं सन्निहितमनुसन्धाय स्वकीयान्युरोलोमहृदयमनआस्यानि प्राणाहुत्याधारस्य परमात्मनो वैश्वानरस्य वेदिबर्हिर्गार्हपत्यान्वाहार्यपचनाहवनीयानग्निहोत्रोपकरणभूतान्परिकल्प्य प्राणाहुतेश्चाग्निहोत्रत्वं परिकल्प्यैवंविधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरमाराधयेदिति [१]"उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः" इत्यादिनोपदिश्यते । अतः परमात्मा पुरुषोत्तम एव वैश्वानर इति सिद्धम् ॥ ३३ ॥

इति श्रीशारीरकमीमांसाभाष्ये वैश्वानराधिकरणम् ॥ ८ ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
प्रथमस्याध्यायस्य द्वितीयः पादः ॥

---

( वेदान्तसारे वैश्वानराधिकरणम् ॥ ६ ॥ )

---

## वैश्वानरस्साधारणशब्दविशेषात् । १ । २ । २५ ॥

[२]"आत्मानमेवेमं वैश्वानरम्" इत्यादौ वैश्वानरः परमात्मा, जाठराग्न्यादिषु साधारणस्यापि वैश्वानरशब्दस्य अस्मिन्प्रकरणे परमात्मासाधारणैः सर्वात्मकत्वब्रह्मशब्दादिभिर्विशेष्यमाणत्वात् ॥ २५ ॥

## स्मर्यमाणमनुमानं स्यादिति । १ । २ । २६ ॥

द्युलोकप्रभृति पृथिव्यन्तं रूपम् [३]"अग्निर्मूर्धा"इत्यादिषूक्तम्, अत्र प्रत्यभिज्ञायमानमस्य परमात्मत्वे अनुमानम्—लिङ्गमित्यर्थः ॥ २६ ॥

---

१. छा. ५-१८-२ ॥ २. छा. ५-११-६ ॥ ३. मुण्ड. २-१-४ ॥

## शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेतिचेन्न तथा दृष्टयुपदेशादसम्भवात्पुरुषमपि चैनमधीयते।१।२।२७॥

१"स एषोऽग्निर्वैश्वानरः" इति अग्निशब्दसामानाधिकरण्यात् प्राणाहुत्याधारत्वादिभिः २"पुरुषेऽन्तः प्रतिष्ठितम्" इत्यादेश्च नायं परमात्मेति चेत्—नैतत्, जाठराग्निशरीरकत्वेनोपास्यत्वोपदेशात् केवलजाठराग्नेः त्रैलोक्यशरीरकत्वाद्यसम्भवाच्च। १"स एषोऽग्निर्वैश्वानरो यत्पुरुषः" इत्येनं वैश्वानरं पुरुषमप्यधीयते वाजिनः।निरुपाधिकपुरुषशब्दश्च परमात्मनि नारायण एव, ३"सहस्रशीर्षम्" इत्यारभ्य,३"विश्वमेवेदं पुरुषः"इत्यादिषु प्रसिद्धः ॥ २७ ॥

## अत एव न देवता भूतञ्च ।१।२।२८॥

यतोऽयं वैश्वानरः त्रैलोक्यशरीरः, पुरुषशब्दनिर्दिष्टश्च, ततोऽयं नाग्न्याख्यदेवता, तृतीयमहाभूतञ्च ॥ २८ ॥

## साक्षादप्यविरोधं जैमिनिः ।१।२।२९॥

नावश्यमग्निशरीरकत्वेन उपास्यत्वायेदमग्निशब्दसामानाधिकरण्यम् , अग्रनयनादियोगेन परमात्मन्येवाग्निशब्दस्य साक्षाद्वृत्तेस्सामानाधिकरण्याविरोधं जैमिनिराचार्यो मन्यते ॥ २९ ॥

## अभिव्यक्तेरित्याश्मरथ्यः ।१।२।३०॥

४"यस्त्वेतमेवं प्रादेशमात्रम्" इत्यनवच्छिन्नस्य द्युप्रभृतिपरिच्छिन्नत्वम् उपासकाभिव्यक्त्यर्थमिति आश्मरथ्यः ॥ ३० ॥

## अनुस्मृतेर्बादरिः ।१।२।३१॥

द्युप्रभृतिपृथिव्यन्तानां मूर्धादिपादान्तावयवत्वकल्पनं तथाऽनुस्मृत्यर्थे—ब्रह्म प्रतिपत्तय इति बादरिः ॥ ३१ ॥

## सम्पत्तेरिति जैमिनि स्तथा हि दर्शयति।१।२।३२॥

५"उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः"इत्यादिना उपासकहृदयादीनां वेद्यादित्वकल्पनं विद्याङ्गभूतायाः प्राणाहुतेः अग्निहोत्रत्वसम्पादनार्थ-

---

१, २॥ ३. पुरुषसू ॥ ४. छा. ५-१८-१ ॥ ५. छा. ५-१८-२ ॥

मिति जैमिनिः। दर्शयति च श्रुतिः—१"य एतदेवं विद्वानग्निहोत्रं जुहोति" इति। एते पक्षास्स्वीकृताः। पूजार्थमाचार्यग्रहणम् ॥ ३२ ॥

## आमनन्ति चैनमस्मिन्। १। २। ३३ ॥

एनम्— परमात्मानम्, अस्मिन्—उपासितृशरीरे प्राणाहुतिवेलायाम् अनुसन्धानार्थं २"तस्य ह वा एतस्य...मूर्धैव सुतेजाः" इत्यादि आमनन्तिच; उपासकस्य मूर्धादिरेवास्य परमात्मनो मूर्धादिरित्यर्थः ॥ ३३ ॥

इति श्रीवेदान्तसारे वैश्वानराधिकरणम् ॥ ६ ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तसारे प्रथमस्याध्यायस्य द्वितीयः पादः ॥

( वेदान्तदीपे वैश्वानराधिकरणम् ॥ ६ ॥ )

## वैश्वानरस्साधारणशब्दविशेषात्। १। २। २५ ॥

छान्दोग्ये ३"आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि" इत्यारभ्य ४"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते" इत्यत्र किमयं वैश्वानरः परमात्मेति शक्यनिर्णयः? उत नेति संशयः। अशक्यनिर्णय इति पूर्वः पक्षः, वैश्वानरशब्दस्य जाठराग्नौ, भूततृतीये, देवताविशेषे परमात्मनि च वैदिकप्रयोगदर्शनात्; अस्मिन् प्रकरणे सर्वेषां लिङ्गोपलब्धेश्च। राद्धान्तस्तु—५"को न आत्मा किं ब्रह्म" इति सर्वेषां जीवानामात्मभूतं ब्रह्म किमिति प्रक्रमात्, उत्तरत्र च, ६"आत्मानं वैश्वानरम्" इति ब्रह्मशब्दस्थाने सर्वत्र वैश्वानरशब्दप्रयोगाच्च वैश्वानरात्मा सर्वेषां जीवानामात्मभूतं परं ब्रह्मेति विज्ञायते। सूत्रार्थः—वैश्वानरशब्दनिर्दिष्टः परमात्मा, वैश्वानरशब्दस्यानेकार्थसाधारणस्याप्यस्मिन्प्रकरणे परमात्मासाधारणविशेषणैस्सर्वात्मत्वादिभिः विशेष्यमाणत्वात्। विशेष्यतइति विशेषः ॥ २५ ॥

## स्मर्यमाणमनुमानं स्यादिति। १। २। २६ ॥

स्मर्यमाणं—प्रत्यभिज्ञायमानम्, अनुमीयतेऽनेनेति अनुमानम्, इतिशब्दः प्रकारवचनः, इत्थं रूपं स्मर्यमाणं वैश्वानरस्य परमात्मत्वेऽनुमानं स्यात्; द्युप्रभृतिपृथिव्यन्तमवयवविभागेन वैश्वानरस्य रूपमिहोपदिष्टम् ७"अग्निर्मूर्धा

---

१. छा. ५-२४-२ ॥ २. छा. ५-१८-२ ॥ ३. छा. ५-११-६ ॥ ४. छा. ५-१८-१ ॥ ५. छा. ५-११-१ ॥ ६. छा. ५-११-२ ॥ ७. मुण्ड. २-१-४ ॥



श्रीमते रामानुजाय नमः.

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

(प्रथमाध्याये-तृतीयपादे-द्युभ्वाद्यधिकरणम् ॥ १ ॥)

## द्युभ्वाद्यायतनं स्वशब्दात् ।१।३।१॥

आथर्वणिका अधीयते [१]"यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैः। तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः" इति। तत्र संशयः—किमयं द्युपृथिव्यादीनामायतनत्वेन श्रूयमाणो जीवः, उत परमात्मा—इति। किं युक्तम्? जीव इति। कुतः—[१]"अरा इव रथनाभौ संहता यत्र नाड्यस्स एषोऽन्तश्चरते बहुधा जायमानः" इति परस्मिन् श्लोके पूर्ववाक्यप्रस्तुतं द्युपृथिव्याद्यायतनं 'यत्र' इति पुनरपि सप्तम्यन्तेन परामृश्य तस्य नाड्याधारत्वमुक्त्वा, पुनरपि [१]"स एषोऽन्तश्चरते बहुधा जायमानः" इति तस्य बहुधा जायमानत्वं चोच्यते; नाडीसम्बन्धो देवादिरूपेण बहुधाजायमानत्वं च जीवस्यैव धर्मः। अस्मिन्नपि श्लोके [१]"ओतं मनस्सह प्राणैश्च सर्वैः" इति प्राणपञ्चकस्य मनसश्चाश्रयत्वमुच्य-

---

१. मु. २-२-५, ६. ॥

मानं जीवधर्म एव। एवं जीवत्वे निश्चिते सति द्युपृथिव्याद्यायतनत्वादिकं यथाकथञ्चित्सङ्गमयितव्यम्—इति ॥

(सिद्धान्तः)

एवं प्राप्ते प्रचक्ष्महे—द्युभ्वाद्यायतनं स्वशब्दात्—द्युपृथिव्यादीनामायतनं परं ब्रह्म; कुतः? स्वशब्दात्—परब्रह्मासाधारणशब्दात्। [1]"अमृतस्यैष सेतुः" इति परस्य ब्रह्मणोऽसाधारणश्शब्दः। [2]"तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते" इति सर्वत्रोपनिषत्सु स एवामृतत्वप्राप्तिहेतुश्श्रूयते। सिनोतेश्च बन्धनार्थत्वात् सेतुः—अमृतस्य प्रापक इत्यर्थः। सेतुरिव वा सेतुः—नद्यादिषु सेतुर्हि कूल स्य प्रतिलम्भकः—संसारार्णवपारभूतस्यामृतस्यैष प्रतिलम्भक इत्यर्थः। आत्मशब्दश्च निरुपाधिकः परस्मिन्ब्रह्मणि मुख्यवृत्तः, आप्नोतीति ह्यात्मा; स्वेतरसमस्तस्य नियन्तृत्वेन व्याप्तिस्तस्यैव सम्भवति। अतस्सोऽपि तस्यैव शब्दः। [3]"यस्सर्वज्ञस्सर्ववित्" इत्यादयश्चोपरितनाः परस्यैव ब्रह्मणश्शब्दाः। नाड्याधारत्वं तस्यापि सम्भवति [4]"सन्ततं सिराभिस्तु लम्बत्या कोशसन्निभम्" इत्यारभ्य [4]"तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः" इति श्रवणात्। [5]"बहुधा जायमानः" इत्यपि परस्मिन् ब्रह्मणि सङ्गच्छते—[2]"अजायमानो बहुधा विजायते।तस्य धीराः परिजानन्ति योनिम्" इति देवादीनां समाश्रयणीयत्वाय तत्तज्जातीयरूपसंस्थानगुणकर्मसमन्वितः स्वकीयं स्वभावमजहदेव स्वेच्छया बहुधा विजायते परः पुरुष इत्यभिधानात्। स्मृतिरपि [6]"अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया"

---

१. मु. २-२-५ ॥
२. पुरुषसू ॥
३. मु. २-२. ७॥
४. तै. नारायणे. १३. अनु ॥
५. मु. २-२-६ ॥
६. गी. ४-६ ॥

इति । मनःप्रभृतिजीवोपकरणाधारत्वं च सर्वाधारस्य परस्यैवोपपद्यते ॥

इतश्च परमपुरुषः—

# मुक्तोपसृप्यव्यपदेशाच्च ।१।३।२॥

अयं द्युपृथिव्याद्यायतनभूतः पुरुषः संसारबन्धान्मुक्तैरपि प्राप्यतया व्यपदिश्यते[1] "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" [2] "यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इति । संसारबन्धनाद्विमुक्ता एव हि विधूतपुण्यपापा निरञ्जना नामरूपाभ्यां विनिर्मुक्ताश्च । पुण्यपापनिबन्धनाचित्संसर्गप्रयुक्तनामरूपभाक्त्वमेव हि संसारः । अतो विधूतपुण्यपापैर्निरञ्जनैः प्रकृतिसंसर्गरहितैः परेण ब्रह्मणा परमं साम्यमापन्नैः प्राप्यतया निर्दिष्टो द्युपृथिव्याद्यायतनभूतः पुरुषः परं ब्रह्मैव ॥ २ ॥

परब्रह्मासाधारणशब्दादिभिः परमेव ब्रह्मेति प्रसाध्य, प्रत्यगात्मासाधारणशब्दाभावाच्चायं पर एवेत्याह—

# नानुमानमतच्छब्दात्प्राणभृच्च ।१।३।३॥

यथाऽस्मिन्प्रकरणे प्रतिपादकशब्दाभावात्प्रधानं न प्रतिपाद्यम्; एवं प्राणभृदपीत्यर्थः । अनुमीयत इत्यनुमानं परोक्तं प्रधानमुच्यते, अनुमानप्रमितत्वादानुमानमिति वा; अतच्छब्दात्—तद्वाचिशब्दाभावादित्यर्थः । 'अर्थाभावे यदव्ययम्' इत्यव्ययीभावः ॥ ३ ॥

इतश्चायं न प्रत्यगात्मा—

# भेदव्यपदेशात् ।१।३।४॥

---

१. मु. ३-१-३ ॥ | २. मु. ३-२-८ ॥

[1]"समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इत्यादिभिर्जीवाद्विलक्षणत्वेनायं व्यपदिश्यते। अनीशया भोग्यभूतया प्रकृत्या मुह्यमानश्शोचति जीवः; अयं यदा स्वस्मादन्यं सर्वस्येशं प्रीयमाणम्, अस्य ईश्वरस्य महिमानं च निखिलजगन्नियमनरूपं पश्यति; तदा वीतशोको भवति ॥ ४ ॥

## प्रकरणात् । १ । ३ । ५ ॥

प्रकरणं चेदं परस्य ब्रह्मण इति [2]"अदृश्यत्वादिगुणको धर्मोक्तेः" इत्यत्रैव प्रदर्शितम् । नाडीसम्बन्धबहुधाजायमानत्वमनःप्राणाधारत्वैश्च प्रकरणविच्छेदाशङ्कामात्रमत्र पर्यहार्ष्म ॥ ५ ॥

## स्थित्यदनाभ्याञ्च । १ । ३ । ६ ॥

[3]"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इत्येकस्य कर्मफलादनम्, अन्यस्य च कर्मफलमनश्नत एव दीप्यमानतया शरीरान्तस्स्थितिमात्रं प्रतिपाद्यते । तत्र कर्मफलमनश्नन्दीप्यमान एव सर्वज्ञोऽमृतसेतुस्सर्वात्मा द्युभ्वाद्यायतनं भवितुमर्हति, न पुनः कर्मफलमदन् शोचन्प्रत्यगात्मा । अतो द्युभ्वाद्यायतनं परमात्मेति सिद्धम् ॥

इति श्रीशारीरकमीमांसाभाष्ये द्युभ्वाद्यधिकरणम् ॥ १ ॥

---

वेदान्तसारे—द्युभ्वाद्यायतनं स्वशब्दात् ॥ [4]"यस्मिन्द्यौः पृथिवी चान्तरिक्षम्" इत्यादौ द्युपृथिव्यादीनामायतनम् आधारः परमपुरुषः; [1]"तमेवैकं जानथाऽत्मानम्" इत्यात्मशब्दात् । निरुपाधिकात्मत्वं हि परमपुरुषस्यैव।

---

१. श्वे.४-७,मु. ३-१-२ ॥ २. शारी.१-२-२२॥ | ३. श्वे. ४-६, मु.३-१-१॥ ४.मु.२-२-५॥

१ "अमृतस्यैष सेतुः" इति तदेव द्रढयति ; २"बहुधा जायमानः" इति परत्वं न निवारयति ; ३ "अजायमानो बहुधा विजायते" इति कर्मभिरजायमानस्यैव आश्रितवात्सल्यात् छन्दतो जननं तस्य हि श्रूयते ॥ १ ॥

**मुक्तोपसृप्यव्यपदेशाच्च ॥** ४"तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" ५"तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इति च पुण्यपापविनिर्मुक्तानां प्राप्यतया व्यपदेशाच्चायं परः ॥ २ ॥

**नानुमानमतच्छब्दात्प्राणभृच्च ॥** यथा न प्रधानमतच्छब्दात्, तथा न प्राणभृदपीत्यर्थः ॥ ३ ॥

**भेदव्यपदेशात् ॥** ६"अनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशम्" इत्यादिना प्रत्यगात्मनो भेदेन व्यपदेशाच्चायं परः ॥ ४ ॥

**प्रकरणात् ॥** ७"अथ परा यया तदक्षरमधिगम्यते" इत्यादि परस्य हीदं प्रकरणम् ॥ ५ ॥

**स्थित्यदनाभ्याञ्च ॥** ८"तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्न्यो अभिचाकशीति" इति जीवस्य कर्मफलादनमभिधाय, अनश्नतो दीप्यमानस्य स्थित्यभिधानाच्चायं परमात्मा ॥ ६ ॥

इति वेदान्तसारे द्युभ्वाद्यधिकरणम् ॥ २ ॥

---

**वेदान्तदीपे—द्युभ्वाद्यायतनं स्वशब्दात् ॥** आथर्वणे ९ "यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैस्तमेवैकं जानथाऽऽत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः" इत्यत्र द्युपृथिव्यादीनामायतनं किं जीवः! उत परमात्मेति संशयः । जीव इति पूर्वः पक्षः, मनःप्रभृतीन्द्रियाधारत्वश्रुतेः, उत्तरत्र नाडीसम्बन्धात् , जायमानत्वश्रुतेश्च । राद्धान्तस्तु—निरुपाधिकात्मत्वामृतसेतुत्वयोः परमात्मधर्मयोश्श्रवणात्परमात्मैवायम् । सर्वं नियन्तृतया

---

१. मु. २-२-५ ॥ २. मु. २-२-६ ॥
३. पुरुषसूक्ते. २१ ॥
४. मु. ३-१-३ ॥ ५. मु. ३-२-८ ॥
६. मु. ३-१-२, श्वे. ४. ६ ॥
७. मु. १-१-५॥ ८. मु. ३-१-१, श्वे. ४. ६॥
९. मु. २-२-५ ॥

आप्नोतीति ह्यात्मा? अमृतस्य प्रापकतया सेतुश्च स एव । नाडीसम्बन्धः, बहुधाजायमानत्वञ्च, १"सन्ततं सिराभिस्तु लम्बत्या कोशसन्निभम्" २"अजायमानो बहुधा विजायते" इत्यादिषु सर्वसमाश्रयणीयत्वायाजहत्स्वभावस्यैव परमात्मनोऽपि दृश्यत इति । सूत्रार्थस्तु—द्युपृथिव्यादीनामायतनं परमात्मा, स्वशब्दात् ॥ १ ॥

मुक्तोपसृप्यव्यपदेशाच्च ॥ ३"तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" ४"तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इति च बन्धान्मुक्तस्य प्राप्यतया व्यपदेशाच्चायं परमात्मा ॥ २॥

नानुमानमतच्छब्दात्प्राणभृच्च ॥ आनुमानम् अनुमानगम्यं प्रधानम् । यथा तद्वाचिशब्दाभावात्तदिह न गृह्यते ; तथा प्राणभृदपीत्यर्थः । अतश्चायं परमात्मा ॥ ३ ॥

भेदव्यपदेशात् ॥ ५" अनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशम् " इत्यादिना जीवाद्भेदेन व्यपदेशाच्चायं परमात्मा ॥ ४ ॥

प्रकरणात् ॥ ६" अथ परा यया तदक्षरमधिगम्यते " इत्यादिना परमात्मन एव प्रकृतत्वात् ॥ ५ ॥

स्थित्यदनाभ्याञ्च ॥ ७ "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति" इति कर्मफलमनश्नतः परमात्मनो दीप्यमानतया स्थितेः, जीवस्य कर्मपरवशतया तत्फलादनाच्च, परमात्मनो जीवाद्भेदावगमात् अमृतसेतुद्युभ्वाद्यायतनं न जीवः। ८ "अदृश्यत्वादिगुणकः" इत्यनेन परमात्मत्वे स्थापितेऽपि, नाडीसम्बन्धबहुधाजायमानत्वलिङ्गात् , याऽवान्तरप्रकरणविच्छेदशङ्का, सा निराकृता " द्युभ्वाद्यायतनम् " इति वैश्वानरस्य त्रैलोक्यशरीरत्वादिना परमात्मत्वनिर्णय इति मध्ये वैश्वानरविद्या निरूपिता ॥ ६ ॥

इति वेदान्तदीपे द्युभ्वाद्यधिकरणम् ॥ १ ॥

---

१. तै. नारायणे. ६-११ ॥
२. पुरुषसूक्त. २१ ॥ ३. मु. ३-१-३॥
४. मु. ३-२-८ ॥
५. मु. ३-१-२, श्वे. ४. ७॥
६. मु. १-१५॥ ७. मु. ३-१-१, श्वे.४-६॥
८. शारी. १-२-२२ ॥

(श्रीशारीरकमीमांसाभाष्ये भूमाधिकरणम् ॥ २ ॥)

---

## भूमा सम्प्रसादादध्युपदेशात् । १ । ३ । ७॥

इदमामनन्ति च्छन्दोगाः[१] "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा । अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्" इति । अत्रायं भूमशब्दो भावप्रत्ययान्तो व्युत्पाद्यते । तथा हि पृथ्वादिषु बहुशब्दः पठ्यते ततः [२] "पृथ्वादिभ्य इमनिज्वा" इति इमनिच्प्रत्यये कृते [३] "बहोर्लोपो भू च बहोः" इति प्रकृतिप्रत्यययोर्विकारे भूमेति भवति । भूमा - बहुत्वमित्यर्थः । अत्र चायं बहुशब्दो वैपुल्यवाची, न सङ्ख्यावाची ; [४] "यत्रान्यत्पश्यति...तदल्पम्" इत्यल्पप्रतियोगित्वश्रवणात् । अल्पशब्दनिर्दिष्टधर्मिप्रतियोगिप्रतिपादनपरत्वादेव धर्मिपरश्च निश्चीयते ; न धर्ममात्रपरः । तदेवं भूमेति विपुल इत्यर्थः ; वैपुल्यविशेष्यश्चेहात्मेत्यवगतः [५] "तरति शोकमात्मवित्" इति प्रक्रम्य भूमविज्ञानमुपदिश्य [६] "आत्मैवेदं सर्वम्" इति तस्यैवोपसंहारात् । अत्र संशय्यते किमयं भूमगुणविशिष्टः प्रत्यगात्मा, उत परमात्मा–इति । किं युक्तम्? प्रत्यगात्मेति । कुतः? [५] "श्रुतं ह्येवमे भगवद्दृशेभ्यस्तरति शोकमात्मवित्" इत्यात्मजिज्ञासयोपसेदुषे नारदाय नामादिप्राणपर्यन्तेषूपास्यतयोपदिष्टेषु [७] "अस्ति भगवो नाम्नो भूयः" [८] "अस्ति भगवो वाचो भूयः" इत्यादयः प्रश्नाः, [९] "वाग्वाव नाम्नो भूयसी" [१०] "मनो वाव वाचो भूयः" इत्यादीनि च प्रतिवचनानि, प्राणात्प्राचीनेषु दृश्यन्ते ;

---

१. छा. ७-२४-१ ॥
२. अष्टाध्याय्यां. ५-१-१२२ ॥
३. अष्टा. ६-४-१५८ ॥
४. शारी. १-२-२२ ॥ ५. छा. ७-१-३॥
६. छा. ७. २५. २॥ ७. छा. ७-१-५॥
८. छा. ७-२-२ ॥
९. छा. ७-२-१ ॥
१०. छा. ७-३-१ ॥

छा ७.२५.१

प्राणे तु न पश्यामः। अतः प्राणपर्यन्त एवायमात्मोपदेश इति प्रतीयते तेनेह प्राणशब्दनिर्दिष्टः प्राणसहचारी प्रत्यगात्मैव; न वायुविशेषमात्रम्। [1]"प्राणो ह पिता प्राणो ह माता" इत्यादयश्च प्राणस्य चेतनतामवगमयन्ति; [2]"पितृहा ...मातृहा" इत्यादिना सप्राणेषु पितृप्रभृतिषूपमर्दकारिणि हिंसकत्वनिमित्तोपक्रोशवचनात्तेष्वेव विगतप्राणेष्वत्यन्तोपमर्दकारिण्यप्युपक्रोशाभाववचनाच्च हिंसायोग्यश्चेतन एव प्राणशब्दनिर्दिष्टः। अप्राणेषु स्थावरेष्वपि चेतनेषूपमर्दभावाभावयोर्हिंसातदभावदर्शनादयं हिंसायोग्यतया निर्दिष्टः प्राणः प्रत्यगात्मैवेति निश्चीयते। अत एवच अरनाभिदृष्टान्ताद्युपन्यासेन प्राणशब्दनिर्दिष्टः पर इति न भ्रमितव्यम्, परस्य हिंसाप्रसङ्गाभावात्, जीवादितरस्य तद्भोग्यभोगोपकरणभूतस्य कृत्स्नस्याचिद्वस्तुनो जीवायत्तस्थितित्वेन प्रत्यगात्मन्येवारनाभिदृष्टान्तोपपत्तेश्च। अयमेव च प्राणशब्दनिर्दिष्टो भूमा; 'अस्ति भगवः प्राणाद्भूयः' इति प्रश्नस्य 'अदो वाव प्राणाद्भूयः' इति प्रतिवचनस्य चाभावाद्भूमसंशब्दनात्प्राक्प्राणप्रकरणस्याविच्छेदात्। किञ्च प्राणवेदिनोऽतिवादित्वमुक्त्वा तमेव [3]"एष तु वा अतिवदति" इति प्रत्यभिज्ञाप्य [3]"यस्सत्येनातिवदति" इति तस्य सत्यवदनं प्राणोपासनाङ्गतयोपदिश्य उपादेयस्य सत्यवदनस्य शेषितया पूर्वनिर्दिष्टप्राणयाथात्म्यविज्ञानं [4]"यदा वै विजानात्यथ सत्यं वदति" इत्युपदिश्य तत्सिद्ध्यर्थं च मननश्रद्धानिष्ठाप्रयत्नानुपदिश्य तदारम्भाय च प्राप्यभूतप्राणशब्दनिर्दिष्टप्रत्यगात्मस्वरूपस्य सुखरूपताज्ञानमुपदिश्य तस्य च सुखस्य विपुलता [5]"भूमा त्वेव विजिज्ञासितव्यः" इत्युपदिश्यते। तदेवं प्रत्यगात्मन एवाविद्याावियुक्तं रूपं विपुलसुखमित्युपदिष्टमिति [6]"तरति

१. छा. ७-१५-१ ॥
२. छा. ७-१५-२ ॥
३. छा. ७-१६ ॥
४. छा. ७-१७ ॥
५. छा. ७-२३-१ ॥
६. छा. ७-१-३ ॥

शोकमात्मवित्" इत्युपक्रमाविरोधश्च। अतो भूमगुणविशिष्टः प्रत्यगात्मा, यत एवं भूमगुणविशिष्टः प्रत्यगात्मा, अतएवाहमर्थे प्रत्यगात्मनि [1]"अहमेवाधस्तादहमुपरिष्टात्" इत्यारभ्य [1]"अहमेवेदं सर्वम्" इति प्रत्यगात्मनो वैभवमुपदिशति। एवं प्रत्यगात्मत्वे निश्चिते सति तदनुगुणतया वाक्यशेषो नेतव्य इति ॥

(सिद्धान्तः)

एवं प्राप्तेऽभिधीयते—भूमा सम्प्रसादादध्युपदेशात्—भूमगुणविशिष्टो न प्रत्यगात्मा; अपि तु परमात्मा, कुतः? सम्प्रसादादध्युपदेशात्; सम्प्रसादः-प्रत्यगात्मा, [2]"एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्युपनिषत्प्रसिद्धेः। सम्प्रसादात् प्रत्यगात्मनोऽधिकतया भूमविशिष्टस्य सत्यशब्दाभिधेयस्योपदेशादित्यर्थः। सत्यशब्दाभिधेयं च परं ब्रह्म। एतदुक्तं भवति —यथा नामादिषु प्राणपर्यन्तेषु पूर्वपूर्वाधिकतयोत्तरोत्तराभिधानात्पूर्वेभ्य उत्तरेषामर्थान्तरत्वम्, एवं प्राणशब्दनिर्दिष्टात्प्रत्यगात्मनोऽधिकतया निर्दिष्टस्सत्यशब्दाभिधेयस्तस्मादर्थान्तरभूत एव; सत्यशब्दनिर्दिष्ट एव भूमेति सत्याख्यं परं ब्रह्मैव भूमेत्युपदिश्यते-इति। तदाह वृत्तिकारः[3]"भूमा त्वेवेति भूमा ब्रह्म नामादिपरम्परया आत्मन ऊर्ध्वमस्योपदेशात्" इति। प्राणशब्दनिर्दिष्टादधिकतया सत्यस्योपदेशः कथमवगम्यत इति चेत् —[4]"स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति" इति प्राणविदोऽतिवादित्वमुक्त्वा [5]"एष तु वा अतिवदति यस्सत्येनातिवदति" इति सत्यवेदित्वेनातिवादिनं तुशब्देन पूर्वस्मादतिवादिनो व्यावर्तयति। अत एव [5]"एष तु वा अतिवदति" इत्यत्र प्राणातिवादिनो

१. छा. ७. २५. १ ॥
२. छा. ८. १२. २ ॥
३. वृत्तिः ॥
४. छा. ७. १५. ४ ॥
५. छा. ७. १६-१ ॥

न प्रत्यभिज्ञा । अतोऽस्यातिवादित्वनिमित्तं सत्यं पूर्वातिवादित्वनिमित्तात्प्राणादधिकमिति विज्ञायते ॥

ननु च प्राणवेदिन एव सत्यवदनमङ्गत्वेनोपदिष्टम्, अतः प्राणप्रकरणाविच्छेद इत्युक्तम् । नैतद्युक्तम्—तुशब्देन ह्यतिवाद्येवान्यः प्रतीयते, न तु तस्यैवातिवादिनस्सत्यवदनाङ्गविशिष्टतामात्रम् । [1]"एष तु वा अग्निहोत्री यस्सत्यं वदति" इत्यादिष्वग्निहोत्र्यन्तराप्रतीतेः, प्रतीतस्यैवाग्निहोत्रिणस्सत्यवदनाङ्गविधानमिति क्लिष्टा गतिराश्रीयते; अत्र त्वतिवाद्यन्तरत्वनिमित्तं सत्यशब्दाभिधेयं परं ब्रह्म प्रतीयते । सत्यशब्दश्च [2]"सत्यं ज्ञानमनन्तं ब्रह्म"इत्यादिषु परस्मिन्ब्रह्मणि प्रयुक्तः; अतस्तन्निष्ठस्यातिवादिनः पूर्वस्मादधिकत्वं सम्भवतीति वाक्यस्वरससिद्धमन्यत्वं न बाधितव्यम् । अतिवादित्वं हि वस्त्वन्तरात्पुरुषार्थतयाऽतिक्रान्तस्वोपास्यवस्तुवादित्वम्; नामाद्याशापर्यन्तोपास्यवस्त्वतिक्रान्तस्वोपास्यप्राणशब्दनिर्दिष्टप्रत्यगात्मवादित्वात्प्राणविदोऽतिवादित्वम्; तस्यापि सातिशयपुरुषार्थत्वान्निरतिशयपुरुषार्थतयोपास्यपरब्रह्मवादिन एव साक्षादतिवादित्वमिति [3]"एष तु वा अतिवदति यस्सत्येनातिवदति" इत्युक्तम् । सत्येनेतीत्थम्भूतलक्षणे तृतीया; सत्येन परेण ब्रह्मणोपास्येनोपलक्षितो योऽतिवदतीत्यर्थः । अतएवैवं शिष्यः प्रार्थयते [3]"सोऽहं भगवस्सत्येनातिवदानि" इति । आचार्यश्च [3]"सत्यं त्वेव विजिज्ञासितव्यम्" इत्याह । [4]"आत्मतः प्राणः" इति च प्राणशब्दनिर्दिष्टस्याऽत्मन उत्पत्तिरुच्यते । अतः [5]"तरति शोकमात्मवित्"इति प्रक्रान्त आत्मा प्राणशब्दनिर्दिष्टादन्य इति गम्यते ॥

---

१.

२. तै. आन. १. अनु ॥

३. छा. ७. १६. १ ॥

४. छा. ७. २६. १ ॥

५. छा. ७. १. ३ ॥

यदुक्तम्—'अस्ति भगवः प्राणाद्भूयः' इति प्रश्नस्य 'अदो वाव प्राणाद्भूयः' इति प्रतिवचनस्यचादर्शनात्प्रक्रान्त आत्मोपदेशः प्राणोपदेशपर्यवसानो गम्यत इति ; तदयुक्तम् ; नहि प्रश्नप्रतिवचनाभ्यामेवार्थान्तरत्वं गम्यते ; प्रमाणान्तरेणापि तत्सम्भवात् । उक्तश्च प्रमाणान्तरम्। 'अस्ति भगवः प्राणाद्भूयः' इत्यपृच्छतोऽयमभिप्रायः—नामादिष्वाशापर्यन्तेष्वचेतनेषु पुरुषार्थभूयस्तया पूर्वपूर्वमतिक्रान्तेष्वप्युत्तरोत्तरेषूपदिष्टेषु तत्तद्वेदिन आचार्येणातिवादित्वं नोक्तम्; प्राणशब्दनिर्दिष्टप्रत्यगात्मयाथात्म्यवेदिनस्तु पुरुषार्थभूयस्त्वातिशयं मन्वानेन[1] "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति" इति अतिक्रान्तवस्तुवादित्वमुक्तम् । अतोऽत्रैवात्मोपदेशस्समाप्त इति मत्वा शिष्यो भूयो न पप्रच्छ। आचार्यस्त्विदमपि सातिशयं मत्वा निरतिशयपुरुषार्थभूतं सत्यशब्दाभिधेयं परं ब्रह्म[2] "एष तु वा अतिवदति यस्सत्येनातिवदति" इति स्वयमेवोपचिक्षेप । शिष्योऽपि परमपुरुषार्थरूपे परस्मिन्ब्रह्मण्युपक्षिप्ते तत्स्वरूपतदुपासनयाथात्म्यबुभुत्सया [2]"सोऽहं भगवस्सत्येनातिवदानि"इति प्रार्थयामास । ततो ब्रह्मसाक्षात्कारनिमित्तातिवादित्वसिद्धये ब्रह्मसाक्षात्कारोपायभूतं ब्रह्मोपासनम्[2]"सत्यं त्वेव विजिज्ञासितव्यम्"इत्युपदिश्य तदुपायभूतं ब्रह्ममननम् [3]"मतिस्त्वेव विजिज्ञासितव्या" इत्युपदिश्य श्रवणप्रतिष्ठार्थत्वान्मननस्य मननोपदेशेन श्रवणमर्थसिद्धं मत्वा श्रवणोपायभूतां ब्रह्मणि श्रद्धाम्[4]"श्रद्धा त्वेव विजिज्ञासितव्या" इत्युपदिश्य तदुपायभूतां च तन्निष्ठाम्[5]"निष्ठा त्वेव विजिज्ञासितव्या" इत्युपदिश्य तदुपायभूतां च तदुद्योगप्रयत्नरूपां कृतिमपि[6]"कृतिस्त्वेव विजिज्ञासितव्या" इत्युपदिश्य श्रवणाद्युपक्रमरूपकृतिसिद्धये प्राप्यभूतस्य सत्यशब्दाभिहि-

१. छा. ७. १५. ४॥
२. छा. ७. १६॥
३. छा. ७. १८॥
४. छा. ७. १९॥
५. छा. ७. २०॥
६. छा. ७. २१॥

तस्य ब्रह्मणस्सुखरूपता ज्ञातव्येति[१]"सुखं त्वेव विजिज्ञासितव्यम्" इत्युपदिश्य निरतिशयविपुलमेव सुखं परमपुरुषार्थरूपं भवतीति तस्यैव ब्रह्मणस्सुखरूपस्य निरतिशयविपुलता ज्ञातव्येति[२]"भूमा त्वेव विजिज्ञासितव्यः" इत्युपदिश्य निरतिशयविपुलसुखरूपस्य ब्रह्मणो लक्षणमिदमुच्यते [३]"यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति । अयमर्थः—अनवधिकातिशयसुखरूपे ब्रह्मण्यनुभूयमाने ततोऽन्यत्किमपि न पश्यत्यनुभविता, ब्रह्मस्वरूपतद्विभूत्यन्तर्गतत्वाच्च कृत्स्नस्य वस्तुजातस्य ; अत ऐश्वर्यापरपर्यायविभूतिगुणविशिष्टं निरतिशयसुखरूपं ब्रह्मानुभवन् तद्व्यतिरिक्तस्य वस्तुनोऽभावादेव किमप्यन्यन्न पश्यति ; अनुभाव्यस्य सर्वस्य सुखरूपत्वादेव दुःखं च न पश्यति, तदेव हि सुखम्, यदनुभूयमानं पुरुषानुकूलं भवति ॥

ननु चेदमेव जगद्ब्रह्मणोऽन्यतयाऽनुभूयमानं दुःखरूपं परिमितसुखरूपं च भवत्कथमिव ब्रह्मविभूतित्वेन तदात्मकतयानुभूयमानं सुखरूपमेव भवेत् । उच्यते—कर्मवश्यानां क्षेत्रज्ञानां ब्रह्मणोऽन्यत्वेनानुभूयमानं कृत्स्नं जगत्तत्तत्कर्मानुरूपं दुःखं च परिमितसुखं च भवति । अतो ब्रह्मणोऽन्यतया परिमितसुखत्वेन दुःखत्वेन च जगदनुभवस्य कर्मनिमित्तत्वात्कर्मरूपाविद्याविमुक्तस्य तदेव जगद्विभूतिगुणविशिष्टब्रह्मानुभवान्तर्गतं सुखमेव भवति । यथा पित्तोपहतेन पीयमानं पयः पित्ततारतम्येनाल्पसुखं विपरीतं च भवति; तदेव पयः पित्तानुपहतस्य सुखायैव भवति ; यथैव राजपुत्रस्य पितुर्लीलोपकरणमतथात्वेनानुसन्धीयमानं प्रियत्वमनुपगतं तथात्वानुसन्धाने प्रियतमं भवति;तथा निरतिशयानन्दस्वरूपस्य ब्रह्मणोऽनवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य लीलोपकरणं तदात्मकं

---

१. छा. ७. २२ ॥
२. छा. ७. २३ ॥
३. छा. ७. २४. १ ॥

चानुसन्धीयमानं जगन्निरतिशयप्रीतये भवत्येव। अतो जगदैश्वर्यविशिष्टमनवधिकातिशयसुखरूपं ब्रह्मानुभवंस्ततोऽन्यत्किमपि न पश्यति; दुःखं च न पश्यति। एतदेवोपपादयति वाक्यशेषः[१] "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दस्स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषां सर्वेषु लोकेष्वकामचारो भवति" इति। स्वराट्—अकर्मवश्यः। अन्यराजानः—कर्मवश्याः। तथा [२] "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति च। निरतिशयसुखरूपत्वं च ब्रह्मणः [३] "आनन्दमयोऽभ्यासात्" इत्यत्र प्रपञ्चितम्। अतः प्राणशब्दनिर्दिष्टात्प्रत्यगात्मनोऽर्थान्तरभूतस्य सत्यशब्दाभिधेयस्य ब्रह्मणो भूमेत्युपदेशाद्भूमा परं ब्रह्म ॥

## धर्मोपपत्तेश्च ।१।३।८॥

अस्य भूम्नो ये धर्मा आम्नायन्ते; तेऽपि परस्मिन्नेवोपपद्यन्ते। [४] "एतदमृतम्" इति स्वाभाविकममृतत्वम्, [४] "स्वे महिम्नि" इत्यनन्याधारत्वम्, [५] "स एवाधस्तात्" इत्यादि [५] "स एवेदं सर्वम्" इति सर्वात्मकत्वम्, [६] "आत्मतः प्राणः" इत्यादिप्राणप्रभृतिसर्वस्योत्पादकत्वमित्यादयो हि धर्माः परमात्मन एव। यत्तु[५] "अहमेवाधस्तात्" इत्यादिना सर्वात्मकत्वमुपदिष्टम्, तद्भूमविशिष्टस्य ब्रह्मणोऽहङ्ग्रहेणोपासनमुपदिश्यते [५] "अथातोऽहङ्कारादेशः" इत्यहङ्ग्रहोपदेशोपक्रमात्। अहमर्थस्य प्रत्यगात्मनोऽपि ह्यात्मा परमात्मेत्यन्तर्यामिब्राह्मणादिषूक्तम्। अतः प्रत्यग-

---

१. छा. ७.२५.२॥ २. छा. ७.२६. २॥
३. शारी. १. १. १२॥
४. छा. ७. २४. १॥ तदमृतमिति रङ्गरामानुजीय पाठः॥
५. छा. ७. २५. १॥
६. छा. ७. २६.१.॥

र्थस्य परमात्मपर्यवसानादहंशब्दोऽपि परमात्मपर्यवसायीति प्रत्यगात्मशरीरकत्वेन परमात्मानुसन्धानार्थोऽयमहङ्ग्रहोपदेशः। परमात्मनस्सर्वशरीरतया सर्वात्मत्वात्प्रत्यगात्मनोऽप्यात्मा परमात्मा। तदेव[1] "अथात आत्मादेशः" इत्यादिना[1] "आत्मैवेदं सर्वम्" इत्यन्तेनोच्यते। एतदेवोपपादयितुं प्रत्यगात्मनोऽप्यात्मभूतात्परमात्मनस्सर्वस्योत्पत्तिरुच्यते [2] "तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आकाशः" इत्यादिना। उपासकस्यान्तर्यामितयाऽवस्थितात्परमात्मनस्सर्वस्योत्पत्तिरित्यर्थः। अतः परमात्मनः प्रत्यगात्मशरीरकत्वज्ञानप्रतिष्ठार्थमहङ्ग्रहोपासनं कर्तव्यम्। तस्माद्भूमविशिष्टः परमात्मेति सिद्धम् ॥ ८ ॥

इति श्रीशारीरकमीमांसाभाष्ये भूमाधिकरणम् ॥ २ ॥

---

वेदान्तसारे—भूमा सम्प्रसादादध्युपदेशात् ॥ [3] "सुखं त्वेव विजिज्ञासितव्यम्" [4] "भूमैव सुखम्" इत्युक्त्वा भूम्नस्स्वरूपमाह [5] "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति; यस्मिन् सुखेऽनुभूयमाने तद्व्यतिरिक्तं किमपि सुखत्वेन न पश्यति न शृणोति न विजानाति स भूमेत्युच्यते, [5] "अथ यत्रान्यत्पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पम्" इतिवचनात्। तथाच महाभारते [6] "दिव्यानि कामचाराणि विमानानि सभास्तथा। आक्रीडा विविधा राजन् पद्मिन्यश्चामलोदकाः। एते वै निरयास्तात स्थानस्य परमात्मनः" इति। [7] "एष तु वा अतिवदति यस्सत्येनातिवदति" इति प्रस्तुतश्चातिवादित्वमेवमेव समञ्जसम्। अतिवादित्वं हि स्वोपास्यपुरुषार्थाधिक्यवादित्वम्, 'तदल्पम्' इत्यल्पप्रतियोगित्वेन, 'भूमा' इत्युक्तप्रकारवैपुल्याश्रयसुखरूपवाची। अयं भूमशब्दव्यपदिष्टः परमात्मा; संप्रसादादध्युपदेशात्—संप्रसादः प्रत्यगात्मा, [8] "अथ य एष संप्र-

---

१. छा. ७. २५. २ ॥
२. छा. ७. २६. १ ॥
३. छा. ७. २२ ॥
४. छा. ७. २३ ॥
५. छा. ७. २४. १ ॥
६. भारते. शान्ति. मोक्ष १९८.४,६.श्लो॥
७. छा. ७. १६ ॥
८. छा. ८. ३. ४ ॥

[प्रस]ादः" इत्यादिश्रुतेः। १"एष तु वा अतिवदति यस्सत्येन" इत्यादिना प्राण[श]ब्दनिर्दिष्टात् प्रत्यगात्मनः ऊर्ध्वमर्थान्तरत्वेन अस्योपदेशात् ॥ ७ ॥

धर्मोपपत्तेश्च ॥ २"स भगवः कस्मिन् प्रतिष्ठितः...स्वे महिम्नि" इत्यादावुपदिष्टानां स्वमहिमप्रतिष्ठितत्वसर्वकारणत्वसर्वात्मकत्वादिधर्माणां परस्मिन्नेवोपपत्तेश्च भूमा परः ॥ ८ ॥

इति वेदान्तसारे भूमाधिकरणम् ॥ २ ॥

---

वेदान्तदीपे—भूमा सम्प्रसादादध्युपदेशात् ॥ छान्दोग्ये २"यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इत्यत्र भूमशब्दनिर्दिष्टो निरतिशयवैपुल्यविशिष्टसुखस्वरूपः किं प्रत्यगात्मा? उत परमात्मेति संशयः। प्रत्यगात्मेति पूर्वः पक्षः, ३"तरति शोकमात्मवित्" इति प्रक्रम्य नामादिपरम्परयोत्तरोत्तरभूयस्त्वेन प्रश्नप्रतिवचनाभ्यां प्रवृत्तस्यात्मोपदेशस्य प्राणशब्दनिर्दिष्टे प्रत्यगात्मनि समाप्तिदर्शनात्, प्रत्यगात्मन एव भूमसंशब्दनमिति निश्चीयते। राद्धान्तस्तु—यद्यपि प्रश्नप्रतिवचनाभ्यामुत्तरोत्तरभूयस्त्ववचनं प्राणे पर्यवस्थितम्; तथापि प्राणवेदिनोऽतिवादित्वमुक्त्वा, ४"एष तु वा अतिवदति यस्सत्येनातिवदति" इति तुशब्देनोपासकभेदं प्रतिपाद्य, तस्य सत्योपासकस्य पूर्वस्मादाधिक्योपदेशात्, सत्यशब्दाभिधेयं परं ब्रह्मैव भूमविशिष्टमिति। सूत्रार्थस्तु—भूमगुणविशिष्टं परं ब्रह्मैव, सम्प्रसादादध्युपदेशात्; सम्प्रसादः प्रत्यगात्मा, ५"एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य" इत्याद्युपनिषत्प्रसिद्धेः; ४"एष तु वा अतिवदति" इति प्रत्यगात्मनोऽधिकतयोपदेशात्। अतिवादित्वं हि स्वोपास्याधिक्यवादित्वम् ॥ ७ ॥

धर्मोपपत्तेश्च ॥ स्वाभाविकामृतत्वस्वमहिमप्रतिष्ठितत्वसर्वात्मत्वसर्वोत्पत्तिहेतुत्वादीनां भूम्नि श्रूयमाणानां धर्माणां परस्मिन्नेव ब्रह्मण्युपपत्तेश्च भूमा परं ब्रह्मैव ॥ ८ ॥

इति वेदान्तदीपे भूमाधिकरणम् ॥ २ ॥

---

१. छा. ७, १६-१ ॥
२. छा. ७. २४. १ ॥
३. छा. ७-१-३ ॥
४. छा. ७-१६ ॥ ५. छा. ८-३-४ ॥

## अक्षरमम्बरान्तधृतेः । १ । ३ । ९ ॥

वाजसनेयिनो गार्गीप्रश्ने समामनन्ति [१]"सहोवाचैतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायम्" इत्यादि । तत्र संशयः–किमेतदक्षरं प्रधानम्–जीवो वा–उत परमात्मा–इति। किं युक्तम्? प्रधानमिति। कुतः? [२]"अक्षरात्परतः परः" इत्यादिष्वक्षरशब्दस्य प्रधाने प्रयोगदर्शनादस्थूलत्वादीनां च तत्र समन्वयात् । [३]"यया तदक्षरमधिगम्यते" इत्यादिषु परस्मिन्नप्यक्षरशब्दो दृश्यत इति चेत्–न,प्रमाणान्तरप्रसिद्धश्रुतिप्रसिद्धयोः प्रमाणान्तरप्रसिद्धस्य प्रथमप्रतीतेः; प्रतीतपरिग्रहे विरोधाभावात्। [३]"यदूर्ध्वं गार्गि दिवो,यदर्वाक्पृथिव्याः" इत्यारभ्य सर्वस्य कालत्रितयवर्तिनः कारणभूताकाशाधारत्वे प्रतिपादिते [३]"कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" इत्याकाशस्यापि कारणं तदाधारभूतं किमिति पृष्टे प्रत्युच्यमानमक्षरं सर्वविकारकारणतया तदाधारभूतं प्रमाणान्तरप्रसिद्धं प्रधानमिति प्रतीयते अतोऽक्षरं प्रधानम् ॥

(सिद्धान्तः)

इति प्राप्ते उच्यते–अक्षरमम्बरान्तधृतेः–अक्षरं–परं ब्रह्म ; कुतः? अम्बरान्तधृतेः; अम्बरस्य–आकाशस्य, अन्तः–पारभूतम् अव्याकृतमम्बरान्तः; तस्य धृतेः तदाधारतयाऽस्याक्षरस्योपदेशादिति यावत्। अयमर्थः–"कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" इत्यत्राकाशशब्दनिर्दिष्टं न वायुमदम्बरम् ,अपितु तत्पारभूतमव्याकृतम् ,अतस्तस्याव्याकृतस्याप्या-

१. बृ. ५-८-८ ॥ २. मु. २-१-२ ॥ ३. मु. १-१-५ ॥ ४. बृ. ५-८-७ ॥

धारत्वेनोच्यमानमक्षरं नाव्याकृतं भवितुमर्हति–इति । नन्वाकाशशब्द-निर्दिष्टो न वायुमानिति कथमवगम्यते; उच्यते [1]"यदूर्ध्वं गार्गि दिवो यदर्वाक्पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चे-त्याचक्षते आकाश एव तदोतं च प्रोतंच" इत्युक्ते त्रैकाल्यवर्तिनो वि-कारजातस्याधारतया निर्दिष्ट आकाशो न वायुमदाकाशो भवितुमर्हति; तस्यापि विकारान्तर्गतत्वात् । अतोऽत्राकाशशब्दनिर्दिष्टं भूतसूक्ष्ममिति प्रतीयते। ततस्तस्यापि भूतसूक्ष्मस्याधारभूतं किमिति पृच्छयते[1]"कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" इति । अतस्तदाधारतया निर्दिश्यमानमक्षरं न प्रधानं भवितुमर्हति ॥

यत्तु श्रुतिप्रसिद्धात्प्रमाणान्तरप्रसिद्धं प्रथमं प्रतीयत इति, तन्न, अक्षरशब्दस्यावयवशक्त्या स्वार्थप्रतिपादने प्रमाणान्तरानपेक्षणात्; सम्ब-न्धग्रहणदशायामर्थस्वरूपं येन प्रमाणेनावगम्यते, न तत्प्रतिपादनदशा-यामपेक्षणीयम् ॥ ९ ॥

एवं तर्ह्यक्षरशब्दनिर्दिष्टो जीवोऽस्तु, तस्य भूतसूक्ष्मपर्यन्तस्य कृ-त्स्नस्याचिद्वस्तुन आधारत्वोपपत्तेः; अस्थूलत्वाद्युच्यमानविशेषणोपप-त्तेश्च [2]"अव्यक्तमक्षरे लीयते" [3]"यस्याव्यक्तं शरीरं...यस्याक्षरं शरीरं" [4]"क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इत्यादिषु प्रत्यगात्मन्य-प्यक्षरशब्दप्रयोगदर्शनादित्यत्रोत्तरम्—

## सा च प्रशासनात् ।१।३।१०॥

सा चाम्बरान्तधृतिरस्याक्षरस्य प्रशासनादेव भवतीत्युपदिश्यते [5]"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः, एत-

---

१. बृ. ५-८-७ ॥ २. सुबाल. २-ख ॥ ३. सुबाल, ७-ख ॥ ४. गी. १५-१६ ॥ ५. बृ. ५-८-९ ॥

स्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवस्संवत्सरा इति विधृतास्तिष्ठन्ति" इत्यादिना। प्रशासनम्— प्रकृष्टं शासनम्। न चेदृशं स्वशासनाधीनसर्ववस्तुविधरणं बद्धमुक्तोभयावस्थस्यापि प्रत्यगात्मनस्सम्भवति। अतः पुरुषोत्तम एव प्रशासित्रक्षरम्॥ १०॥

## अन्यभावव्यावृत्तेश्च।१।३।११॥

अन्यभावः—अन्यत्वम्, प्रधानादिभावः। अस्याक्षरस्य परमपुरुषादन्यत्वं वाक्यशेषे व्यावर्त्यते[१] "तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ, नान्यदतोऽस्ति मन्तृ, नान्यदतोऽस्ति विज्ञातृ, एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इति। अत्र द्रष्टृत्वश्रोतृत्वाद्युपदेशादस्याक्षरस्याचेतनभूतप्रधानभावो व्यावर्त्यते; सर्वैरदृष्टस्यैव सतस्सर्वस्य द्रष्टृत्वाद्युपदेशाच्च प्रत्यगात्मभावो व्यावर्त्यते। अत इयमन्यभावव्यावृत्तिरस्याक्षरस्य परमपुरुषतां द्रढयति। एवं वाऽन्यभावव्यावृत्तिः—अन्यस्य सद्भावव्यावृत्तिरन्यभावव्यावृत्तिः; यथैतदक्षरमन्यैरदृष्टं सदन्येषां द्रष्टृ च सत्स्वव्यतिरिक्तस्य समस्तस्याधारभूतम्, एवमनेनादृष्टमेतस्य द्रष्टृ च सदेतस्याधारभूतमन्यन्नास्तीति वदन्[१] "नान्यदतोऽस्ति द्रष्टृ" इत्यादिवाक्यशेषोऽन्यस्य सद्भावं व्यावर्तयन्नस्याक्षरस्य प्रधानभावं प्रत्यगात्मभावं च प्रतिषेधति। किञ्च[२] "एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः" इति श्रौतं स्मार्तं च यागदानहोमादिकं सर्वं कर्म यस्याऽऽज्ञया प्रवर्तते; तदक्षरं परब्रह्मभूतः पुरुषोत्तम एवेति विज्ञायते। अपि च[३] "यो वा एतदक्षरं गार्ग्यविदित्वा-

---

१. बृ. ५-८-११॥
२. बृ. ५-८-९॥
३. बृ. ५-८-१०॥

स्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भ-वति यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः, अथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः" इति यदज्ञानात्संसारप्राप्तिर्यज्ज्ञानाच्चामृतत्वप्राप्तिस्तदक्षरं परं ब्रह्मैवेति सिद्धम् ॥ ११ ॥

इति श्रीशारीरकमीमांसाभाष्ये अक्षराधिकरणम् ॥ ३ ॥

---

वेदान्तसारे—अक्षरमम्बरान्तधृतेः ॥ १ "एतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनणु" इत्यादिना अभिहितमक्षरं परं ब्रह्म, अम्बरान्तधृतेः । २ "यदूर्ध्वं गार्गि दिवः" इत्यारभ्य सर्वविकाराधारतया निर्दिष्ट आकाशः २ "कस्मिन्नोतश्च" इति पृष्टे १ "एतद्वैतदक्षरम्" इति निर्दिष्टस्याक्षरस्य वायुमदम्बरान्तधृतेः सर्वविकाराधारो ह्ययमाकाशः वायुमदम्बरान्तकारणं प्रधानम्; तद्धारकं परं ब्रह्म ॥ ९ ॥

सा च प्रशासनात् ॥ सा चधृतिः, ३ "एतस्य वाऽक्षरस्य प्रशासने गार्गि" इत्यादिना प्रकृष्टाज्ञया क्रियमाणा श्रूयते । अत इदमक्षरं प्रत्यगात्मा च न भवतीत्यर्थः ॥ १० ॥

अन्यभावव्यावृत्तेश्च ॥ अन्यभावः—अन्यत्वम्, ४ "अदृष्टं द्रष्टृ" इत्यादिना परमात्मनोऽन्यत्वं ह्यस्याक्षरस्य व्यावर्तयति वाक्यशेषः; अतश्च पर एव ॥ ११ ॥

इति वेदान्तसारे अक्षराधिकरणम् ॥ ३ ॥

---

वेदान्तदीपे—अक्षरमम्बरान्तधृतेः ॥ वाजिनां गार्गीप्रश्ने १ "स होवाचैतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायम्" इत्यत्राक्षरशब्दनिर्दिष्टं प्रधानम्, जीवो वा? उत परमात्मा—इति संशयः । प्रधानम्, जीवो वा, न परमात्मा—इति पूर्वः पक्षः । २ "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" इत्युक्ते, आकाशाधारतयोच्यमा-

---

१. बृ. ५-८-८ ॥
२. बृ. ५-८-७ ॥
३. बृ. ५-८-९ ॥
४. बृ. ५-८-११ ॥

नमक्षरं प्रधानम्, जीवो वा; प्रधानस्य विकाराधारत्वात्, जीवस्याचिद्वस्त्वाधारत्वात्; न परमात्मा—इति। राद्धान्तस्तु—१"यदूर्ध्वं गार्गि दिवः" इत्यारभ्य, कालत्रयवर्तिनः कृत्स्नस्याधारतया निर्दिष्ट आकाशोऽव्याकृतमेव; न वायुमानाकाशः। ततः पश्चात् १"कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" इति पृष्टे, तदाधारतयोच्यमानमेतदक्षरं न प्रधानं भवितुमर्हति; नापि जीवः २"एतस्यवा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यारभ्य प्रशासनात्सर्वाधारत्वश्रुतेः। सूत्रार्थस्तु— ३"एतद्वैतदक्षरं गार्गि" इति निर्दिष्टमक्षरं परमात्मा, अम्बरान्तधृतेः—अम्बरम्—वायुमानाकाशः, अम्बरान्तः—अम्बरपारभूतम्, अम्बरकारणमिति यावत्; कारणापत्तिरेव हि कार्यस्यान्तः। स चाम्बरान्तः अव्याकृतं प्रधानम्, तस्य धृतेः—धारणात्। अव्याकृतस्यापि धृतेरक्षरं परमात्मैवेत्यर्थः॥ ९॥

एवं तर्हि जीवो भवितुमर्हति, तस्य प्रधानधृत्युपपत्तेरित्याशङ्क्याह—

**सा च प्रशासनात्॥** सा च अम्बरान्तधृतिः, २"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ" इति प्रशासनात् श्रूयते। प्रशासनम्—प्रकृष्टं शासनम्, अप्रतिहताज्ञा। न चाप्रतिहताज्ञया कृत्स्नस्य चिदचिदात्मकस्य जगतो धृतिर्जीवे उपपद्यते; अतो न जीवः॥ १०॥

**अन्यभावव्यावृत्तेश्च॥** अन्यभावः—अन्यत्वम्, अस्याक्षरस्य परमपुरुषादन्यत्वं व्यावर्तयति वाक्यशेषः, ४"अदृष्टं द्रष्टृ"इत्यादिना सर्वैरदृष्टमेतदक्षरं सर्वस्य द्रष्ट्रित्यादिप्रधानजीवासम्भावनीयार्थप्रतिपादनात्॥ ११॥

इति वेदान्तदीपे अक्षराधिकरणम्॥ ३॥

---

(श्रीशारीरकमीमांसाभाष्ये ईक्षतिकर्माधिकरणम्॥ ४॥)

---

## ईक्षतिकर्म व्यपदेशात्सः। १। ३। १२॥

आथर्वणिकास्सत्यकामप्रश्नेऽधीयते ५"यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः। यथा पादोदर-

---

१. बृ. ५-८-७॥ २. बृ. ५-८-९॥ ३. बृ. ५-८-८॥ ४. बृ. ५-८-११॥ ५. प्रश्न. ५-५॥

त्वचा विनिर्मुच्यते एवं हवै स पाप्मना विनिर्मुक्तस्ससामभिरुन्नीयते ह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" इति। अत्र यायतीक्षतिशब्दावेकविषयौ, ध्यानफलत्वादीक्षणस्य ; [1]"यथाक्रतुरस्मिँल्लोके पुरुषः" इति न्यायेन ध्यानविषयस्यैव प्राप्यत्वात्, [2]"परं पुरुषम्" इत्युभयत्र कर्मभूतस्यार्थस्य प्रत्यभिज्ञानाच्च ॥

तत्र संशय्यते–किमिह "परं पुरुषम्"इति निर्दिष्टो जीवसमष्टिरूोऽण्डाधिपतिश्चतुर्मुखः,उत सर्वेश्वरः पुरुषोत्तमः–इति। किं युक्तम्? सष्टिक्षेत्रज्ञ इति। कुतः? [2]"स यो ह वैतद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारभिध्यायीत कतमं वाव स तेन लोकं जयति" इति प्रक्रम्यैकमात्रं प्रणमुपासीनस्य मनुष्यलोकप्राप्तिमभिधाय, द्विमात्रमुपासीनस्य अन्तरिक्षलोकप्राप्तिमभिधाय, त्रिमात्रमुपासीनस्य प्राप्यतयाऽभिधीयमानो ह्मलोकोऽन्तरिक्षात्परो जीवसमष्टिरूपस्य चतुर्मुखस्य लोक इति वियते ; तद्गतेन चेक्ष्यमाणस्तल्लोकाधिपतिश्चतुर्मुख एव । [2]"एतस्माजीवघनात्परात्परम्" इतिच देहेन्द्रियादिभ्यः परादेहेन्द्रियादिभिसह घनीभूताज्जीवव्यष्टिपुरुषाद्ब्रह्मलोकवासिनस्समष्टिपुरुषस्य चतुखस्य परत्वेनोपपद्यते । अतोऽत्र निर्दिश्यमानः परः पुरुषस्समष्टिपुरुषश्चतुर्मुख एव। एवं चतुर्मुखत्वे निश्चिते अजरत्वादयो यथा थश्चिन्नेतव्याः ॥

(सिद्धान्तः)

इति प्राप्ते प्रचक्ष्महे–ईक्षतिकर्मव्यपदेशात्सः–ईक्षतिकर्म सः–परमा। कुतः?व्यपदेशात्–व्यपदिश्यते हीक्षतिकर्म परमात्मत्वेन। तथाहि–ईक्षकर्मविषयतयोदाहृते श्लोके[3]"तमोङ्कारेणैवायनेनान्वेति विद्वान्यत्तच्छामजरममृतमभयं परंच" इति। परं शान्तमजरमभयममृतमिति हि पर-

१. छा. ३-१४-१ ॥
२. प्रश्न. ५-१ ॥
३. प्रश्न. ५-७ ॥

मात्मन एवैतद्रूपम्, [१]"एतदमृतमेतदभयमेतद्ब्रह्म" इत्येवमादिश्रुतिभ्यः। [२]"एतस्माज्जीवघनात्परात्परम्" इति च परमात्मन एव व्यपदेशः ; न चतुर्मुखस्य, तस्यापि जीवघनशब्दगृहीतत्वात् । यस्य हि कर्मनिमित्तं देहित्वं स जीवघन इत्युच्यते; चतुर्मुखस्यापि तच्छ्रूयते [३]"यो ब्रह्माणं विदधाति पूर्वम्" इत्यादौ । यत्पुनरुक्तमन्तरिक्षलोकस्योपरिनिर्दिश्यमानो ब्रह्मलोकश्चतुर्मुखलोक इति प्रतीयते, अतस्तत्रस्थश्चतुर्मुख इति ; तदयुक्तम्[४]"यत्तच्छान्तमजरममृतमभयम्"इत्यादिनेक्षतिकर्मणः परमात्मत्वे निश्चिते सति ईक्षितुः स्थानतया निर्दिष्टो ब्रह्मलोको न क्षयिष्णुश्चतुर्मुखलोको भवितुमर्हति।किञ्च [५]"यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तस्ससामभिरुन्नीयते ब्रह्मलोकम्" इति सर्वपापविनिर्मुक्तस्य प्राप्यतयोच्यमानं न चतुर्मुखस्थानम् । अत एव चोदाहरणश्लोके इममेव ब्रह्मलोकमधिकृत्य श्रूयते[६]"यत्तत्कवयो वेदयन्ते"इति। कवयः—सूरयः । सूरिभिर्दृश्यं च वैष्णवं पदमेव, [७]"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः"इत्येवमादिभ्यः । न चान्तरिक्षात्परश्चतुर्मुखलोकः, मध्ये स्वर्गलोकादीनां बहूनां सद्भावात् । अतः [६]"एतद्वै सत्यकाम परं चापरं ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायनेनैकतरमन्वेति" इति प्रतिवचने यदपरं कार्यं ब्रह्म निर्दिष्टं तदैहिकामुष्मिकत्वेन द्विधा विभज्यैकमात्रं प्रणवमुपासीनानामैहिकं मनुष्यलोकावाप्तिरूपं फलमभिधाय, द्विमात्रमुपासीनानामामुष्मिकमन्तरिक्षशब्दोपलक्षितं फलं चाभिधाय, त्रिमात्रेण परब्रह्मवाचिना प्रणवेन परं पुरुषं ध्यायतां परमेव ब्रह्म प्राप्यतयोपदिशतीति सर्वं समञ्जसम् । अत ईक्षतिकर्म परमात्मा॥

इति श्रीशारीरकमीमांसाभाष्ये ईक्षतिकर्माधिकरणम् ॥ ४ ॥

---

१. छा. ४-१५-१ ॥ २. प्रश्न, ५-५ ॥
३. श्वे. ६-१८ ॥
४. प्रश्न, ५-७ ॥
५. प्रश्न. ५-२ ॥
६. सुबाल. ६-ख ॥
७. प्रश्न. ५-२ ॥

वेदान्तसारे—ईक्षतिकर्म व्यपदेशात्सः॥ १“यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत” इत्यारभ्य १“स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते” इत्यत्र ध्यायतिपूर्वकेक्षतिकर्म सः प्रशासिता परमात्मा इत्यर्थः, उत्तरत्र २“तमोङ्कारेणैवायनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परञ्च”इति परमपुरुषासाधारणधर्मव्यपदेशात्; २“यत्तत्कवयो वेदयन्ते” इति तदीयस्थानस्य सूरिभिर्दृश्यत्वव्यपदेशाच्च ॥ १२ ॥

इति वेदान्तसारे ईक्षतिकर्माधिकरणम् ॥ ४ ॥

---

वेदान्तदीपे—ईक्षतिकर्म व्यपदेशात्सः ॥ आथर्वणिकानां सत्यकामप्रश्ने १“ यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत ” इत्यारभ्य, १“ ससामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते ” इत्यत्र, ध्यायतीक्षतिकर्मतया व्यपदिष्टः परः पुरुषः किं हिरण्यगर्भः ? उत परब्रह्मभूतः पुरुषोत्तम इति संशयः । हिरण्यगर्भ इति पूर्वः पक्षः । पूर्वत्रैकमात्रं प्रणवमुपासीनस्य मनुष्यलोकप्राप्तिं फलम्, द्विमात्रमुपासीनस्यान्तरिक्षलोकप्राप्तिश्च फलमभिधाय, अनन्तरं १“यः पुनरेतं त्रिमात्रेण” इति त्रिमात्रं प्रणवमुपासीनस्य फलत्वेनोच्यमानब्रह्मलोकस्थपुरुषक्षेणकर्मभूतश्चतुर्मुख एवेति विज्ञायते, मनुष्यलोकान्तरिक्षलोकसाहचर्याद्ब्रह्मलोकोऽपि क्षेत्रज्ञलोक इति निश्चयात् । राद्धान्तस्तु—१“परात्परं पुरिशयं पुरुषमीक्षते” इतीक्षतिकर्मतया निर्दिष्टपुरुषविषये श्लोके २“ तमोङ्कारेणैवायनेनान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परञ्च” इति निरुपाधिकशान्तत्वामृतत्वादिव्यपदेशात्परमात्मैवायमिति निश्चीयते।एवं परमात्मत्वे निश्चिते ब्रह्मलोकशब्दश्च तत्स्थानमेवाभिदधातीत्यवगम्यते। तद्विषयतयोदाहृते च श्लोके २“यत्तत्कवयो वेदयन्ते”(३ “तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः”)इत्येवमादिभिः सूरिभिर्दृश्यत्ववचनं तदेव द्रढयति । सूत्रार्थस्तु—ईक्षतिकर्म सः—परमात्मा, ध्यायतीक्षत्योरेकविषयत्वेन ध्यायतिकर्मापि स एवेत्यर्थः; व्यपदेशात्—तद्विषयतया २“शान्तमजरममृतमभयं परञ्च” इति परमात्मधर्माणां व्यपदेशात् ॥

इति वेदान्तदीपे ईक्षतिकर्माधिकरणम् ॥ ४ ॥

---

१. प्रश्न. ५-५ ॥ २. प्रश्न. ५-७ ॥ | ३. सुबाल. ६-ख ॥

# दहर उत्तरेभ्यः ।१।३।१३॥

इदमामनन्ति च्छन्दोगाः[1]"अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" इति । तत्र सन्देहः—किमसौ हृदयपुण्डरीकमध्यवर्ती दहराकाशो महाभूतविशेषः, उत प्रत्यगात्मा, अथ परमात्मा—इति । किं तावद्युक्तम्? महाभूतविशेष इति। कुतः?आकाशशब्दस्य भूताकाशे ब्रह्मणि च प्रसिद्धत्वेऽपि भूताकाशे प्रसिद्धिप्रकर्षात्, [1]"तस्मिन्यदन्तस्तदन्वेष्टव्यम्" इत्यन्वेष्टव्यान्तरस्याधारतया प्रतीतेश्च ॥

( सिद्धान्तः )

इत्येवं प्राप्तेऽभिधीयते—दहर उत्तरेभ्यः—दहराकाशः परं ब्रह्म; कुतः? उत्तरेभ्यो वाक्यगतेभ्यो हेतुभ्यः । [2]"एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" इति निरुपाधिकात्मत्वमपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसङ्कल्पत्वं चेति दहराकाशे श्रूयमाणा गुणाः दहराकाशं परं ब्रह्मेति ज्ञापयन्ति । [3]"अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति" इत्यादिना [4]"यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते" इत्यन्तेन दहराकाशवेदिनस्सत्यसङ्कल्पत्वप्राप्तिश्चोच्यमाना दहराकाशं परं ब्रह्मेत्यवगमयति। [5]"यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इत्युपमानोपमेयभावश्च दहराकाशस्य भूताकाशत्वे नोपपद्यते । हृदयावच्छेदनिबन्धन उपमानोपमेयभाव इति चेत्,—तथा सति हृदयावच्छिन्नस्य द्यावापृथिव्यादिसर्वाश्रयत्वं नोपपद्यते ॥

---

१. छा. ८-१-१ ॥ २. छा. ८-१-५ ॥ ३. छा. ८-१-६ ॥ ४. छा. ८-२-१० ॥ ५. छा. ८-१-३ ॥

ननुच दहराकाशस्य परमात्मत्वेऽपि बाह्याकाशोपमेयत्वं न सम्भवति [१]"ज्यायान्पृथिव्या ज्यायानन्तरिक्षात्" इत्यादौ सर्वस्माज्ज्यायस्त्वश्रवणात्–नैवम्, दहराकाशस्य हृदयपुण्डरीकमध्यवर्तित्वप्राप्ताल्पत्वनिवृत्तिपरत्वादस्य वाक्यस्य; यथा अधिकजवेऽपि सवितरि 'इषुवद्गच्छति सविता' इति वचनं गतिमान्द्यनिवृत्तिपरम्। अथ स्यात्–[२]"एष आत्माऽपहतपाप्मा" इत्यादिना दहराकाशो न निर्दिश्यते [३]"दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्" इति दहराकाशान्तर्वर्तिनस्ततोऽन्यस्यान्वेष्टव्यत्वेन प्रकृतत्वादिह [२]"एष आत्माऽपहतपाप्मा" इति तस्यैवान्वेष्टव्यस्य निर्देष्टुं युक्तत्वात्; स्यादेतदेवम्, यदि श्रुतिरेव दहराकाशं तदन्तर्वर्तिनं च न व्यभाङ्क्ष्यत्; व्यभाङ्क्षीत्तु सा; तथाहि [३]"अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्" इति ब्रह्मपुरशब्देनोपास्यतया सन्निहितपरब्रह्मणः पुरत्वेनोपासकशरीरं निर्दिश्य तन्मध्यवर्ति च तदवयवभूतं पुण्डरीकाकारमल्पपरिमाणं हृदयं परस्य ब्रह्मणो वेश्मतयाऽभिधाय सर्वज्ञं सर्वशक्तिमाश्रितवात्सल्यैकजलधिमुपासकानुग्रहाय तस्मिन् वेश्मनि सन्निहितं सूक्ष्मतया ध्येयं दहराकाशशब्देन निर्दिश्य तदन्तर्वर्तिचापहतपाप्मत्वादिस्वभावतोनिरस्तनिखिलहेयत्वसत्यकामत्वादिस्वाभाविकानवधिकातिशयकल्याणगुणजातंच ध्येयं [३]"तदन्वेष्टव्यम्"इत्युपदिश्यते। अत्र [३]"तदन्वेष्टव्यम्" इति तच्छब्देन दहराकाशम्, तदन्तर्वर्तिगुणजातं च परामृश्य तदुभयमन्वेष्टव्यमित्युपदिश्यते; [३]"यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म" इत्यनूद्य तस्मिन् दहरपुण्डरीकवेश्मनि यो दहराकाशः, यच्च तदन्तर्वर्तिगुणजातम्, तदुभयमन्वेष्टव्यमिति विधीयत इत्यर्थः। दहराकाशशब्दनिर्दिष्टस्य परब्रह्मत्वं [३]"तस्मिन्यदन्तः"इति निर्दि-

---

१. छा. ३-१४-३ ॥
२. छा. ८-१-५ ॥
३. छा. ८-१-१ ॥

ष्टस्यच तद्गुणत्वम्, तच्छब्देनोभयं परामृश्योभयस्याप्यन्वेष्टव्यतया विधानं च कथमवगम्यत इति चेत्—तदवहितमनाश्शृणु—[1]"यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इति दहराकाशस्यातिमहत्त्वामभिधाय[1]"उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि" इति प्रकृतमेव दहराकाशमस्मिन्निति निर्दिश्य तस्य सर्वजगदाधारत्वमभिधाय [1]"यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्त्समाहितम्" इति पुनरप्यस्मिन्निति तमेव दहराकाशं परामृश्य तस्मिन्नस्योपासकस्येहलोके यद्भोग्यजातमस्ति, यच्च मनोरथमात्रगोचरमिह नास्ति, सर्वं तद्भोग्यजातमस्मिन्दहराकाशे समाहितमिति निरतिशयभोग्यत्वं दहराकाशस्याभिधाय तस्य दहराकाशस्य देहावयवभूतहृदयान्तर्वर्तित्वेऽपि देहस्य जराप्रध्वंसादौ सत्यपि परमकारणतयाऽतिसूक्ष्मत्वेन निर्विकारत्वमुक्त्वा तत एव [2]"एतत्सत्यं ब्रह्मपुरम्" इति तमेव दहराकाशं सत्यभूतं ब्रह्माख्यं पुरं निखिलजगदावासभूतमित्युपपाद्य [2]"अस्मिन्कामास्समाहिताः" इति दहराकाशमस्मिन्निति निर्दिश्य काम्यभूतांश्च गुणान्कामा इति निर्दिश्य तेषां दहराकाशान्तर्वर्तित्वमुक्त्वा तदेव दहराकाशस्य काम्यभूतकल्याणगुणविशिष्टत्वं तस्याऽऽत्मत्वंच[2]"एष आत्माऽपहतपाप्मा" इत्यादिना [2]"सत्यसङ्कल्पः" इत्यन्तेन स्फुटीकृत्य[2]"यथा ह्येवेह प्रजा अन्वाविशन्ति" इत्यारभ्य [3]"तेषां सर्वेषु लोकेष्वकामचारो भवति"इत्यन्तेन तदिदं गुणाष्टकं तद्विशिष्टं दहराकाशशब्दनिर्दिष्टमात्मानं चाविदुषामेतद्व्यतिरिक्तभोग्यसिद्धयेच कर्म कुर्वतामन्तवत्फलावाप्तिमसत्यसङ्कल्पत्वं चाभिधाय [3]"अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति"इत्यादिना दहराकाशशब्दनिर्दिष्टमात्मानं तदन्तर्वर्तिनश्च काम्यभूतानपहतपाप्मत्वादिका-

१. छा. ८-१-३ ॥
२. छा. ८-१-५ ॥
३. छा. ८-१-६ ॥

न्गुणान्विजानतामुदारगुणसागरस्य तस्य परमपुरुषस्य प्रसादादेव सर्वकामावाप्तिस्सत्यसङ्कल्पता चोच्यते। अतो दहराकाशः परं ब्रह्म, तदन्तर्वर्ति चापहतपाप्मत्वादि काम्यगुणजातम्, तदुभयमन्वेष्टव्यं विजिज्ञासितव्यमितिचोच्यत इति निश्चीयते। तदेतद्वाक्यकारोऽपि स्पष्टयति[1] "तस्मिन्यदन्तरिति कामव्यपदेशः" इत्यादिना। अत एतेभ्यो हेतुभ्यो दहराकाशः परमेव ब्रह्म ॥ १३ ॥

## गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ।१।३।१४॥

इतश्च दहराकाशः परं ब्रह्म [2]"तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमास्सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः" इति एतमिति प्रकृतं दहराकाशं निर्दिश्य तत्राहरहस्सर्वेषां क्षेत्रज्ञानां गमनम्, गन्तव्यस्य तस्य दहराकाशस्य ब्रह्मलोकशब्दनिर्देशश्च दहराकाशस्य परब्रह्मतां गमयतः। कथमनयोरस्य परब्रह्मत्वसाधकत्वमित्यत आह—तथाहि दृष्टम्—इति। परस्मिन्ब्रह्मणि सर्वेषां क्षेत्रज्ञानामहरहस्सुषुप्तिकाले गमनमन्यत्राभिधीयमानं दृष्टम्—[3]"एवमेव खलु सोम्येमास्सर्वाः प्रजास्सति सम्पद्य न विदुस्सति सम्पत्स्यामहे इति" इति [4]"सत आगम्य न विदुस्सत आगच्छामह इति" इति च। तथा ब्रह्मलोकशब्दश्च परस्मिन्ब्रह्मणि दृष्टः [5]"एष ब्रह्मलोकः सम्राडितिहोवाच" इति। मा भूदन्यत्र ब्रह्मणि गमनदर्शनम्; एतदेव तु दहराकाशे सर्वेषां क्षेत्रज्ञानां प्रलयकाल इव निरस्तनिखिलदुःखानां सुषुप्तिकालेऽवस्थानं श्रूयमाणमस्य परब्रह्मत्वे पर्याप्तं लिङ्गम्; तथा ब्रह्मलोकशब्दश्च समानाधिकरणवृत्त्याऽस्मिन्दहाराकाशे प्रयुज्य-

१. वाक्यकारः ॥
२. छा. ८-३-२ ॥
३. छा. ६-९-२ ॥
४. छा. ६-१०-२॥
५. बृ. ६-३-३३ ॥

मानोऽस्य ब्रह्मत्वे प्रयोगान्तरनिरपेक्षं पर्याप्तं लिङ्गमित्याह–लिङ्गं च–इति। निषादस्थपतिन्यायाच्च षष्ठीसमासात्समानाधिकरणसमासो न्याय्यः ॥

अथवा [१]"अहरहर्गच्छन्त्यः" इति न सुषुप्तिविषयं गमनमुच्यते; अपित्वन्तरात्मत्वेन सर्वदा वर्तमानस्य दहराकाशस्य परमपुरुषार्थभूतस्योपर्युपर्यहरहर्गच्छन्त्यः सर्वस्मिन्काले वर्तमानाः तमजानन्त्यस्तं न विन्दन्ति–न लभन्ते; यथा हिरण्यनिधिं निहितं तत्स्थानमजानानास्तदुपरि सर्वदा वर्तमाना अपि न लभन्ते, तद्वदित्यर्थः। सेयमेवमन्तरात्मत्वेन स्थितस्य दहराकाशस्योपरि तन्नियमितानां सर्वासां प्रजानामजानतीनां सर्वदा गतिरस्य दहराकाशस्य परब्रह्मतां गमयति। तथाह्यन्यत्र परस्य ब्रह्मणोऽन्तरात्मतयाऽवस्थितस्य स्वनियाम्याभिस्स्वस्मिन्वर्तमानाभिः प्रजाभिरवेदनं दृष्टम्। यथा अन्तर्यामिब्राह्मणे[२]"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽत्मा शरीरं य आत्मानमन्तरो यमयति"इति,[३]"अदृष्टो द्रष्टा अश्रुतश्श्रोता"इति च।मा भूदन्यत्र दर्शनम्; स्वयमेव त्वियं निधिदृष्टान्तावगतपरमपुरुषार्थभावस्यास्य हृदयस्थस्योपरि तदाधारतयाऽहरहस्सर्वदा सर्वासां प्रजानामजानातीनां गतिरस्य परब्रह्मत्वे पर्याप्तं लिङ्गम् ॥ १४ ॥

इतश्च दहराकाशः परं ब्रह्म—

## धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ।१।३।१५॥

[४]"अथ य आत्मा"इति प्रकृतं दहराकाशं निर्दिश्य[४]"स सेतुर्विधृतिरेषां लोकानामसम्भेदाय" इत्यस्मिञ्जगद्विधरणं श्रूयमाणं दहराकाशस्य परब्रह्मतां गमयति; जगद्विधरणं हि परस्य ब्रह्मणो महिमा [५]"एष सर्वेश्वर एष सर्वभूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोका-

१. छा. ८-३-२ ॥
२. बृ. ५-७-२२ मा. पा ॥
३. बृ. ५-७-२३ ॥
४. छा. ८-४-१ ॥ ५. बृ. ६-४-२२ ॥

नामसम्भेदाय" इति, [1]"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिभ्यः । स चायं तस्य परस्य ब्रह्मणो धृत्याख्यो महिमाऽस्मिन्दहराकाश उपलभ्यते ; अतो दहराकाशः परं ब्रह्म ॥ १५ ॥

## प्रसिद्धेश्च । १ । ३ । १६ ॥

आकाशशब्दश्च परस्मिन्ब्रह्मणि प्रसिद्धः [2]"को ह्येवाऽन्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्" [3]"सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते"इत्यादिषु ; अपहतपाप्मत्वादिगुणसनाथा प्रसिद्धिर्भूताकाशप्रसिद्धेर्बलीयसीत्यभिप्रायः ॥ १६ ॥

एवं तावद्दहराकाशस्य भूताकाशत्वं प्रतिक्षिप्तम् । अथेदानीं दहराकाशस्य प्रत्यगात्मत्वमाशङ्क्य निराकर्तुमुपक्रमते—

## इतरपरामर्शात्स इतिचेन्नासम्भवात् । १ । ३ । १७ ॥

यदुक्तं वाक्यशेषवशाद्दहराकाशः परं ब्रह्मेति, तदयुक्तम् ,वाक्यशेषे परस्मादितरस्य जीवस्यैव साक्षात्परामर्शात् [4]"अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेतिहोवाच एतदमृतमभयमेतद्ब्रह्म"इति । यद्यपि [5]"दहरोऽस्मिन्नन्तर आकाशः" इति हृदयपुण्डरीकमध्यवर्तितयोपदिष्टस्याकाशस्योपमानोपमेयभावाद्यसम्भवाद्भूताकाशत्वं न सम्भवति, तथापि वाक्यशेषवशात्प्रत्यगात्मत्वं युक्तमाश्रयितुम् । आकाशशब्दोऽपि प्रकाशादियोगाज्जीव एव वर्तिष्यत इति चेत्—अत्रोत्तरं—नासम्भवात्—इति। नायं जीवः; नह्यपहतपाप्मत्वादयो गुणा जीवे सम्भवन्ति ॥ १७ ॥

---

१. बृ. ५-८-९ ॥
२. तै. आन. ७ ॥ ३. छा. १-९-१ ॥
४. छा. ८-३-४ ॥
५. छा. ८-१-१॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ।१।३।१८॥

उत्तरात्-प्रजापतिवाक्यात्, जीवस्यैवापहतपाप्मत्वादिगुणयोगो निश्चीयत इति चेत्-एतदुक्तं भवति-प्रजापतिवाक्यं जीवपरमेव, तथाहि [१]"य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पस्सोऽन्वेष्टव्यस्स विजिज्ञासितव्यस्स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति"इति प्रजापतिवचनमैतिह्यरूपेणोपश्रुत्यान्वेष्टव्यात्मस्वरूपजिज्ञासया प्रजापतिमुपसेदुषे मघवते प्रजापतिर्जागरितस्वप्नसुषुप्त्यवस्थं जीवात्मानं सशरीरं क्रमेण शुश्रूषुयोग्यतापरीचिक्षिषयोपदिश्य तत्रतत्र भोग्यमपश्यते परिशुद्धात्मस्वरूपोपदेशयोग्याय तस्मै मघवते [२]"मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानम्" इति शरीरस्याधिष्ठानतामात्मनश्चाधिष्ठातृतामशरीरस्य च तस्यामृतत्वस्वरूपतां चोक्त्वा [२]"न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः"इति कर्मारब्धशरीरयोगिनस्तदनुगुणसुखदुःखभागित्वरूपानर्थं तद्विमोक्षेच तदभावमभिधाय[३]"एवमेवैष सम्प्रासादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति जीवात्मनस्स्वरूपमेव शरीरवियुक्तमुपदिदेश । [४]"स उत्तमः पुरुषः स तत्र पर्येति जक्षत्क्रीडन्नममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरम्" इति प्राप्यस्य परस्य ज्योतिषः पुरुषोत्तमत्वम्, निवृत्ततिरोधानस्य परं ज्योतिरुपसम्पन्नस्य प्रत्यगात्मनो ब्रह्मलोके यथेष्टभोगावाप्तिम्, प्रियाप्रियाविवियुक्तकर्मनिमित्तशरीराद्यपुरुषार्थाननुसन्धानं चाभिधाय[४]"स यथा प्रयोग्य आचरणे युक्त एवमस्मिन् शरीरे प्राणो

---

१. छा. ८-७-१ ॥
२. छा. ८-१२-१॥
३. छा. ८-१२-२॥
४. छा. ८-१२-३॥

चक्षुषी चन्द्रसूर्यौ" १"द्यां मूर्धानं यस्य विप्रा वदन्ति" इति श्रुतिस्मृतिप्रसिद्धं परमपुरुषरूपमिह प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वे लिङ्गं स्यादित्यर्थः ॥

# शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेतिचेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ।१।२।२७॥

अनिर्णयमाशङ्क्य परिहरति—शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च—इति। शब्दस्तावत् वाजिनां वैश्वानरविद्याप्रकरणे २"स एषोऽग्निर्वैश्वानरः" इति वैश्वानरसमानाधिकरणोऽग्निशब्दः । अस्मिन् प्रकरणे च ३"हृदयं गार्हपत्यः"इत्यारभ्य वैश्वानरस्य हृदयादिस्थानस्याग्नित्रयपरिकल्पनं प्राणाहुत्याधारत्वञ्चेत्यादि प्रतीयते । वाजिनामपि ४"स यो हवैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद" इति वैश्वानरस्य शरीरान्तःप्रतिष्ठितत्वं प्रतीयते । अतः एतैर्लिङ्गैर्वैश्वानरस्य जाठराग्नित्वप्रतीते र्नायं परमात्मेति शक्यनिर्णय इति चेत्—तन्न; तथा दृष्ट्युपदेशात् , दृष्टिः - उपासनम् , तथोपासनोपदेशादित्यर्थः; जाठराग्निशरीरतया वैश्वानरस्य परमात्मन उपासनं ह्यत्रोपदिश्यते—५"अयमग्निर्वैश्वानरः पुरुषेऽन्तः प्रतिष्ठितः" इत्यादौ । कथमवगम्यत इति चेत्—असम्भवात् ; केवलजाठराग्नेस्त्रैलोक्यशरीरत्वाद्यसम्भवात् । पुरुषमपि चैनमधीयते; च शब्दः प्रसिद्धौ , वाजिनस्तत्रैव ६"स एषोऽग्निर्वैश्वानरो यत्पुरुषः" इति एनं वैश्वानरं पुरुषमपि ह्यधीयते । पुरुषश्च परमात्मैव ७"पुरुष एवेदं सर्वम्" ८"पुरुषान्न परं किञ्चित्" इत्यादिषु प्रसिद्धेः ॥ २७ ॥

# अत एव न देवता भूतञ्च ।१।२।२८॥

यतस्त्रैलोक्यशरीरोऽसौ वैश्वानरः, यतश्च निरुपाधिकपुरुषशब्दनिर्दिष्टः ; अत एव नाम्नचाख्या देवता, महाभूततृतीयश्च वैश्वानरश्शङ्कनीयः ॥२८॥

# साक्षादप्याविरोधं जैमिनिः ।१।२।२९॥

अग्निशरीरतया वैश्वानरस्योपासनार्थमग्निशब्दसामानाधिकरण्यनिर्देश इत्युक्तम् । विश्वेषां नराणां नेतृत्वादिना सम्बन्धेन यथा वैश्वानरशब्दः परमात्मनि वर्तते, तथैवाग्निशब्दस्यापि अग्रनयनादिना योगेन साक्षात्परमात्मनि वृत्तौ न कश्चिद्विरोध इति जैमिनिराचार्यो मन्यते ॥ २९ ॥

---

१॥ २॥ ३. छा. ५-१८-२॥ ४॥ ५॥ ६॥ ७. पुरुषसू. २॥ ८. कठो. ३. ११ ॥

## अभिव्यक्तेरित्याश्मरथ्यः । १ । २ । ३० ॥

१"यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरम्" इति द्युप्रभृतिपृथिव्यन्तप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वमनवच्छिन्नस्य परमात्मनो वैश्वानरस्य कथमुपपद्यत इत्यत्राह—अनवच्छिन्नस्यैव परमात्मनः उपासनाभिव्यक्त्यर्थं द्युप्रभृतिपृथिव्यन्तप्रदेशपरिच्छिन्नत्वमिति आश्मरथ्य आचार्यो मन्यते ॥

## अनुस्मृतेर्बादरिः । १ । २ । ३१ ॥

द्युप्रभृतिप्रदेशावच्छेदेनाभिव्यक्तस्य परमात्मनो द्युभ्वादित्यादीनां मूर्धाद्यवयवकल्पनं किमर्थमिति चेत्—तत्राह—अनुस्मृतिः-उपासनम्, ब्रह्मप्राप्तये तथोपासनार्थं मूर्धप्रभृतिपादान्तदेहपरिकल्पनमिति बादरिराचार्यो मन्यते ॥

अयं वैश्वानरः परमात्मा त्रैलोक्यशरीर उपास्य उपदिश्यते चेत्—" तदुपस
एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः" इत्यादिना उपासकशरीरावयव कथनेन त-
र्हपत्यादिपरिकल्पनं किमर्थमित्यत्राह—

क्तस्य जीव-

## सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति।१।२ात्म्यविज्ञानं

वैश्वानरविद्याङ्गभूतायाः उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरं च ज्ञात-
त्वसम्पादनाय गार्हपत्यादिपरिकल्पनमिति जैमिनिराचार्यो मन्यते । पकल्याण-
ग्निहोत्रसम्पत्तिमेव दर्शयतीयं श्रुतिः प्राणाहुतिं विधाय,३"अथ य एवं वि रूपया-
ग्निहोत्रं जुहोति" इति । उक्तानामर्थानां पूजितत्वख्यापनायाचार्यग्रहणम् ॥ ३ ४"स

## आमनन्ति चैनमस्मिन् । १ । २ । ३३ ॥

एनं परमपुरुषं वैश्वानरं द्युभ्वादिदेहम्, अस्मिन् उपासकदेहे प्राणाग्निहोत्रेणाराध्यत्वाय आमनन्ति हि २"तस्य ह वा एतस्य वैश्वानरस्य मूर्धैव सुतेजाः" इत्यादिना । उपासकमूर्धादिपादान्ता एव द्युप्रभृतयः परमपुरुषस्य मूर्धादय इति प्राणाग्निहोत्रवेलायामनुसन्धेया इत्यर्थः ॥ ३३ ॥

इति श्रीवेदान्तदीपे वैश्वानराधिकरणम् ॥ ११ ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तदीपे प्रथमस्याध्यायस्य द्वितीयः पादः ॥

---

१. छा. ५. १८. १ ॥ | २. छा. ५-१८-२ ॥ ३. छा. ५-२४-२ ॥

युक्तः" इति यथोक्तस्वरूपस्यैव संसारदशायां कर्मतन्त्वं शरीरयोगं युग्यशकटयोगदृष्टान्तेनाभिधाय [1]"अथ यत्रैतदाकाशमनुविषण्णं चक्षुस्स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वागथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रम् । अथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः" इति चक्षुरादीनां करणत्वं रूपादीनां ज्ञेयत्वमस्य च ज्ञातृत्वं प्रदर्श्य तत एव शरीरेन्द्रियेभ्योऽस्य व्यतिरेकमुपपाद्य [2]"स वा एष एतेन दिव्येन चक्षुषा मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके" इति तस्यैव विधूतकर्मनिमित्तशरीरेन्द्रियस्य ...ाभिहितेन दिव्येन स्वाभाविकेन ज्ञानेन सर्वकामानुभवमुक्त्वा ...तं देवा आत्मानमुपासते तस्मात्तेषां सर्वे च लोका आप्तास्सर्वे ... इत्येवंविधमात्मानं ज्ञानिनो जानन्तीत्यभिधाय [3]"सर्वांश्च ... सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्र... च" इत्येवंविधमात्मानं विदुषस्सर्वलोकसर्वकामावाप्त्युपल...ानुभवं फलमभिधायोपसंहृतम् । अतस्तत्रापहतपाप्मत्वादिगु...तव्यतया प्रक्रान्तो जीव एवेत्यवगतम् । अतो जीवस्यापहतपा... संशयस्सम्भवन्ति । अतो दहरवाक्यशेषे श्रूयमाणस्य जीवस्यापहत...त्वादिगुणसम्भवात्स एव दहराकाश इति निश्चीयते—इति चेत् —इति ॥

(सिद्धान्तः)

तत्राह—आविर्भूतस्वरूपस्तु—इति । पूर्वमनृततिरोहितापहतपाप्मत्वादिगुणकस्वरूपः पश्चाद्विमुक्तकर्मबन्धश्शरीरात्समुत्थितः परं ज्योतिरुपसम्पन्न आविर्भूतस्वरूपस्सन्नपहतपाप्मत्वादिगुणविशिष्टस्तत्र प्रजापतिवाक्येऽभिधीयते ; दहरवाक्ये त्वतिरोहितस्वभावापहतपाप्मत्वादिवि-

१. छा. ८-१२-४,५ ॥ | २. छा. ८-१२-६ ॥

२८० शिष्ट एव दहराकाशः प्रतीयते । आविर्भूतस्वरूपस्यापि जीवस्यासम्भावनीयास्सेतुत्वसर्वलोकविधरणत्वादयस्सत्यशब्दनिर्वचनावगतं चेतनाचेतनयोर्नियन्तृत्वं दहराकाशस्य परब्रह्मतां साधयन्ति । सेतुत्वसर्वलोकविधरणत्वादय आविर्भूतस्वरूपस्यापि न सम्भवन्तीति [१]"जगद्व्यापारवर्जम्" इत्यत्रोपपादयिष्यामः ॥ १८ ॥

यद्येवम्, दहरवाक्ये [२]"अथ य एष सम्प्रसादः"इत्यादिना जीवप्रस्तावः किमर्थः— इति चेत्—तत्राह—

## अन्यार्थश्च परामर्शः । १ । ३ । १९ ॥

दहराकाशस्यैवापहतपाप्मत्वजगद्विधरणत्वादिवन्मुक्तस्य [illegible] दुपसम्पत्त्याऽपहतपाप्मत्वादिकल्याणगुणविशिष्टस्वाभाविकरूपप्राप्ति[illegible]नेन तद्धेतुत्वरूपं परमपुरुषासाधारणं गुणमुपदेष्टुं प्रजापतिवाक्यो[illegible]य जीवस्यात्र परामर्शः; प्रजापतिवाक्ये च मुक्तात्मस्वरूप[illegible] दहरविद्योपयोगितयोक्तम्; ब्रह्मप्रेप्सोर्हि जी[illegible]थ[illegible]त्म्यविज्ञानं [illegible]व्यमेव; स्वयमपि कल्याणगुण एव सन्न[illegible]त्मनस्स्वस्वरू[illegible]तरं च ज्ञात[illegible] [illegible]णं [illegible] [illegible]कल्पना[illegible] [illegible]धिकातिशयासंख्येय[illegible]तकल्याण-[illegible]ग्निहोत्रसम्पत्तिमेव दर्शय[illegible] [illegible]ः प्राणाह[illegible] गुण[illegible] पर ब्रह्मानुभविष्यतीति ब्रह्मोपासनफलान्तर्गतत्वात्स्व[illegible]रूपयाथात्म्यविज्ञानस्य । [३]" सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्" [४]"स तत्र पर्येति जक्षत्क्रीडन्" इत्यादिकं प्रजापतिवाक्ये कीर्त्यमानं फलमपि दहरविद्याफलमेव ॥ १९ ॥

## अल्पश्रुतेरितिचेत्तदुक्तम् । १ । ३ । २० ॥

[५]"दहरोऽस्मिन्" इत्यल्पपरिमाणश्रुतिराराग्रोपमितस्य जीवस्यैवोपपद्यते, न तु सर्वस्माज्ज्यायसो ब्रह्मण इति चेत्—तत्र यदुत्तरं वक्त-

१. शारी. ४-४-१७ ॥
२. छा. ८-३-४ ॥
३. छा. ८-१२-६ ॥
४. छा. ८-१२-३ ॥ ५. छा. ८-१-१ ॥

न्, तत्पूर्वमेवोक्तं [1]"निचाय्यत्वादेवम्" इत्यनेन। अतो दहराकाऽनाघ्राताविद्याद्यशेषदोषगन्धः स्वाभाविकनिरतिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यपरिमितोदारगुणसागरः पुरुषोत्तम एव। प्रजापतिवाक्यनिर्दिष्टस्तु [2]"घ्नन्ति त्वेवैनं विच्छादयन्ति"इत्येवमादिभिरवगतकर्मनिमित्तदेहपरिग्रहः पश्चात्परञ्ज्योतिरुपसम्पद्याऽऽविर्भूतापहतपाप्मत्वादिगुणस्वस्वरूप इति न दहराकाशः ॥ २० ॥

इतश्चैतदेवम्—

## अनुकृतेस्तस्य च ।१।३।२१॥

तस्य—दहराकाशस्य परस्य ब्रह्मणः, अनुकारात्—अयमपहतपाप्मत्वादिगुणको विमुक्तबन्धः प्रत्यगात्मा न दहराकाशः। तदनुकारः—तत्साम्यम्। तथाहि प्रत्यगात्मनो विमुक्तस्य परब्रह्मानुकारश्श्रूयते[3]"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" इति। अतोऽनुकर्ता प्रजापतिवाक्यनिर्दिष्टः। अनुकार्यं ब्रह्म दहराकाशः ॥ २१ ॥

## अपि स्मर्यते । १ । ३ । २२ ॥

संसारिणोऽपि मुक्तावस्थायां परमसाम्यापत्तिलक्षणः परब्रह्मानुकारः स्मर्यते [4]"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः। सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इति ॥

केचित्—'अनुकृतेस्तस्यच''अपि स्मर्यते'इति सूत्रद्वयमधिकरणान्तरं [5]"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इत्यस्याश्श्रुतेः परब्रह्मपरत्वनिर्णयाय प्रवृत्तं वदन्ति। तत्तु—[6]"अदृश्यत्वादिगुणको धर्मो-

१. शारी. १-२-७ ॥
२. छा. ८-१०-२ ॥
३. मु. ३-१-३ ॥
४. गी. १४-२ ॥
५. मुः २-२-१० ॥
६. शारी. १-२-२२ ॥

क्तेः" १"द्युभ्वाद्यायतनं स्वशब्दात्" इत्यधिकरणद्वयेन तस्य प्रकरणस्य परब्रह्मविषयत्वप्रतिपादनात्२"ज्योतिश्चरणाभिधानात्" इत्यादिषु परस्य ब्रह्मणो भारूपत्वावगतेश्च पूर्वपक्षानुत्थानादयुक्तम्;सूत्राक्षर३वैरूप्यं च ॥

इति श्रीशारीरकमीमांसाभाष्ये दहराधिकरणम् ॥ ५ ॥

---

वेदान्तसारे—दहर उत्तरेभ्यः ॥ ४"अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्" इत्यत्र दहराकाशशब्दनिर्दिष्टः परमात्मा, उत्तरेभ्यः वाक्यगतेभ्यः तदसाधारणधर्मेभ्यः । उत्तरत्र दहराकाशस्य सर्वाधारतयाऽतिमहत्वमभिधाय, एतत्सत्यं ब्रह्माख्यं पुरमिति निर्दिश्य,तस्मिन् ब्रह्माख्ये दहराकाशे कामास्समाहिताः इत्युक्ते कोऽयं दहराकाशः?केच कामाः? इत्यपेक्षायाम्, ५"एष आत्मा अपहतपाप्मा" इत्यारभ्य ५"सत्यकामस्सत्यसङ्कल्पः" इत्यन्तेन दहराकाशः आत्मा; कामाश्च अपहतपाप्मत्वादयः तद्विशेषणभूतगुणा इति हि ज्ञापयति । ४"दहरोऽस्मिन्नन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्"इत्यत्र दहराकाशस्तदन्तर्वर्तिच यत्, तदुभयमन्वेष्टव्यमित्युक्तमिति विज्ञायते; ६"अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्" इतिहि व्यज्यते ? ॥ १३ ॥

गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गश्च॥ ७"एवमेवेमास्सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति" इत्यहरहस्सर्वासां प्रजानामजानतीनां दहराकाशोपरि गतिः - वर्तनम्, दहराकाशसमानाधिकरणो ब्रह्मलोकशब्दश्च दहराकाशः परं ब्रह्मेति ज्ञापयति । तथाह्यन्यत्र सर्वासां परमात्मोपरि वर्तमानत्वं दृष्टम् ,८"तस्मिन् लोकाश्श्रितास्सर्वे"९"तदक्षरे परमे प्रजाः"इत्यादौ। ब्रह्मलोकशब्दश्च १०"एष ब्रह्मलोकः"इत्यादौ । अन्यत्र दर्शनाभावेऽपि इदमेव पर्याप्तम् अस्य परमात्मत्वे लिङ्गम्, यद्दहराकाशोपरि सर्वस्य वर्तमानत्वम् , ब्रह्मलोकशब्दश्च ॥ १४ ॥

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ ११"अथ य आत्मा स सेतु-

---

१.शारी. १-३-१॥ २. शारी. १-१-२५॥ ३. वैरूप्याच्च. पा॥ ४. छा. ८-१-१ ॥ ५. छा. ८-१-५ ॥ ६. छा. ८-१-६ ॥ ७. छा. ८-३-२ ॥ ८, कठ. २-६-१ । ९ तै. नारायण. ६-१-३ ॥ १०. बृ. ६-३-३३॥ ११. छा. ८-४-

## ज्योतिर्दर्शनात् १ । ३ । ४१ ॥

तयोरेवाङ्गुष्ठप्रमितविषययोर्वाक्ययोर्मध्ये परब्रह्मासाधारणं सर्वतेजसां छादकं सर्वतेजसां कारणभूतमनुग्राहकं चाङ्गुष्ठप्रमितस्य ज्योतिर्दृश्यते–[१]"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति। अयमेव श्लोक आथर्वणे परं ब्रह्माधिकृत्य श्रूयते। परज्योतिष्ट्वं च सर्वत्र परस्य ब्रह्मणश्श्रूयते। यथा–[२]"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" [३]"तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्"[४]"अथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्यादिषु। अतोऽङ्गुष्ठप्रमितः परं ब्रह्म ॥४१॥

इति श्रीशारीरकमीमांसाभाष्ये प्रमिताधिकरणशेषः ॥ ६ ॥

---

वेदान्तसारे–[५]प्रासङ्गिकं परिसमाप्य प्रकृतमनुसरति–

कम्पनात् ॥ अङ्गुष्ठप्रमितप्रकरणमध्ये [६]"यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम्" इत्यादिना अभिहिताङ्गुष्ठप्रमितप्राणशब्दनिर्दिष्टजनितभयात् वज्रादिवोद्यतात् अग्निवायुसूर्येन्द्रप्रभृतिकृत्स्नजगत्कम्पनात् अङ्गुष्ठप्रमितः परमपुरुष इति निश्चीयते ॥ ४० ॥

ज्योतिर्दर्शनात् ॥ तत्प्रकरणे[१]"न तत्र सूर्यो भाति" इत्यारभ्य[१]"तस्य भासा सर्वमिदं विभाति" इति भाश्शब्दाभिहितस्य अनवधिकातिशयज्योतिषो दर्शनाच्च अङ्गुष्ठप्रमितः परमपुरुषः ॥ ४१ ॥

इति वेदान्तसारे प्रमिताधिकरणशेषः ॥ ६ ॥

---

वेदान्तदीपे–प्रासङ्गिकं परिसमाप्य प्रकृतं परिसमापयति–

---

१. कठ, २-५-१५॥
२. छा, ८-१२-२ ॥
३. बृ. ६-४-१६ ॥
४. छा. ३-१३-७॥ ५. स्थितादुत्तरं. पा॥
६. कठ. २-६-२॥

कम्पनात् ॥ अङ्गुष्ठप्रमितप्रकरणमध्ये १"यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम् । महद्भयं वज्रमुद्यतम्" २"भयादस्याग्निस्तपति" इत्यादौ प्राणशब्दनिर्दिष्टाङ्गुष्ठप्रमितजनितभयनिमित्तादग्निवायुसूर्यप्रभृतिकृत्स्नजगत्क - म्पनाच्छूयमाणादङ्गुष्ठप्रमितः परमात्मैवेति निश्चीयते ॥ ४० ॥

ज्योतिर्दर्शनात्॥ अस्मिन्नेव प्रकरणे तत्सम्बन्धितया ३"न तत्र सूर्यो भाति" इत्यारभ्य ३"तस्य भासा सर्वमिदं विभाति" इति सर्वेषां छादकस्या-नवधिकातिशयस्य भाशब्दाभिहितस्य ब्रह्मभूतस्य परस्य ज्योतिषो दर्शनाच्च अङ्गुष्ठप्रमितः परमात्मा ॥ ४१ ॥

इति वेदान्तदीपे प्रमिताधिकरणशेषः ॥ ६ ॥

---

## आकाशोऽर्थान्तरत्वादिव्यपदेशात्॥ १ । ३ । ४२॥

छान्दोग्ये श्रूयते ४" आकाशो ह वै नामरूपयोर्निर्वहिता ते यद-न्तरा तद्ब्रह्म तदमृतं स आत्मा"इति । तत्र संशयः–किमयमाकाशशब्द-निर्दिष्टो मुक्तात्मा,उत परमात्मा–इति। किं युक्तं?मुक्तात्मेति। कुतः?५"अ-श्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" इति मुक्तस्यानन्तरप्रकृतत्वात्, ४"ते यदन्तरा" इति च नामरूपविनिर्मुक्तस्य तस्याभिधानात् , ४"नामरूप-योर्निर्वहिता" इति च स एव पूर्वावस्थयोपलिलक्षयिषितः ; स एव हि देवादिरूपाणि नामानि च पूर्वमबिभः; तस्यैव नामरूपविनिर्मुक्ता साम्प्रतिक्यवस्था ४" तद्ब्रह्म तदमृतम् " इत्युच्यते । आकाशशब्दश्च त-स्मिन्नप्यसङ्कुचितप्रकाशयोगादुपपद्यते । ननु दहरवाक्यशेषत्वादस्य स एव दहराकाशोऽयमिति प्रतीयते। तस्य च परमात्मत्वं निर्णीतम् । मैवं, प्रजापतिवाक्यव्यवधानात् । प्रजापतिवाक्ये च प्रत्यगात्मनो मुक्त्यवस्थान्तं

---

१. कठ. २-६-२ ॥
२. कठ. २-६-३ ॥
३. कठ. २-५-१५॥
४. छा.८-१४-१॥ ५. छा.८-१३-१॥

रूपमभिहितम्; अनन्तरं च [१]"विधूय पापम्" इति स एव मुक्तावस्थः प्रस्तुतः। अतोऽत्राकाशो मुक्तात्मा ॥

—(सिद्धान्तः)—

इति प्राप्त उच्यते—आकाशोऽर्थान्तरत्वादिव्यपदेशात्–इति। आकाशः परं ब्रह्म; कुतः? अर्थान्तरत्वादिव्यपदेशात्। अर्थान्तरत्वव्यपदेशस्तावत् [२]"आकाशो ह वै नामरूपयोर्निर्वहिता" इति नामरूपयोर्निर्वोढृत्वं बद्धमुक्तोभयावस्थात्प्रत्यगात्मनोऽर्थान्तरत्वमाकाशस्योपपादयति। बद्धावस्थस्स्वयं कर्मवशान्नामरूपे भजमानो न नामरूपे निर्वोढुं शक्नुयात्; मुक्तावस्थस्य जगद्व्यापारासम्भवात्[३]ननितरां नामरूपनिर्वोढृत्वम्;ईश्वरस्य तु सकलजगन्निर्माणधुरन्धरस्य नामरूपयोर्निर्वोढृत्वं श्रुत्यैव प्रतिपन्नम् [४]"अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" [५]"यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" [६]"सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते" इत्यादिषु। अतो निर्वाह्यनामरूपात्प्रत्यगात्मनो नामरूपयोर्निर्वोढाऽयमाकाशोऽर्थान्तरभूतः परमेव ब्रह्म। तदेवोपपादयति [२]"ते यदन्तरा" इति। यस्मादयमाकाशो नामरूपे अन्तरा–ताभ्यामस्पृष्टोऽर्थान्तरभूतः, तस्मात्तयोर्निर्वोढा अपहतपाप्मत्वात्सत्यसङ्कल्पत्वाच्च निर्वहितेत्यर्थः। आदिशब्देन ब्रह्मत्वात्मत्वामृतत्वानि गृह्यन्ते। निरुपाधिकबृहत्त्वादयो हि परमात्मन एव सम्भवन्ति; तेनात्राकाशः परमेव ब्रह्म। यत्पुनरुक्तं [२]"धूत्वा शरीरम्" इति मुक्तोऽनन्तरप्रकृतः—इति;तन्न,[२]"ब्रह्मलोकमभिसम्भवामि"इति परस्यैव ब्रह्मणोऽनन्तरप्रकृतत्वात्। यद्यप्यभिसम्भवितुर्मुक्तस्याभिसम्भाव्यतया परं ब्रह्म निर्दिष्टम्, तथाप्यभिसम्भवितुर्मुक्तस्य नामरूपनिर्वोढृत्वा-

---

१. छा. ८-१३-१॥ | ४. छा. ६-३-२॥
२. छा. ८-१४-१॥ ३. नतरां. पा॥ | ५. मु. १-१-९॥ ६. तै. पु॥

घसम्भवादभिसम्भाव्यं परमेव ब्रह्म तत्र प्रत्येतव्यम्। किञ्च आकाशशब्देन प्रकृतस्य दहराकाशस्यात्र प्रत्यभिज्ञानात्, प्रजापतिवाक्यस्याप्युपासकस्वरूपकथनार्थत्वादुपास्य एव दहराकाशः प्राप्यतयेहोपसंह्रियत इति युक्तम्। आकाशशब्दश्च प्रत्यगात्मनि न क्वचिद्दृष्टचरः। अतोऽत्राकाशः परं ब्रह्म॥

अथ स्यात्—प्रत्यगात्मनोऽर्थान्तरभूतमात्मान्तरमेव नास्ति, ऐक्योपदेशात्, द्वैतप्रतिषेधाच्च; शुद्धावस्थ एव हि प्रत्यगात्मा परमात्मा परं ब्रह्म परमेश्वर इति च व्यपदिश्यते; अतः प्रकृतान्मुक्तात्मनोऽभिसम्भवितुर्नार्थान्तरमभिसम्भाव्यो ब्रह्मलोकः; अतो नामरूपयोर्निर्वहिता आकाशोऽपि स एव भवितुमर्हति—इति; अत उत्तरं पठति—

## सुषुप्त्युत्क्रान्त्योर्भेदेन । १ । ३ । ३४ ॥

व्यपदेशादिति वर्तते, सुषुप्त्युत्क्रान्त्योः प्रत्यगात्मनोऽर्थान्तरत्वेन परमात्मनो व्यपदेशात् प्रत्यगात्मनोऽर्थान्तरभूतः परमात्माऽस्त्येव। तथाहि—वाजसनेयके [1]"कतम [2]आत्मा योऽयं विज्ञानमयः प्राणेषु" इति प्रकृतस्य प्रत्यगात्मनस्सुषुप्त्यवस्थायामकिञ्चिज्ज्ञस्य सर्वज्ञेन परमात्मना परिष्वङ्ग आम्नायते—[3]"प्राज्ञेनाऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति; तथोत्क्रान्तावपि [4]"प्राज्ञेनाऽत्मनाऽन्वारूढ उत्सर्जन्याति" इति। न च स्वपत उत्क्रामतो वा किंञ्चिज्ज्ञस्य तदानीमेव स्वेनैव सर्वज्ञेन सता परिष्वङ्गान्वारोहौ सम्भवतः; न च क्षेत्रज्ञान्तरेण, तस्यापि सर्वज्ञत्वासम्भवात् ॥

इतश्च प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मेत्याह—

## पत्यादिशब्देभ्यः । १ । ३ । ४४ ॥

अयं परिष्वञ्जकः परमात्मा उत्तरत्र पत्यादिशब्दैर्व्यपदिश्यते—

१. बृ. ६-३-७ ॥ २. आत्मेति योऽयं पा॥ ३. बृ. ६-३-२१ ॥ ४. बृ. ६-३-३५ ॥

[१]"सर्वस्याधिपतिस्सर्वस्य वशी सर्वस्येशानः। स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्। एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय। तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति ... एतमेव विदित्वा मुनिर्भवति। एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" [२]"स वा एष महानज आत्माऽन्नादो वसुदानः" [३]"अजरोऽमृतोऽभयो ब्रह्म" इति। एते च पतित्वजगद्विधरणत्वसर्वेश्वरत्वाद्यः प्रत्यगात्मनि मुक्तावस्थेऽपि न कथञ्चित्सम्भवन्ति। अतो मुक्तात्मनोऽर्थान्तरभूतो नामरूपयोर्निर्वहिताऽऽकाशः। ऐक्योपदेशस्तु सर्वस्य चिदचिदात्मकस्य ब्रह्मकार्यत्वेन तदात्मकत्वायत्त इति [४]"सर्वं खल्विदं ब्रह्म तज्जलान्" इत्यादिभिर्वाक्यैः प्रतिपाद्यत इति पूर्वमेव समर्थितम्। द्वैतप्रतिषेधश्च तत एवेत्यनवद्यम्॥ ४२॥

इति श्रीशारीरकमीमांसाभाष्ये अर्थान्तरत्वादिव्यपदेशाधिकरणम्॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
प्रथमस्याध्यायस्य तृतीयः पादः॥ ३॥

---

वेदान्तसारे—अकाशोऽर्थान्तरत्वादिव्यपदेशात्॥ [५]"आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म" इत्यादिना निर्दिष्ट आकाशः, [६]"धूत्वा शरीरमकृतं कृतात्मा" इति प्रकृतात्प्रत्यगात्मनः परिशुद्धादर्थान्तरभूतः परमपुरुषः, नामरूपयोः निर्वोढृत्वतदस्पर्शरूपार्थान्तरत्वामृतत्वादिव्यपदेशात्॥ ४२॥

तत्त्वमस्यादिनैक्योपदेशात् प्रत्यगात्मनो नार्थान्तरभूतः परमपुरुष इत्याशङ्क्याह—

सुषुप्त्युत्क्रान्त्योर्भेदेन॥ [७]"प्राज्ञेनाऽत्मना सम्परिष्वक्तो न बाह्यं कि-

---

१. बृ. ६-४-२२॥ सर्वस्यवशीसर्वस्येशानस्सर्वस्याधिपतिः. पा॥ २. बृ. ६-४-२४॥ ३. बृ. ६-४-२५॥ अजरामरोमृतोभयो ब्रह्म इति मुद्रितकोशे दृश्यते॥ ४. छा. ३-१४-१॥ ५. छा. ८-१४-१॥ ६. छा. ८-१३-१॥ ७. बृ. ६-३-२१-

ञ्चन वेद नान्तरम्" १"प्राज्ञेनाऽऽत्मनाऽन्वारूढः" इति सुषुप्त्युत्क्रान्त्योः बाह्याभ्यन्तरविषयानभिज्ञात्प्रत्यगात्मनः तदानीमेव प्राज्ञतया भेदेन व्यपदेशादर्थान्तरभूत एव ॥ ४३ ॥

पत्यादिशब्देभ्यः ॥ परिष्वञ्जके प्राज्ञे श्रूयमाणेभ्यः पत्यादिशब्देभ्यश्चायमर्थान्तरभूतः; २"सर्वस्याधिपतिः सर्वस्य वशी सर्वस्येशानः" इति उत्तरत्र श्रूयते; पैक्योपदेशोऽपि ३"अवस्थितेरिति काशकृत्स्नः" इत्यनेन जीवस्य शरीरभूतस्याऽऽत्मतया अवस्थितेरिति स्वयमेव परिहरिष्यति॥४४॥

इति वेदान्तसारे अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ १० ॥

इति श्रीभगवद्रामानुजविरचिते वेदान्तसारे प्रथमस्याध्यायस्य
तृतीयः पादः ॥ ३ ॥

---

वेदान्तदीपे—आकाशोऽर्थान्तरत्वादिव्यपदेशात्॥ छान्दोग्ये ४"आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा" इत्यत्राकाशशब्दनिर्दिष्टः किं मुक्तात्मा!, उत परमात्मा—इति संशयः । मुक्त इति पूर्वः पक्षः, ५"धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि" इति मुक्तस्यानन्तरप्रकृतत्वात् । राद्धान्तस्तु ४"नामरूपयोर्निर्वहिता ते यदन्तरा" इति स्वयमस्पृष्टनामरूपतया नामरूपयोर्निर्वोढृत्वेन श्रूयमाणोऽयमाकाशो बद्धमुक्तोभयावस्थात्प्रत्यगात्मनोऽर्थान्तरत्वात्परमात्मैव। सूत्रार्थस्तु—आकाशः परमात्मा, तस्य नामरूपयोर्निर्वोढृत्वतदस्पर्शलक्षणार्थान्तरत्वव्यपदेशात् ; प्रत्यगात्मनो ह्यर्थान्तरभूत एव नामरूपयोर्निर्वोढा । बद्धावस्थस्तावन्नामरूपाभ्यां स्पृष्टस्तत्परवशश्चेति न निर्वोढा ; मुक्तस्यापि जगद्व्यापाररहितत्वान्न निर्वोढृत्वम् । आदिशब्देन निरुपाधिकब्रह्मत्वामृतत्वात्मत्वादीनि गृह्यन्ते; तानि निरुपाधिकानि मुक्तस्यापि न सम्भवन्ति ॥ ४२ ॥

ननु तत्त्वमस्यादिनैक्यव्यपदेशात्, ६"नेह नानाऽस्ति" इति भेदप्रतिषेधाच्च न प्रत्यगात्मनोऽर्थान्तरभूतः परमात्मेत्याशङ्क्याह—

सुषुप्त्युत्क्रान्त्योर्भेदेन॥ 'व्यपदेशात्' इति वर्तते । ७"प्राज्ञेनाऽऽत्मना

---

१. बृ. ६.३-३५॥
२. बृ. ६-४-२२॥
३. शा. १-४-२२ ॥ ४.छा.८-१४-१॥
५. छा. ८-१३-१ ॥
६. बृ. ६-४-१९ ॥
७. बृ. ६-३-२१ ॥

सम्परिष्वक्तः" १"प्राज्ञेनाऽऽत्मनाऽन्वारूढः" इति सुषुप्त्युत्क्रान्त्योः लुप्तसकलविशेषविज्ञानात्प्रत्यगात्मनस्तदानीमेव सर्वज्ञतया भेदव्यपदेशात्प्रत्यगात्मनोऽर्थान्तरभूत एव परमात्मा ॥ ४३ ॥

**पत्यादिशब्देभ्यः** ॥ परिष्वञ्जके प्राज्ञे श्रूयमाणेभ्यः पत्यादिशब्देभ्यश्चायं प्रत्यगात्मनोर्थान्तरभूतः परमात्मा, २"सर्वस्याधिपतिः सर्वस्य वशी सर्वस्येशानः"इत्यादौ । ऐक्योपदेशभेदप्रतिषेधौ तु ब्रह्मकार्यत्वनिबन्धनाविति ३"तज्जलानिति—सर्वं खल्विदं ब्रह्म" इत्यादिश्रुतिभिरेव व्यक्तौ॥४४॥

इति वेदान्तदीपे अर्थान्तरत्वादिव्यपदेशाधिकरणम् ॥ १० ॥

**इति श्रीभगवद्रामानुजविरचिते श्रीवेदान्तदीपे प्रथमस्याध्यायस्य**

**तृतीयः पादः ॥ ३ ॥**

---

१. बृ. ६-३-३५ ॥ ३५० पुटे. १. सं. द्रष्टव्यम् ॥ २. बृ. ६-४-२२ ॥ ३. छा-३-१४-१ ॥



श्रीमते रामानुजाय नमः.

श्रीभगवद्रामानुजविरचिते

# श्रीशारीरिकमीमांसाभाष्ये

(प्रथमाध्याये-चतुर्थपादे-आनुमानिकाधिकरणम् ॥ १ ॥)



## आनुमानिकमप्येकेषामितिचेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च । १ । ४ । १ ॥

उक्तं परमपुरुषार्थलक्षणमोक्षसाधनतया जिज्ञास्यं जगज्जन्मादिकारणं ब्रह्माचिद्वस्तुनः प्रधानादेश्चेतनाच्च बद्धमुक्तोभयावस्थाद्विलक्षणं निरस्तसमस्तहेयगन्धं सर्वज्ञं सर्वशक्ति सत्यसङ्कल्पं समस्तकल्याणगुणात्मकं सर्वान्तरात्मभूतं निरङ्कुशैश्वर्यमिति । इदानीं कापिलतन्त्रसिद्धाब्रह्मात्मकप्रधानपुरुषादिप्रतिपादनमुखेन प्रधानकारणत्वप्रतिपादनच्छायानुसारीण्यपि कानिचिद्वाक्यानि कासुचिच्छाखासु सन्तीत्याशङ्क्य ब्रह्मैककारणत्वस्थेम्ने तन्निराक्रियते। कठवल्लीष्वाम्नायते [१] "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः। महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं कि-

१. कठ. १-३-१०, ११ ॥

श्चित्सा काष्ठा सा परा गतिः"इति। तत्र सन्देहः—किं कापिलतन्त्रसिद्धमब्रह्मात्मकं प्रधानमिहाव्यक्तशब्देनोच्यते, उत न—इति। किं युक्तम्? प्रधानमिति। कुतः? [1]"महतः परमव्यक्तमव्यक्तात्पुरुषः परः"इति तन्त्रसिद्धतत्त्वप्रक्रियाप्रत्यभिज्ञानेन तस्यैव प्रतीतेः, [1]"पुरुषान्नपरं किञ्चित्सा काष्ठा सा परा गतिः" इति पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधाच्च। अतोऽव्यक्तं कारणमिति प्राप्तम्। तदिदमुक्तम्—आनुमानिकमप्येकेषामिति चेत्—इति। एकेषां शाखिनां शाखास्वानुमानिकं प्रधानमपि कारणमाम्नायत इति चेत्—

( सिद्धान्तः )

अत्रोत्तरं—नेति। नाव्यक्तशब्देनाब्रह्मात्मकं प्रधानमिहाभिधीयते। कुतः? शरीररूपकविन्यस्तगृहीतेः—शरीराख्यरूपकविन्यस्तस्य अव्यक्तशब्देन गृहीतेः। आत्मशरीरबुद्धिमनइन्द्रियविषयेषु रथिरथादिभावेन रूपितेषु रथरूपणेन विन्यस्तस्य शरीरस्यात्राव्यक्तशब्देन ग्रहणादित्यर्थः। एतदुक्तं भवति—पूर्वत्र हि [2]"आत्मानं रथिनं विद्धि शरीरं रथमेवच। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेवच। इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्"इत्यादिना, [3]"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यन्तेन संसाराध्वनः पारं वैष्णवं पदं प्रेप्सन्तमुपासकं रथित्वेन तच्छरीरादीनिच रथरथाङ्गत्वेन रूपयित्वा, यस्यैते रथादयो वशे तिष्ठन्ति, स एवाध्वनः पारं वैष्णवं पदमाप्नोतीत्युक्त्वा, तेषु रथादिरूपितशरीरादिषु यानि येभ्यो वशीकार्यतायां प्रधानानि, तान्युच्यन्ते[4]"इन्द्रियेभ्यः पराः" इत्यादिना। तत्र हयत्वेन रूपितेभ्य इन्द्रियेभ्यो गोचरत्वेन रूपिता विषयाः वशीकार्यत्वे पराः, वश्येन्द्रियस्यापि विषयसन्निधाविन्द्रियाणां दुर्निग्रहत्वात्। तेभ्योऽपि परं प्रग्रहरूपितं मनः, मनसि विषयप्रवणे विषयासन्निधानस्याप्यकिञ्चित्करत्वात्। तस्मादपि सारथित्वरूपिता बुद्धिः परा, अध्यवसायाभावे मनसोऽप्यकिञ्चित्करत्वात्। तस्या

१. कठ. १-३-११॥ २. कठ. १-३-३॥ ३. कठ. १-३-९॥ ४. कठ. १-३-१०॥

अपि रथित्वरूपित आत्मा कर्तृत्वेन प्राधान्यात्परः; सर्वस्यचास्यात्मेच्छायत्तत्वादात्मैव महानिति च विशेष्यते। तस्मादपि रथरूपितं शरीरं परम्, तदायत्तत्वाज्जीवात्मनस्सकलपुरुषार्थसाधनप्रवृत्तीनाम्। तस्मादपि परस्सर्वान्तरात्मभूतोऽन्तर्याम्यध्वनः पारभूतः परमपुरुषः, यथोक्तस्यात्मपर्यन्तस्य समस्तस्य तत्सङ्कल्पायत्तप्रवृत्तित्वात्। स खल्वन्तर्यामितयोपासनस्यापि निर्वर्तकः। [1]"परात्तु तच्छ्रुतेः" इति हि जीवात्मनः कर्तृत्वं परमपुरुषायत्तमिति वक्ष्यते। वशीकार्योपासननिर्वृत्त्युपायकाष्ठाभूतः परमप्राप्यश्च स एव। तदिदमुच्यते[2]"पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति। तथाचान्तर्यामिब्राह्मणे, [3]"य आत्मनि तिष्ठन्"इत्यादिभिस्सर्वं साक्षात्कुर्वन्त्सर्वं नियमयतीत्युक्त्वा[4]"नान्योऽतोऽस्ति द्रष्टा" इति नियन्त्रन्तरं निषिध्यते। भगवद्गीतासुच [5]"अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्। विविधाच पृथक्चेष्टा दैवं चैवात्र पञ्चमम्" इति। दैवमत्र पुरुषोत्तम एव [6]"सर्वस्य चाहं हृदि सन्निविष्टो मत्तस्स्मृतिर्ज्ञानमपोहनं च" इति वचनात्। तस्यच वशीकरणं तच्छरणागतिरेव। यथाह [7]"ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया। तमेव शरणं गच्छ" इति। तदेवम् [8]"आत्मानं रथिनं विद्धि" इत्यादिना रथ्यादिरूपकविन्यस्ता इन्द्रियादयः[9]"इन्द्रियेभ्यः परा ह्यर्थाः"इत्यत्र स्वशब्दैरेव प्रत्यभिज्ञायन्ते, न रथरूपितं शरीरमिति परिशेषात्तदव्यक्तशब्देनोच्यत इति निश्चीयते। अतः कापिलतन्त्रसिद्धस्य प्रधानस्य प्रसङ्ग एव नास्ति। नचात्र तत्तन्त्रसिद्धप्रक्रियाप्रत्यभिज्ञा [9]"इन्द्रियेभ्यः परा ह्यर्थाः"इतीन्द्रियेभ्योऽर्थानां शब्दादीनां

---

१. शारी. २-३-४० ॥
२. कठ. १-३-११ ॥
३. बृ. ५-७-२२ ॥ मा. पा ॥
४. बृ. ५-७-२३ ॥
५. गी. १८-१४ ॥
६. गी. १५-१५ ॥
७. गी. १८-६१, ६२ ॥
८. कठ. १-३-३॥ ९. कठ. १-३-१०॥

परत्वकीर्तनात् । नहि शब्दादय इन्द्रियाणां कारणभूतास्तद्दर्शने। [1]"अर्थेभ्यश्च परं मनः" इत्यपि न तत्तन्त्रसङ्गतम्, अकारणत्वादेव; तथा [1]"बुद्धेरात्मा महान्परः" इत्यप्यसङ्गतम्, बुद्धिशब्देन महत्तत्त्वस्याभिधानाभ्युपगमात्। नहि महतो महान्परस्सम्भवति। महत आत्मशब्देन विशेषणं च न सङ्गच्छते। अतो रूपकविन्यस्तानामेव ग्रहणम्। दर्शयति च तदेव [2]"एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" [3]"यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेत् ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि" इति। अजितबाह्याभ्यन्तरकरणैरस्य परमपुरुषस्य दुर्दर्शत्वमभिधाय हयादिरूपितानामिन्द्रियादीनां वशीकारप्रकारोऽयमुच्यते। [3]"यच्छेद्वाङ्मनसी" वाचं मनसि नियच्छेत्—वाक्पूर्वकाणि कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि च मनसि नियच्छेदित्यर्थः। वाक्छब्दे द्वितीयायाः" [4]"सुपां सुलुक्" इति लुक्। 'मनसी' इति सप्तम्याश्छान्दसो दीर्घः। [3]"तद्यच्छेत् ज्ञान आत्मनि" तन्मनो बुद्धौ नियच्छेत् । ज्ञानशब्देनात्र पूर्वोक्ता बुद्धिरभिधीयते। [3]"ज्ञान आत्मनि" इति व्यधिकरणे सप्तम्यौ। आत्मनि वर्तमाने ज्ञाने नियच्छेदित्यर्थः। [3]"ज्ञानमात्मनि महति नियच्छेत्" बुद्धिं कर्तरि महत्यात्मनि नियच्छेत्। [3]"तद्यच्छेच्छान्त आत्मनि" तं कर्तारं परस्मिन्ब्रह्मणि सर्वान्तर्यामिणि नियच्छेत्। व्यत्ययेन तदिति नपुंसकलिङ्गता। एवम्भूतेन रथिना वैष्णवं पदं गन्तव्यमित्यर्थः ॥ १ ॥

अव्यक्तशब्देन कथं व्यक्तस्य शरीरस्याभिधानम्? तत्राह—

## सूक्ष्मं तु तदर्हत्वात् । १ । ४ । २ ॥

भूतसूक्ष्ममव्याकृतं ह्यवस्थाविशेषमापन्नं शरीरं भवति; तदव्या-

१. कठ. १-३-१० ॥
२. कठ. १-३-१२ ॥
३. कठ. १-३-१३ ॥
४. पाणिनि. ७-१-३९ ॥

कृतमिह शरीरावस्थमव्यक्तशब्देनोच्यते । तदर्हत्वात्—तस्याव्याकृतस्याचिद्वस्तुन एव विकारापन्नस्य रथवत्पुरुषार्थसाधनप्रवृत्त्यर्हत्वात् ॥ २ ॥

यदि भूतसूक्ष्ममव्याकृतमभ्युपगम्यते;कापिलतन्त्रसिद्धोपादाने कः प्रद्वेषः, तत्रापिहि भूतकारणमेवाव्यक्तमित्युच्यते; तत्राह—

## तदधीनत्वादर्थवत् । १ । ४ । ३ ॥

परमकारणभूतपरमपुरुषाधीनत्वात्प्रयोजनवद्भूतसूक्ष्मम् । एतदुक्तं भवति—न वयमव्यक्तं तत्परिणामविशेषांश्च स्वरूपेण नाभ्युपगच्छामः ; अपितु परमपुरुषशरीरतया तदात्मकत्वविरहेण । तदात्मकत्वेनैव हि प्रकृत्यादयस्स्वप्रयोजनं साधयन्ति; अन्यथा स्वरूपस्थितिप्रवृत्तिभेदास्तेषां न स्युः; तथाऽनभ्युपगमादेव तन्त्रसिद्धप्रक्रियानिरसनम्—इति। श्रुतिस्मृत्योर्हि जगदुत्पत्तिप्रलयवादेषु परमपुरुषमहिमवादेषु च प्रकृतिविकृतिपुरुषास्तदात्मकास्सङ्कीर्त्यन्ते; यथा [१]"पृथिव्यप्सु लीयते" इत्यारभ्य "तन्मात्राणि भूतादौ लीयन्ते। भूतादिर्महति लीयते। महानव्यक्ते लीयते। अव्यक्तमक्षरे लीयते। अक्षरं तमसि लीयते। तमः परे देव एकीभवति", तथा[२]"यस्य पृथिवी शरीरं यस्यापश्शरीरं यस्य तेजश्शरीरं यस्य वायुश्शरीरं यस्याकाशश्शरीरं यस्याहङ्कारश्शरीरं यस्य बुद्धिश्शरीरं यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युश्शरीरम् एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः",तथा [३]"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च। अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा॥अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ एतद्योनीनि भूतानि सर्वाणीत्युपधारय । अहं कृत्स्नस्य जगतः

---

१. सुबाल. २. खं ॥
२. सुबाल. ७. खं ॥
३. गी. ७-४, ५, ६, ७ ॥

प्रभवः प्रलयस्तथा ॥ मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इति, [1]"व्यक्तं विष्णुस्तथाऽव्यक्तं पुरुषः काल एव च" इति, [2]"प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि । परमात्मा च सर्वेषामाधारः परमेश्वरः" इति च ॥ ३ ॥

## ज्ञेयत्वावचनाच्च । १ । ४ । ४ ॥

यदि तन्त्रसिद्धमिहाव्यक्तमविवक्षिष्यत्, ज्ञेयत्वमवक्ष्यत्; [3]व्यक्ताव्यक्तज्ञविज्ञानात् मोक्षं वदद्भिस्तान्त्रिकैस्तेषां सर्वेषां ज्ञेयत्वाभ्युपगमात्, न चास्य ज्ञेयत्वमुच्यते; अतो न तन्त्रसिद्धस्येह ग्रहणम् ॥ ४ ॥

## वदतीतिचेन्न प्राज्ञो हि प्रकरणात् ।१। ४ । ५॥

[4]"अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्। अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते" इत्यव्यक्तस्य ज्ञेयत्वमनन्तरमेव वदतीयं श्रुतिरितिचेत्—तन्न, प्राज्ञः—परमपुरुष एव ह्यत्र श्लोके निचाय्यत्वेन प्रतिपाद्यते "विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्"[6]"एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः"इति प्राज्ञस्यैव प्रकृतत्वात्। अत एव [7]"पुरुषान्न परं किञ्चित्" इति न पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधः। तस्य च परमपुरुषस्याशब्दत्वादयो धर्माः [8]"यत्तदद्रेश्यमग्राह्यम्" इत्यादिश्रुतिप्रसिद्धाः । [8]"महतः परम्" इत्यपि [9]"बुद्धेरात्मा महान्परः"इति पूर्वप्रकृताज्जीवात्मनः परत्वमेवोच्यते ॥ ५ ॥

---

१. वि. १-२-१८ ॥
२. वि. ६-४-३९, ४० ॥
३. सांख्यतत्त्वकारिका॥ ४. कठ. १-३-१५॥
५. कठ. १-३-९ ॥ ६. कठ. १-३-१२॥
७. कठ. १-३-११ ॥
८. मु. १-६ ॥ ९. कठ. १-३-१० ॥

## त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ।१।४।६॥

अस्मिन्प्रकरणे ह्युपायोपेयोपेतॄणां त्रयाणमेव चैवमुपन्यासः–ज्ञेयत्वेनोपन्यासः, तद्विषयश्च प्रश्नो दृश्यते, नान्यस्याव्यक्तादेः। तथाहि–नचिकेता मुमुक्षुस्सन्मृत्युप्रदत्ते वरत्रये प्रथमेन वरेणात्मनः पुरुषार्थयोग्यतापादिनीमात्मनि पितुस्सुमनस्कतां प्रतिलभ्य द्वितीयेन वरेण मोक्षोपायभूतां नाचिकेताग्निविद्यां वव्रे–[1]"सत्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्। स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण" इति। स्वर्गशब्देनात्र परमपुरुषार्थलक्षणो मोक्षोऽभिधीयते, [1]"अमृतत्वं भजन्ते"इति तत्रस्थस्य जननमरणाभावश्रवणादुत्तरत्र क्षयिफलकर्मनिन्दादर्शनाच्च; [2]"त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू" इति च प्रतिवचनात्। तृतीयेन वरेण मोक्षस्वरूपप्रश्नद्वारेणोपेयस्वरूपमुपेतृस्वरूपमुपायभूतकर्मानुगृहीतोपासनस्वरूपं च पृष्टम्–[3]"येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः" इति। एवं मोक्षे पृष्टे तदुपदेशयोग्यतां परीक्ष्योपदिदेश–[4]"तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति। तदेवं सामान्येनोपदिष्टे नचिकेताः प्रीतस्सन् [4]"देवं मत्वा" इत्युपास्यतया निर्दिष्टस्य प्राप्यभूतस्य देवस्य [4]"अध्यात्मयोगाधिगमेन" इति वेदितव्यतया निर्दिष्टस्य प्राप्तुः प्रत्यगात्मनश्च[4]"मत्वा धीरो हर्षशोकौ जहाति" इति निर्दिष्टस्य ब्रह्मोपासनस्य च स्वरूपविशोधनाय पुनः पप्रच्छ–[5]"अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताद्भव्याच्च

---

१. कठ. १-१-१३॥
२. कठ. १-१-१७॥
३. कठ. १-१-२०॥
४. कठ. १-२-१२॥
५. कठ. १-२-१४॥

यत्तत्पश्यसि तद्वद" इति । एवं सकलेतरातीतानागतवर्तमानसाध्यसाधनसाधकविलक्षणे त्रये पृष्टे प्रथमं प्रणवं प्रशस्य तद्वाच्यं प्राप्यस्वरूपं, तदन्तर्गतं च प्राप्तृस्वरूपं वाचकरूपं चोपायं पुनरपि सामान्येन ख्यापयन्प्रणवं तावदुपदिदेश—[१]"सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्" इति । एवमुपदिश्य पुनरपि प्रणवं प्रशस्य प्रथमं तावत्प्राप्तुः प्रत्यगात्मनस्स्वरूपमाह—[२]"न जायते म्रियते वा विपश्चित्" इत्यादिना । प्राप्यस्य परस्य ब्रह्मणो विष्णोस्स्वरूपम् [३]"अणोरणीयान्" इत्यादिना [४]"क इत्था वेद यत्र सः" इत्यन्तेनोपदिशन्मध्ये [५]"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन" इत्यादिनोपायभूतस्योपासनस्य भक्तिरूपतामप्याह । [६]"ऋतं पिबन्तौ" इति चोपास्यस्योपासकेन सहावस्थानात्सूपासतामुक्त्वा [७]"आत्मानं रथिनं विद्धि" इत्यादिना [८]"दुर्गं पथस्तत्कवयो वदन्ति" इत्यन्तेनोपासनप्रकारमुपासीनस्य च वैष्णवपरमपदप्राप्तिमभिधाय [९]"अशब्दमस्पर्शम्" इत्यादिनोपसंहृतम् । अतस्त्रयाणामेवात्र ज्ञेयत्वेनोपन्यासः प्रश्नश्च ; तस्मान्नेह तान्त्रिकस्याव्यक्तस्य ग्रहणम् ॥

## महद्वच्च १।४।७॥

यथा [१०]"बुद्धेरात्मा महान्परः" इत्यत्रात्मशब्दसामानाधिकरण्यान्न तन्त्रसिद्धं महत्तत्त्वं गृह्यते; एवमव्यक्तमप्यात्मनः परत्वेनाभिधानान्न कापिलतन्त्रसिद्धं गृह्यत इति स्थितम् ॥ ७॥

इति श्रीशारीरकमीमांसाभाष्ये आनुमानिकाधिकरणम् ॥ १ ॥

---

१. कठ. १-२-१५ ॥
२. कठ. १-२-१८ ॥
३. कठ. १-२-२० ॥
४. कठ. १-२-२५ ॥
५. कठ. १-२-२३ ॥
६. कठ. १-३-१ ॥
७ कठ. १-३-३ ॥
८. कठ. १-३-१४ ॥
९. कठ. १-३-१५ ॥
१०. कठ. १-३-१० ॥

वेदान्तसारे—आनुमानिकमप्येकेषामितिचेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ एकेषां कठानां शाखायाम्, आनुमानिकं प्रधानमपि,जगत्कारणत्वेन१"महतः परमव्यक्तम्"इत्युच्यते इति चेत्—न,पूर्वत्र२"आत्मानं रथिनं विद्धि" इत्यादिषूपासनोपायेषु वशीकार्यत्वाय रथिरथादिरूपकविन्यस्तेषु शरीराख्यरूपकविन्यस्तस्यात्राव्यक्तशब्देन गृहीतेः।३"इन्द्रियेभ्यः परा ह्यर्थाः" इत्यादिनाहि वशीकार्यत्वेनहि परा उच्यन्ते। तथाचोत्तरत्र श्रुतिरेव दर्शयति ४"यच्छेद्वाङ्मनसी प्राज्ञः" इत्यादिना ॥ १ ॥

सूक्ष्मन्तु तदर्हत्वात् ॥ सूक्ष्मम् अव्यक्तमेव शरीरावस्थं कार्यार्हमित्यव्यक्तशब्देन शरीरमेव गृह्यते ॥ २ ॥

यदि रूपकविन्यस्तानामेव ग्रहणम्, किमर्थम् १"अव्यक्तात्पुरुषः परः" इत्यत आह—

तदधीनत्वादर्थवत् ॥ पुरुषाधीनत्वादात्मशरीरादिकम् अर्थवत्—उपासननिर्वृत्तये भवति। पुरुषो ह्यन्तर्यामी सर्वमात्मादिकं प्रेरयन् उपासनोपायत्वेन वशीकार्यकाष्ठा प्राप्यश्चेति १"सा काष्ठा सा परा गतिः"इत्युच्यते ॥ ३ ॥

ज्ञेयत्वावचनाच्च ॥ अत्राव्यक्तस्य ज्ञेयत्वावचनाच्च न कापिलमव्यक्तम्॥

वदतीतिचेन्न प्राज्ञो हि प्रकरणात् ॥ ५"अशब्दमस्पर्शम्"इत्यारभ्य ५"निचाय्य तम्"इति वदतीतिं चेन्न, ६"तद्विष्णोः परमं पदम्" ७"एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते" इत्यादिना प्रकृतः प्राज्ञो हि ५"निचाय्य तम्" इति ज्ञेय उच्यते ॥ ५ ॥

त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ उपास्योपासनोपासकानान्त्रयाणामेवास्मिन्प्रकरणे ज्ञेयत्वेन उपन्यासः प्रश्नश्च, न प्रधानादेः। ८"अध्यात्मयोगाधिगमेन देवम्मत्वा"इत्यादिः उपन्यासः;९"येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके" इत्यादिकश्च प्रश्नः ॥ ६ ॥

१. कठ. १-३-११ ॥
२. कठ. १-३-३ ॥
३. कठ. १-३-१० ॥
४. कठ. १-३-१३ ॥
५. कठ. १-३-१५ ॥
६. कठ. १-३-९ ॥
७. कठ. १-३-१२ ॥
८. कठ. १-२-१२ ॥ ९. कठ. १-१-२० ॥

महद्वच ॥ [१]"बुद्धेरात्मा महान्परः"इत्यात्मशब्दाद्यथा न तान्त्रिको महान्, तथाऽव्यक्तमपीति ॥ ७ ॥

इति वेदान्तसारे आनुमानिकाधिकरणम् ॥ १ ॥

---

वेदान्तदीपे—आनुमानिकमप्येकेषामितिचेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ कठवल्लीषु [१]"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसश्च परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः"इत्यत्र किं साङ्ख्योक्तं प्रधानमव्यक्तशब्दाभिधेयम् ? उत नेति संशयः । प्रधानमिति पूर्वः पक्षः[२]"महतः परम्" इत्यादितत्तन्त्रप्रक्रियाप्रत्यभिज्ञानात्, [२]"पुरुषान्न परं किञ्चित्" इति पञ्चविंशकपुरुषातिरिक्ततत्त्वनिषेधाच्च। राद्धान्तस्तु—नाव्यक्तशब्देन प्रधानमिह गृह्यते, पूर्वत्र[३]"आत्मानं रथिनं विद्धि शरीरं रथमेवच" इत्यादिना उपासनानिर्वृत्तये वश्येन्द्रियत्वापादनाय, ये आत्मशरीरबुद्धिमनइन्द्रियविषयाः, रथिरथसारथिप्रग्रहहयगोचरत्वेन रूपिताः; तेषु वशीकार्यत्वे पराः [१]"इन्द्रियेभ्यः पराः" इत्यादिनोच्यन्ते; तत्रचेन्द्रियादयः स्वशब्देनैव गृह्यन्ते;रथत्वेन रूपितं शरीरमिहाव्यक्तपरिणामत्वेनाव्यक्तशब्देन गृह्यत इति नेह तत्तन्त्रप्रक्रियाप्रत्यभिज्ञागन्धः । [२]"अव्यक्तात्पुरुषः परः" इति च न पञ्चविंशकः; अपि तु प्राप्यः परमात्मैव । अन्तर्यामितयोपासनस्याप्युपायभूत इति स इह वशीकार्यकाष्ठात्वेन [२]"पुरुषान्न परं किञ्चित्" इत्युक्तः ॥

सूत्रार्थस्तु—एकेषां कठानां शाखायाम्, आनुमानिकं प्रधानं जगत्कारणत्वेन [१]"महतः परमव्यक्तम्"इत्याम्नायते इतिचेत्—तन्न, अव्यक्तशब्देन शरीराख्यरूपकविन्यस्तस्य गृहीतेः—पूर्वत्रात्मादिषु रथिरथादिरूपकविन्यस्तेषु रथत्वेन रूपितस्य शरीरस्यात्राव्यक्तशब्देन गृहीतेरित्यर्थः । अतो वशीकार्यत्वे परा इहोच्यन्ते । दर्शयति च एनमर्थं वाक्यशेषः, इन्द्रियादीनां नियमनप्रकारं प्रतिपादयन् [४]"यच्छेद्वाङ्मनसी" इत्यादिः ॥

कथमव्यक्तशब्दस्य शरीरं वाच्यं भवतीत्याशङ्क्याह—

---

१. कठ. १-३-१० ॥
२. कठ. १-३-११ ॥
३. कठ. १-३-३ ॥
४. कठ. १-३-१३ ॥

**सूक्ष्मन्तु तदर्हत्वात्** ॥ तुशब्दोऽवधारणे । सूक्ष्मम् अव्यक्तमेवावस्थान्तरापन्नं शरीरं भवति, तदवस्थस्यैव कार्यार्हत्वात् ॥ २ ॥

यदि रूपकविन्यस्ता आत्मादय एव वशीकार्यत्वे पराः [1]"इन्द्रियेभ्यः पराः" इत्यादिना गृह्यन्ते; तर्हि [2]"अव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्" इति पुरुषग्रहणं किमर्थमित्यत आह—

**तदधीनत्वादर्थवत्** ॥ अन्तर्यामिरूपेणावस्थितपुरुषाधीनत्वादात्मादिकं सर्वं रथिरथत्वादिना रूपितम् अर्थवत् प्रयोजनवद्भवति । अत उपासननिर्वृत्तौ वशीकार्यकाष्ठा परमपुरुष इति तदर्थमिह रूपकविन्यस्तेषु परिगृह्यमाणेषु [3]पुरुषस्यापि ग्रहणम् । उपासननिर्वृत्त्युपायकाष्ठा पुरुषः प्राप्यश्चेति [2]"पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः" इत्युक्तम् । भाष्यप्रक्रियया वा नेयमिदं सूत्रम्— परमपुरुषशरीरतया तदधीनत्वाद्भूतसूक्ष्ममव्याकृतमर्थवदिति तदिहाव्यक्तशब्देन गृह्यते; नाब्रह्मात्मकं स्वनिष्ठं तन्त्रसिद्धम्—इति ॥ ३॥

**ज्ञेयत्वावचनाच्च** ॥ यदि तन्त्रसिद्धप्रक्रियेहाभिप्रेता; तदाऽव्यक्तस्यापि ज्ञेयत्वं वक्तव्यम् । [4]"व्यक्ताव्यक्तज्ञविज्ञानात्" इति हि तत्प्रक्रिया । नह्यव्यक्तमिह ज्ञेयत्वेनोक्तम्, अतश्चात्र न तन्त्रप्रक्रियागन्धः ॥ ४ ॥

**वदतीतिचेन्न प्राज्ञो हि प्रकरणात्** ॥ [5]"अशब्दमस्पर्शम्" इत्युपक्रम्य [5]"महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते" इति प्रधानस्य ज्ञेयत्वमनन्तरमेव वदतीयं श्रुतिरिति चेत्—तन्न, [5]"अशब्दमस्पर्शम्" इत्यादिना प्राज्ञः परमपुरुष एव ह्यत्रोच्यते [6]"सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" [7]"एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते" इति प्राज्ञस्यैव प्रकृतत्वात् ॥

**त्रयाणामेव चैवमुपन्यासः प्रश्नश्च**॥ अस्मिन्प्रकरणे [8]"येयं प्रेते विचिकित्सा मनुष्ये" इत्यारभ्याऽसमाप्तेः परमपुरुषतदुपासनोपासकानां त्रयाणामेवैवं ज्ञेयत्वेन उपन्यासः प्रश्नश्च दृश्यते, न प्रधानादेस्तान्त्रिकस्यापि । अतश्च न प्रधानमिह ज्ञेयत्वेनोक्तम् ॥ ६ ॥

**महद्वच्च** ॥ यथा [1]"बुद्धेरात्मा महान्परः" इत्यात्मशब्दसामानाधिकर-

---

१. कठ. १-३-१० ॥
२. कठ. १-३-११ ॥
३. परस्यापि पुरुषस्य. पा॥
४. सांख्यतत्त्वकारिका २-श्लो ॥
५. कठ. १-३-१५ ॥
६. कठ. १-३-९ ॥
७. कठ. १-३-१२ ॥
८. कठ. १-१-२० ॥

ण्यान्महच्छब्देन न तान्त्रिकं महत्तत्त्वं गृह्यते, एवमव्यक्तशब्देनापि न तान्त्रिकं प्रधानम् ॥ ७ ॥

इति वेदान्तदीपे आनुमानिकाधिकरणम् ॥ १ ॥

---

( श्रीशारीरकमीमांसाभाष्ये चमसाधिकरणम् ॥ २ ॥ )

---

## चमसवदविशेषात् । १।४।८॥

अत्रापि तन्त्रसिद्धप्रक्रिया निरस्यते, न ब्रह्मात्मकानां प्रकृतिमहदहङ्कारादीनां स्वरूपम्, श्रुतिस्मृतिभ्यां ब्रह्मात्मकानां तेषां प्रतिपादनात्। यथा आथर्वणिका अधीयते–[१]"विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् । ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः । सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत् । गौरनाद्यन्तवती सा जनित्री भूतभाविनी । सिताऽसिता च रक्ता च सर्वकामदुघा विभोः । पिबन्त्येनामविषमामविज्ञाताः कुमारकाः । एकस्तु पिबते देवः स्वच्छन्दोऽत्र वशानुगाम् । ध्यानक्रियाभ्यां भगवान्भुङ्क्तेऽसौ प्रसभं विभुः । सर्वसाधारणीं दोग्ध्रीं पीड्यमानां तु यज्वभिः"[१]"चतुर्विंशतिसङ्ख्यातमव्यक्तं व्यक्तमुच्यते" इति। अत्र प्रकृत्यादीनां स्वरूपमभिहितम्; यदात्मकाश्चैते प्रकृत्यादयः,स परमपुरुषोऽपि [१]"तं षड्विंशकमित्याहुस्सप्तविंशमथापरे। पुरुषं निर्गुणं साङ्ख्यमथर्वशिरसो विदुः" इति प्रतिपाद्यते; अपरे चाथर्वणिकाः [२]"अष्टौ प्रकृतयष्षोडश विकाराः" इत्यधीयते; श्वेताश्वतराश्चैवं प्रकृतिपुरुषेश्वरस्वरूपमामनन्ति [३]"संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः। अनीशश्चात्मा बध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः"[४]"ज्ञाज्ञौ

---

१. मन्त्रिकोपनिषदि.
२.

३. ४. श्वे. १-८, ९ ॥

द्वावजावीशनीशावजा ह्येका भोक्तृभोगार्थयुक्ता। अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत्" [1]"क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः। तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः" इति; तथा [2]"छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति। अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः। मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्। तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्" इति; तथोत्तरत्रापि [3]"प्रधानक्षेत्रज्ञपतिर्गुणेशस्संसारमोक्षस्थितिबन्धहेतुः" इति। स्मृतिरपि [4]"प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि। विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्। कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते। पुरुषस्सुखदुःखानां भोक्तृत्वे हेतुरुच्यते। पुरुषः प्रकृतिस्थोऽपि भुङ्क्ते प्रकृतिजान् गुणान्। कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" [5]"सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः। निबध्नन्ति महाबाहो देहे देहिनमव्ययम्"; तथा [6]"सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्। कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम्॥ प्रकृतिं स्वामवष्टभ्य विसृजामि पुनःपुनः। भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्" [7]"मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम्। हेतुनाऽनेन कौन्तेय जगद्धि परिवर्तते"इति। तस्मादब्रह्मात्मकत्वेन कापिलतन्त्रसिद्धाः प्रकृत्यादयो निरस्यन्ते। श्वेताश्वतरोपनिषदि श्रूयते [8]"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजास्सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः"इति। तत्र सन्देहः–किमस्मिन्मन्त्रे केवला तन्त्रसिद्धा प्रकृतिरभिधीयते, उत ब्रह्मात्मिका–इति। किं युक्तम्? केवलेति। कुतः? [8]"अजामेकाम्" इत्यस्याः प्रकृतेरकार्यत्व-

---

१. श्वे. १-१० ॥
२. श्वे. ४-९, १० ॥
३. श्वे. ६-१६॥ ४. गी. १३-१९, २०, २१॥
५. गी. १४-५ ॥
६. गी. ९-७, ८ ॥
७. गी. ९-१० ॥
८. श्वे. ४-५ ॥

श्रवणात्, [१]"बह्वीः प्रजास्सृजमानां सरूपाः" इति स्वातन्त्र्येण सरूपाणां बह्वीनां प्रजानां स्रष्टृत्वश्रवणाच्च–इति ॥ ८ ॥

एवं प्राप्तेऽभिधीयते—चमसवदविशेषात्—न जायत इत्यजेत्यजात्वमात्रप्रतिपादनात्तन्त्रसिद्धाब्रह्मात्मकाजाग्रहणे विशेषाप्रतीतेः ; चमसवत्–यथा [२]"अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः" इत्यस्मिन्मन्त्रे चमसस्य भक्षणसाधनत्वमात्रं चमसशब्देन प्रतीयत इति न तावन्मात्रेण चमसविशेषप्रतीतिः, यौगिकशब्दानामर्थप्रकरणादिभिर्विनाऽर्थविशेषनिश्चयायोगात्; तत्र [२]"यथेदं तच्छिरः एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः" इत्यादिना वाक्यशेषेण शिरसश्चमसत्वनिश्चयः; तथाऽत्राप्यर्थप्रकरणादिभिरेवाजा निर्णेतव्या; नचात्र तन्त्रसिद्धाजाग्रहणहेतवोऽर्थप्रकरणादयो दृश्यन्ते; नचास्यास्स्वातन्त्र्येण स्रष्टृत्वं प्रतीयते, "बह्वीः प्रजास्सृजमानाम्" इति स्रष्टृत्वमात्रप्रतीतेः। अतोऽनेन मन्त्रेण नाब्रह्मात्मिकाऽजाऽभिधीयते ॥

ब्रह्मात्मकाजाग्रहण एव विशेषहेतुरस्तीत्याह—

## ज्योतिरुपक्रमा तु तथाह्यधीयत एके। १।४।९॥

तुशब्दोऽवधारणार्थः; ज्योतिरुपक्रमैवैषाऽजा; ज्योतिः ब्रह्म [३]"तं देवा ज्योतिषां ज्योतिः" [४]"अथ यदतः परो दिवो ज्योतिर्दीप्यते" इत्यादिश्रुतिप्रसिद्धेः। ज्योतिरुपक्रमा ब्रह्मकारणिकेत्यर्थः। तथाह्यधीयत एके–हीति हेतौ, यस्मादस्या अजाया ब्रह्मकारणकत्वमेके शाखिनः तैत्तिरीया अधीयते–[५]"अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः" इति हृदयगुहायामुपास्यत्वेन सन्निहितं ब्रह्माभिधाय "सप्त प्रा-

---

१. श्वे. ४-५ ॥
२. बृ. ४-२-३ ॥
३. बृ. ६-४-१६ ॥
४. छा. ३-१३-७ ॥
५. तै-नारा. १२॥

णाः प्रभवन्ति तस्मात्" इत्यादिना सर्वेषां लोकानां ब्रह्मादीनां च तत उत्पत्तिमभिधाय सर्वकारणीभूताऽजा तत उत्पन्नाऽभिधीयते [१]"अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः"इति । सर्वस्य तद्व्यतिरिक्तस्य वस्तुजातस्य तत उत्पत्त्या तदात्मकत्वोपदेशे प्रक्रियमाणेऽभिधीयमानत्वात्प्राणसमुद्रपर्वतादिवदेषाऽप्यजा बह्वीनां सरूपाणां प्रजानां स्रष्ट्री कर्मवश्येनाऽऽत्मना भुज्यमाना अन्येन विदुषाऽऽत्मना त्यज्यमाना च ब्रह्मण उत्पन्ना ब्रह्मात्मिकाऽवगन्तव्येत्यर्थः। अतो वाक्यशेषाच्चमसविशेषवच्छाखान्तरीयादेतत्सरूपात्प्रत्यभिज्ञायमानार्थाद्वाक्यान्नियमिताऽजा ब्रह्मात्मिकेति निश्चीयते। इहापि प्रकरणोपक्रमे [२]"किं कारणं ब्रह्म"इत्यारभ्य [३]"ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निरूढाम्" इति परब्रह्मशक्तिरूपाया अजाया अवगतेः,उपरिष्टाच्च[४]"अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः" [५]"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" [६]"यो योनिर्योनिमधितिष्ठत्येकः"इति च तस्या एव प्रतीतेर्नास्मिन्मन्त्रे तन्त्रसिद्धस्वतन्त्रप्रकृतिप्रतिपत्तिगन्धः ॥

कथं तर्हि ज्योतिरुपक्रमाया लोहितशुक्लकृष्णरूपाया अस्याः प्रकृतेरजात्वम् , अजाया वा कथं ज्योतिरुपक्रमात्वमित्यत्राह—

## कल्पनोपदेशाच्च मध्वादिवदविरोधः। १। ४। १०॥

प्रसक्ताशङ्कानिवृत्त्यर्थश्चशब्दः। अस्याः प्रकृतेरजात्वं ज्योतिरुपक्रमात्वं च न विरुध्यते; कुतः? कल्पनोपदेशात्। कल्पनं कॢप्तिः सृष्टिः; जगत्सृष्ट्युपदेशादित्यर्थः। यथा[७]"सूर्याचन्द्रमसौ धाता यथापूर्वम-

१. तै. नारा. १२ ॥
२. श्वे. १-१ ॥
३. श्वे. १-३ ॥ ४. श्वे. ४-९ ॥
५. ६. श्वे. ४-१०, ११ ॥
७. तै. नारा. १-१३ ॥

कल्पयत्" इति कल्पनं सृष्टिः। अत्रापि [1]"अस्मान्मायी सृजते विश्व-मेतत्" इति जगत्सृष्टिरुपदिश्यते। स्वेनाविभक्तादस्मात्सूक्ष्मावस्थात्का-रणान्मायी सर्वेश्वरस्सर्वं जगत्सृजतीत्यर्थः। अनेन कल्पनोपदेशेना-स्याः प्रकृतेः कार्यकारणरूपेणावस्थाद्वयान्वयोऽवगम्यते। सा हि प्र-लयवेलायां ब्रह्मतापन्ना अविभक्तनामरूपा सूक्ष्मरूपेणावतिष्ठते; सृष्टि-वेलायां तूद्भूतसत्त्वादिगुणा विभक्तनामरूपाऽव्यक्तादिशब्दवाच्या ते-जोबन्नादिरूपेण च परिणता लोहितशुक्लकृष्णाकारा चावतिष्ठते। अतः कारणावस्थाऽजा, कार्यावस्था ज्योतिरुपक्रमेति न विरोधः। मध्वादिवत्—यथेश्वरेणादित्यस्य कारणावस्थायामेकस्यैवावस्थितस्य का-र्यावस्थायामृग्यजुस्सामाथर्वप्रतिपाद्यकर्मनिष्पाद्यरसाश्रयतया वस्वादिदे-वताभोग्यत्वाय मधुत्वकल्पनमुदयास्तमयकल्पनं च न विरुध्यते। तदु-क्तं मधुविद्यायाम् [2]"असौ वा आदित्यो देवमधु" इत्यारभ्य [3]"अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता" इत्यन्तेन। एकलः एकस्वभावः। अतोऽनेन मन्त्रेण ब्रह्मात्मिकाऽजैवाभिधीयते, न कापिलतन्त्रसिद्धेति सिद्धम्॥

अन्ये त्वस्मिन्मन्त्रे तेजोबन्नलक्षणाऽजैकाभिधीयत इति ब्रुवते। ते प्रष्टव्याः—किं तेजोबन्नान्येव तेजोबन्नात्मिकाऽजैका; उत तेजोबन्न-रूपं ब्रह्मैव; किं वा तेजोबन्नकारणभूता काचित्—इति। प्रथमे कल्पे तेजो-बन्नानामनेकत्वात् "अजामेकाम्" इति विरुध्यते। न च वाच्यं तेजो-बन्नानामनेकत्वेऽपि त्रिवृत्करणेनैकतापत्तिरिति। त्रिवृत्करणेऽपि बहुत्वा-नपगमात्, [5]"इमास्तिस्रो देवताः" [6]"तासां त्रिवृतं त्रिवृतमेकैकां कर-वाणि" इति प्रत्येकं त्रिवृत्करणोपदेशात्। द्वितीयः कल्पो विकल्प्यः—

---

१. श्वे. ४-९॥
२. छा. ३-१-१॥
३. छा. ३-११-१॥
४. श्वे. ४-५॥
५. छा. ६-३-२॥
६. छा. ६-३-३॥

किं तेजोबन्नरूपेण विकृतं ब्रह्मैवाजैका; किंवा स्वरूपेणावस्थितमविकृतमिति। प्रथमः कल्पो बहुत्वानपायादेव निरस्तः। द्वितीयेऽपि [1]"लोहितशुक्लकृष्णाम्" इति विरुध्यते। स्वरूपेणावस्थितं ब्रह्म तेजोबन्नलक्षणमिति वक्तुमपि न शक्यते। तृतीये कल्पेऽप्यजाशब्देन तेजोबन्नानि निर्दिश्य तैस्तत्कारणावस्थोपस्थापनीयेत्यास्थेयम्।ततो वरमजाशब्देन तेजोबन्नकारणावस्थायाः श्रुतिसिद्धाया एवाभिधानम्। यत्पुनरस्याः प्रकृतेरजाशब्देन च्छागत्वपरिकल्पनमुपदिश्यत इति; तदप्यसङ्गतम्,निष्प्रयोजनत्वात्। यथा [2]"आत्मानं रथिनं विद्धि"इत्यादिषु ब्रह्मप्राप्त्युपायताख्यापनाय शरीरादिषु रथादिरूपणं क्रियते; यथाचादित्ये वस्वादीनां भोग्यत्वख्यापनाय मधुत्वकल्पनं क्रियते; तद्वदस्यां प्रकृतौ च्छागत्वपरिकल्पनं क्वोपयुज्यते; न केवलमुपयोगाभाव एव,विरोधश्च; कृत्स्नजगत्कारणभूतायाः स्वस्मिन्ननादिकालसम्बद्धानां सर्वेषामेव चेतनानां निखिलसुखदुःखोपभोगापवर्गसाधनभूतायाः अचेतनायाः अत्यल्पप्रजासर्गकरागन्तुकसङ्गमचेतनविशेषैकरूपात्यल्पप्रयोजनसाधनस्वपरित्यागाहेतुभूतस्वसम्बन्धिपरित्यागसमर्थचेतनविशेषरूपच्छागस्वभावख्यापनाय तद्रूपत्वकल्पनं विरुद्धमेव। [1]"अजामेकाम्" [1]"अजो ह्येकः" [1]"अजोऽन्यः"इत्यत्राजाशब्दस्य विरूपार्थकल्पनं च न शोभनम्। सर्वत्र च्छागत्वं परिकल्प्यत इति चेत् [1]"जहात्येनां भुक्तभोगामजोऽन्यः इति विदुष आत्यन्तिकप्रकृतिपरित्यागं कुर्वतोऽनेनवाऽन्येनवा पुनरपि सम्बन्धयोग्यच्छागत्वपरिकल्पनमत्यन्तविरुद्धम् ॥ १० ॥

इति श्रीशारीरकमीमांसाभाष्ये चमसाधिकरणम् ॥ २ ॥

---

१. श्वे, ४. ५॥ २. कठ, १. ३. ३ ॥

**वेदान्तसारे—चमसवदविशेषात्॥** १"अजामेकां...बह्वीः प्रजास्सृजमानाम्" इत्यत्र न तन्त्रसिद्धा प्रकृतिः कारणत्वेनोक्ता; जन्माभावयोगमात्रेण न तस्या एव प्रतीतिः २"अर्वाग्बिलश्चमसः" इतिवत् प्रकरणे विशेषकाभावात्। २"यथेदन्तच्छिरः" इति हि चमसो विशेष्यते। यौगिकशब्दाद्विशेषप्रतीतिर्हि विशेषकापेक्षा ॥ ८ ॥

**ज्योतिरुपक्रमा तु तथाह्यधीयत एके॥** ज्योतिः ब्रह्म; ब्रह्मकारणिका इयमजा। तथाहि ब्रह्मकारणिकाया एव प्रतिपादकमेतत्सरूपमन्त्रश्च तैत्तिरीयाः अधीयते; ३"अणोरणीयान्महतो महीयान्" इत्यारभ्य ४"अतस्समुद्रा गिरयश्च" इत्यादिना सर्वस्य ब्रह्मण उत्पत्त्या तदात्मकत्वप्रतिपादनसमये ५"अजामेकाम्" इति पठन्ति। अतस्तत्प्रत्यभिज्ञानादियं ब्रह्मकारणिकेति निश्चीयते ॥ ९ ॥

**कल्पनोपदेशाच्च मध्वादिवदविरोधः॥** कल्पना सृष्टिः, यथा ६"सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इति। ७"अस्मान्मायी सृजते विश्वमेतत्" इत्यादिना सृष्ट्युपदेशात् अजात्वब्रह्मकार्यत्वयोरविरोधश्च; प्रलयकाले नामरूपे विहायाचिद्वस्त्वपि सूक्ष्मरूपेण ब्रह्मशरीरतया तिष्ठतीत्यजात्वम्; सृष्टिकाले नामरूपे भजमाना प्रकृतिः ब्रह्मकारणिका, यथा आदित्यस्य सृष्टिकाले वस्वादिभोग्यरसाधारतया मधुत्वं कार्यत्वञ्च, तस्यैव प्रलयकाले मध्वादिव्यपदेशानर्हसूक्ष्मरूपेणावस्थानमकार्यत्वञ्च मधुविद्यायां प्रतीयते ८"असौ वा आदित्यो देवमधु" ९"नैवोदेता नास्तमेता एकल एव मध्ये स्थाता" इति; तद्वत् ॥ १० ॥

इति वेदान्तसारे चमसाधिकरणम् ॥ २ ॥

---

**वेदान्तदीपे—चमसवदविशेषात्॥** श्वेताश्वतरे १"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजास्सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इत्यत्र किमजाशब्देन तन्त्रसिद्धा प्रकृतिरभिधीयते, उत ब्रह्मात्मिका—इति संशयः। तन्त्रसिद्धेति पूर्वः पक्षः, १"अजामेकाम्" इत्यस्या अकार्यत्वप्रतीतेः, बह्वीनां प्रजानां स्वातन्त्र्येण कारणत्वश्रवणाच्च,

१. श्वे. ४-५ ॥ २. बृ. ४-२-३ ॥ ३. तै. नारा. ६-१०-१॥ ४. तै. नारा. ६-१०-३ ॥ ५. तै. नारा. ६-१०-५ ॥ ६. तै. नारा. ६-१-३८ ॥ ७. श्वे. ४-९ ॥ ८. छा. ३-१-१ ॥ ९. छा. ३-११-१॥

सिद्धान्तस्तु—न तन्त्रसिद्धायाः प्रकृतेरत्र ग्रहणम्, जननविरहश्रवणमात्रेण तन्त्रसिद्धायाः प्रकृतेः प्रतीतिनियमाभावात्, नहि यौगिकानां शब्दानामर्थप्रकरणादिभिर्विशेष्यव्यवस्थापकैर्विना विशेषे वृत्तिनियमसम्भवः; नचास्यास्स्वातन्त्र्येण सृष्टिहेतुत्वमिह प्रतीतम्, अपितु सृष्टिहेतुत्वमात्रम्; तद्ब्रह्मात्मिकायाश्च न विरुद्धम्; अत्र तु ब्रह्मात्मिकाया एव शाखान्तरसिद्धायाः एतत्सरूपमन्त्रोदितायाः प्रत्यभिज्ञानात्सैवेति निश्चीयते ॥

सूत्रार्थस्तु—नायमजाशब्दस्तन्त्रसिद्धप्रधानविषयः, कुतः? चमसवदविशेषात्; यथा १"अर्वाग्बिलश्चमसः" इति मन्त्रे चमनसाधनत्वयोगेन प्रवृत्तस्य चमसशब्दस्य शिरसि प्रवृत्तौ १"यथेदं तच्छिर एष ह्यर्वाग्बिलश्चमसः" इति वाक्यशेषे विशेषो दृश्यते; तथा २"अजामेकाम्" इत्यजाशब्दस्य तन्त्रसिद्धप्रधाने वृत्तौ विशेषाभावान्न तद्ग्रहणं न्याय्यम् ॥ ८ ॥

अस्ति तु ब्रह्मात्मिकाया एव ग्रहणे विशेष इत्याह—

**ज्योतिरुपक्रमा तु तथाह्यधीयत एके ॥** ज्योतिः ब्रह्म यस्याः उपक्रमः कारणम्, सा ज्योतिरुपक्रमा । तुशब्दोऽवधारणे । ब्रह्मकारणिकैवैषाऽजा; तथाह्यधीयत एके, यथारूपोऽयमजायाः प्रतिपादको मन्त्रः; तथारूपमेव मन्त्रं ब्रह्मात्मिकायाः तस्याः प्रतिपादकमधीयत एके शाखिनः ३"अणोरणीयान्महतो महीयान्"इत्यादिना ब्रह्म प्रतिपाद्य ४"सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषस्समिधस्सप्तजिह्वाः। सप्त इमे लोका येषु चरन्ति प्राणा गुहाशयान्निहितास्सप्तसप्त। अतस्समुद्रा गिरयश्च सर्वे" इत्यादिना ब्रह्मण उत्पन्नत्वेन ब्रह्मात्मकतया सर्वानुसन्धानविधानसमये ५"अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्" इति प्रतिपाद्यमाना ब्रह्मात्मिकैवेति तत्प्रत्यभिज्ञानादिहाप्यजा ब्रह्मात्मिकैवेति निश्चीयते ॥ ९ ॥

अजात्वं ज्योतिरुपक्रमात्वं च कथमुपपद्यते इत्यत आह—

**कल्पनोपदेशाच्च मध्वादिवदविरोधः॥** कल्पना सृष्टिः, ६"सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इत्यादिदर्शनात् । ७"अस्मान्मायी सृजते विश्वमेतत्"इति हि सृष्टिरिहोपदिश्यते । प्रलयवेलायामेषा प्रकृतिः परम-

१. बृ. ४-२-३ ॥
२. श्वे. ४-५ ॥
३. तै. नारा. ६-१०-१ ॥
४. तै. नारा. ६-१०-२, ३ ॥
५. तै. नारा. ६-१०-५ ॥
६. तै.नारा. ६-१-३८ ॥ ७. श्वे.४-९ ॥

पुरुषाश्रया कारणावस्था अतिसूक्ष्मावयवा शक्तिरूपेणावतिष्ठते ; तदवस्थाभिप्रायेणास्या अजात्वम्। सृष्टिवेलायां पुनस्तच्छरीराद्ब्रह्मणः स्थूलावस्था जायते; तदवस्था ज्योतिरुपक्रमेति न कश्चिद्विरोधः । मध्वादिवत्—यथा आदित्यस्यैकस्यैव कार्यावस्थायाम्—[१]"असौ वा आदित्यो देवमधु" इति वस्वादिभोग्यरसाधारतया मधुत्वम्, तस्यैव[२]"अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता" इत्यादिना नामरूपप्रहाणेन कारणावस्थायां सूक्ष्मस्यैकस्यैवावस्थानं न विरुध्यते, तद्वत्॥ १०॥

इति वेदान्तदीपे चमसाधिकरणम् ॥ २ ॥

---

( श्रीशारीरकमीमांसाभाष्ये संख्योपसंग्रहाधिकरणम्॥३॥)

---

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च। १ । ४ । ११ ॥

वाजसनेयिनस्समामनन्ति [३]"यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः। तमेवम्मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्" इति। किमयं मन्त्रः कापिलतन्त्रसिद्धतत्त्वप्रतिपादनपरः,उत नेति सन्दिह्यते।किं युक्तम्? तन्त्रसिद्धतत्त्वप्रतिपादनपर इति । कुतः? पञ्चशब्दविशेषितात्पञ्चजनशब्दात्पञ्चविंशतितत्त्वप्रतीतेः। एतदुक्तं भवति [३]"पञ्चजनाः"इति समासस्समाहारविषयः।पञ्चानां जनानां समूहाः पञ्चजनाः;'पञ्चपूल्य'इतिवत्। पञ्च जनाइति लिङ्गव्यत्ययश्छान्दसः। ते च समूहाः कतीत्यपेक्षायां पञ्चजनशब्दविशेषणेन प्रथमेन पञ्चशब्देन समूहाः पञ्चेति प्रतीयन्ते; यथा पञ्च पञ्चपूल्य इति। अतः[३]"पञ्च पञ्चजनाः"इतिपञ्चविंशतिपदार्थावगतौ ते कतम इत्यपेक्षायां मोक्षाधिकारान्मुमुक्षुभिः ज्ञातव्यतया स्मृतिप्रसिद्धाः प्रकृत्यादय एव ज्ञायन्ते । [४]"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतय-

---

१. छा.३-१-१ ॥ २. छा. ३-११-१॥ | ३. बृ. ६-४-१७॥ ४. सांख्यतत्त्वकारिका॥

स्सप्त। षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः" इतिहि कापिलानां प्रसिद्धिः। अतस्तन्त्रसिद्धतत्त्वप्रतिपादनपरः॥

—••◆( सिद्धान्तः )◆••—

इति प्राप्ते प्रचक्ष्महे—न सङ्ख्योपसङ्ग्रहादपि—इति [1]"पञ्च पञ्चजनाः" इति पञ्चविंशतिसङ्ख्योपसङ्ग्रहादपि न तन्त्रसिद्धतत्त्वप्रतीतिः। कुतः? नानाभावात्—एषां पञ्चसङ्ख्याविशेषितानां पञ्चजनानां तन्त्रसिद्धेभ्यस्तत्त्वेभ्यः पृथग्भावात्। [1]"यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इत्येतेषां यच्छब्दनिर्दिष्टब्रह्माश्रयतया ब्रह्मात्मकत्वं हि प्रतीयते [1]"तमेवम्मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्" इत्यत्र तमिति परामर्शेन यच्छब्दनिर्दिष्टं ब्रह्मेत्यवगम्यते। अतस्तेभ्यः पृथग्भूताः पञ्चजना इति न तन्त्रसिद्धा एते। अतिरेकाच्च—तन्त्रसिद्धेभ्यस्तत्त्वेभ्योऽत्र तत्त्वातिरेकोऽपि भवति; यच्छब्दनिर्दिष्ट आत्मा आकाशश्चात्रातिरिच्येते। अतः [2]"तं षाड्विंशकमित्याहुस्सप्तविंशमथापरे" इति श्रुतिप्रसिद्धसर्वतत्त्वाश्रयभूतस्सर्वेश्वरः परमपुरुषोऽत्राभिधीयते। 'न सङ्ख्योपसङ्ग्रहादपि' इत्यपिशब्दस्य [1]"पञ्च पञ्चजनाः" इत्यत्र पञ्चविंशतितत्त्वप्रतिपत्तिरेव न सम्भवतीत्यभिप्रायः। कथम्? पञ्चभिरारब्धसमूहपञ्चकासम्भवात्; नहि तन्त्रसिद्धतत्त्वेषु पञ्चसु पञ्चस्वनुगतं तत्सङ्ख्यानिवेशनिमित्तं जात्याद्यस्ति; नच वाच्यं—पञ्च कर्मेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि, पञ्च महाभूतानि, पञ्च तन्मात्राणि, अवशिष्टानि पञ्च— इत्यवान्तरसङ्ख्यानिवेशनिमित्तमस्त्येव—इति; आकाशस्य पृथङ्निर्देशेन पञ्चभिरारब्धमहाभूतसमूहासिद्धेः। अतः [1]"पञ्चजनाः" इत्ययं समासो न समाहारविषयः; अयं तु [3]"दिक्सङ्ख्ये संज्ञायाम्" इति संज्ञाविषयः; अन्यथा पञ्चजनाः इति लिङ्गव्यत्ययश्च। पञ्चजना नाम केचित्सन्ति; तेच पञ्चसङ्ख्यया विशेष्यन्ते, पञ्च पञ्चजनाः इति; सप्त सप्तर्षय इतिवत्॥ ११॥

१. बृ- ६-४-१७॥ २. मन्त्रिकोपनिषदि॥ ३. पाणिनि-२-१-५०॥

के पुनस्ते पञ्चजनाः इत्यत आह—

## प्राणादयो वाक्यशेषात् । १ । ४ । १२ ॥

[१]"प्राणस्य प्राणमुत चक्षुषश्चक्षुश्श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः" इति वाक्यशेषाद्ब्रह्माश्रयाः प्राणादय एव पञ्च पञ्चजनाः इति विज्ञायन्ते ॥ १२ ॥

अथ स्यात्—काण्वानां माध्यन्दिनानां च [२]"यस्मिन् पञ्च पञ्चजनाः" इत्ययं मन्त्रस्समानः; [१]"प्राणस्य प्राणम्" इत्यादिवाक्यशेषे काण्वानामन्नस्य पाठो न विद्यते; तेषां पञ्च पञ्चजनाः प्राणादय इति न शक्यं वक्तुम्—इति; अत्रोत्तरम्—

## ज्योतिषैकेषामसत्यन्ने । १ । ४ । १३ ॥

एकेषां काण्वानां पाठे असत्यन्ने ज्योतिषा पञ्चजनाः इन्द्रियाणीति ज्ञायन्ते;तेषां वाक्यशेषः प्रदर्शनार्थः। एतदुक्तं भवति—[२]"यस्मिन् पञ्च पञ्चजनाः" इत्यस्मात्पूर्वस्मिन्मन्त्रे[३]"तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति ज्योतिषां ज्योतिष्ट्वेन ब्रह्मण्यभिधीयमाने ब्रह्माधीनस्वकार्याणि कानिचिज्ज्योतींषि प्रतिपन्नानि;तानि च विषयाणां प्रकाशकानीन्द्रियाणीति [२]"यस्मिन् पञ्च पञ्चजनाः"इत्यनिर्धारितविशेषनिर्देशेनावगम्यन्ते—इति।[१]"प्राणस्य"इति प्राणशब्देन स्पर्शनेन्द्रियं गृह्यते,वायुसम्बन्धित्वात्स्पर्शनेन्द्रियस्य मुख्यप्राणस्य ज्योतिश्शब्देन प्रदर्शनायोगात्। चक्षुष इति चक्षुरिन्द्रियम्,श्रोत्रस्येति श्रोत्रेन्द्रियम्,अन्नस्येति घ्राणरसनयोस्तन्त्रेणोपादानम्, अन्नशब्दोदितपृथिवीसम्बन्धित्वाद्घ्राणेन्द्रियमनेन गृह्यते ; अद्यतेऽनेनेत्यन्नमिति रसनेन्द्रियमपि गृह्यते। मनस इति मनः।

---

१. बृ. ६-४-१८ ॥
२. बृ. ६-४-१७ ॥
३. बृ. ४-१६ ॥

घ्राणरसनयोस्तन्त्रेणोपादानमिति पञ्चत्वमप्यविरुद्धम् ।प्रकाशकानि मनः-पर्यन्तानीन्द्रियाणि पञ्चजनशब्दनिर्दिष्टानि; तदविरोधाय घ्राणरसनयो-स्तन्त्रेणोपादानम्।तदेवम् [1]"यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इति पञ्चजनशब्दनिर्दिष्टानीन्द्रियाण्याकाशशब्दप्रदर्शितानि महाभूतानि च ब्रह्मणि प्रतिष्ठितानीति सर्वतत्त्वानां ब्रह्माश्रयत्वप्रतिपादनान्न तन्त्रसिद्धपञ्चविंशतितत्त्वप्रसङ्गः । अतस्सर्वत्र वेदान्ते सङ्ख्योपसङ्ग्रहे तदभावे वा न कापिलतन्त्रसिद्धतत्त्वप्रतीतिरिति स्थितम् ॥

इति श्रीशारीरकमीमांसाभाष्ये सङ्ख्योपसङ्ग्रहाधिकरणम् ॥

---

वेदान्तसारे–न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च॥[1]"यस्मि-न्पञ्च पञ्चजनाः" इत्यत्र पञ्चविंशतिसङ्ख्योपसङ्ग्रहादपि न तान्त्रिकाण्येतानि, 'यस्मिन्' इति यच्छब्दनिर्दिष्टब्रह्माधारतया तेभ्यः पृथग्भावात् एतेषान्तत्त्वा-तिरेकाच्च; यच्छब्दनिर्दिष्टमाकाशश्चेति द्वयमतिरिक्तम् । 'संख्योपसंग्रहादपि' इत्यपिशब्दान्नात्र पञ्चविंशतिसख्यासङ्ग्रहः; [2] "दिक्संख्ये संज्ञायाम्" इति संज्ञाविषयोऽयं पञ्चजना इति । पञ्चजना नाम केचित्,ते पञ्च पञ्चजनाः इत्यु-च्यन्ते, 'सप्त सप्तर्षयः' इतिवत् ॥

प्राणादयो वाक्यशेषात्॥पञ्चजनसंज्ञिताः प्राणादयः पञ्चेन्द्रियाणीति [3]"प्राणस्य प्राणमुत चक्षुषश्चक्षुः" इत्यादिवाक्यशेषादवगम्यते;चक्षुश्श्रोत्रसा-हचर्यात् प्राणान्नशब्दावपि स्पर्शनादीन्द्रियविषयौ ॥ १२ ॥

ज्योतिषैकेषामसत्यन्ने ॥ एकेषां शाखिनां काण्वानाम् [3]"अन्नस्या-न्नम्" इत्यसति, [4]"तन्देवाज्योतिषां ज्योतिः" इत्युपक्रमगतेन ज्योतिश्शब्देन पञ्च पञ्चजनाः इन्द्रियाणीति ज्ञायन्ते। ज्योतिषां ज्योतिः प्रकाशकानां प्रकाशकं ब्रह्मेत्युक्त्वा, अनन्तरं [1]"पञ्च पञ्चजनाः" इत्युक्तेः प्रकाशकानि पञ्चेन्द्रियाणी-ति गम्यते ॥ १३ ॥

इति वेदान्तसारे संख्योपसङ्ग्रहाधिकरणम्.

वेदान्तदीपे–न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च॥वाजसनेय-के[1]"यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेवंमन्य आत्मानं विद्वान्ब्र-

---

१. बृ. ६. ४-२७ ॥
२. पाणिनि. २-१-५० ॥
३. बृ. ६-४-१८ ॥
४. बृ. ६-४-१६ ॥

ह्मामृतोऽमृतम्'' इत्यत्र किं साङ्ख्योक्तानि पञ्चविंशतितत्त्वानि प्रतिपाद्यन्ते, उत नेति संशयः। तान्येवेति पूर्वः पक्षः । १''पञ्च पञ्चजनाः'' इति हि पञ्चसङ्ख्याविशिष्टाः पञ्चजनाः पञ्चविंशतिस्सम्पद्यन्ते । कथम् ? पञ्चजना इति समहारविषयोऽयं समासः; 'पञ्चपूल्यः' इतिवत्।पञ्चभिर्जनैरारब्धस्समूहः पञ्चजनः। पञ्चजनीत्यर्थः । लिङ्गव्यत्ययश्छान्दसः।'पञ्चजनाः' इति बहुवचनात्समूहबहुत्वं चावगम्यते । तेच कतीत्यपेक्षायां १''पञ्च पञ्चजनाः''इति पञ्चशब्दविशेषिताः पञ्चजनसमूहा इति पञ्चविंशतिस्तत्त्वानि भवन्ति । मोक्षाधिकारात्तान्त्रिकाण्येवेति निश्चीयन्ते।एवं निश्चिते सति १''तमेवं मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्'' इति २पञ्चविंशकमात्मानं ब्रह्मभूतं विद्वानमृतो भवतीति।राद्धान्तस्तु— १''यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः'' इति यच्छब्दनिर्दिष्टब्रह्माधारत्वात्तदाधेयानां तत्त्वानां ब्रह्मात्मकत्वमवगम्यते । यच्छब्दनिर्दिष्टं च १''तमेवं मन्य आत्मानम्''*(इति तच्छब्देन परामृश्य,१''ब्रह्मामृतोऽमृतम्)'' १इति निर्देशाद्ब्रह्मेति निश्चीयते अतो न तान्त्रिकप्रसङ्गः ॥

सूत्रार्थस्तु—१''पञ्च पञ्चजनाः'' इत्यत्र पञ्चविंशतिसङ्ख्योपसङ्ग्रहादपि न तान्त्रिकाणीमानि तत्त्वानि, यस्मिंन्निति यच्छब्दनिर्दिष्टब्रह्माधारतया तान्त्रिकेभ्यो नानाभावात्—एषां तत्त्वानां पृथग्भावादित्यर्थः। अतिरेकाच्च—तान्त्रिकेभ्यस्तत्त्वातिरेकप्रतीतेश्च; यस्मिन्निति निर्दिष्टमतिरिक्तमाकाशश्च ।'न सङ्ख्योपसङ्ग्रहादपि' इत्यपिशब्देन सङ्ख्योपसङ्ग्रहो न सम्भवतीत्याह, आकाशस्य पृथङ्निर्देशात्।अतः पञ्चजनाः इति न समहारविषयः, अपि तु ३''दिक्सङ्ख्ये संज्ञायाम्'' इति संज्ञाविषयः; पञ्चजनसंज्ञिताः केचित्, ते च पञ्चैवेति; 'सप्त सप्तर्षयः' इतिवत् ॥ ११ ॥

**प्राणादयो वाक्यशेषात् ॥** पञ्चजनसंज्ञिताः पञ्च पदार्थाः प्राणादय इति वाक्यशेषादवगम्यते । ४''प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः'' इति ब्रह्मात्मकानीन्द्रियाणि पञ्च पञ्चजना इति निर्दिष्टानि । जननाच्च जनाः ॥ १२ ॥

---

१. बृ. ६-४-१७ ॥

२. तच्छब्देन परामृश्य ''ब्रह्मामृतम्'' इति निर्देशात्. इत्यधिकः पाठः क्वचिद् दृश्यते ॥

*कुण्डलितं क्वचिन्नदृश्यते ॥

३. पाणिनि. २-१-५० ॥

४. बृ. ६-४-१८ ॥ मा. पाठः ॥

काण्वपाठेऽन्नवर्जितानां चतुर्णां निर्देशात् पञ्चजनसंज्ञितानीन्द्रियाणीति कथं ज्ञायत इत्यत्राह—

**ज्योतिषैकेषामसत्यन्ने ॥** एकेषां काण्वानां वाक्यशेषे असत्यन्नशब्दे वाक्योपक्रमगतेन [१]"तं देवा ज्योतिषां ज्योतिः"इति ज्योतिश्शब्देन पञ्चजनाः इन्द्रियाणीति विज्ञायन्ते । कथम्? [१] "ज्योतिषां *ज्योतिः"इति ब्रह्मणि निर्दिष्टे प्रकाशकानां प्रकाशकं ब्रह्मेति प्रतीयते।के ते प्रकाशका इत्यपेक्षायां[२]"पञ्च पञ्चजनाः" इत्यनिर्ज्ञातविशेषाः पञ्चसंख्यासंख्याताः प्रकाशकानि पञ्चेन्द्रियाणीत्यवगम्यते । अतः [२]"यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इतीन्द्रियाणि भूतानि च ब्रह्मणि प्रतिष्ठितानीति न तान्त्रिकतत्त्वगन्धः॥ १३ ॥

इति वेदान्तदीपे सङ्ख्योपसङ्ग्रहाधिकरणम् ॥ ३ ॥

---

( श्रीशारीरकमीमांसाभाष्ये कारणत्वाधिकरणम् ॥ ४ ॥)

---

# कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः । १ । ४ । १४ ॥

पुनः प्रधानकारणवादी प्रत्यवतिष्ठते—न वेदान्तेष्वेकस्मात्सृष्टिराम्नायत इति जगतो ब्रह्मैककारणत्वं न युज्यते।कथम्?तथाहि [३]"सदेव सोम्येदमग्र आसीत्" इति सत्पूर्विका सृष्टिराम्नायते; [४]"असद्वा इदमग्र आसीत्" इत्यसत्पूर्विका च; अन्यत्र [५]"असदेवेदमग्र आसीत्तत्सदासीत्तत्समभवत्" इति च। अतो वेदान्तेषु स्रष्टुरव्यवस्थितेर्जगतो ब्रह्मैककारणत्वं न निश्चेतुं शक्यम्; प्रत्युत प्रधानकारणत्वमेव निश्चेतुं शक्यते [६]"तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यव्याकृते प्रधाने जगतः प्रलयमभिधाय [६]"तन्नामरूपाभ्यां व्याक्रियत" इत्यव्याकृतादेव जगतस्सृष्टि-

---

१. बृ. ६-४-१६ ॥
* ज्योतिषि ब्रह्मणि. पा ॥
२. बृ. ६-४-१७ ॥ ३. छा. ६-२-१॥
४. तै. आ. ७ ॥
५. छा. ३-१९-१ ॥
६. बृ. ३-४-७ ॥

श्चाभिधीयते। अव्याकृतं ह्यव्यक्तम्, नामरूपाभ्यां न व्याक्रियते—न व्यज्यत इत्यर्थः। अव्यक्तं प्रधानमेव। अस्य च स्वरूपनित्यत्वेन परिणामाश्रयत्वेन च जगत्कारणवादिवाक्यगतौ सदसच्छब्दौ ब्रह्मणीवास्मिन्न विरोत्स्येते। एवमव्याकृतकारणत्वे निश्चिते सतीक्षणादयः कारणगतास्सृष्ट्यौन्मुख्याभिप्रायेण योजयितव्याः। ब्रह्मात्मशब्दावपि बृहत्त्वव्यापित्वाभ्यां प्रधान एव वर्तेते। अतः स्मृतिन्यायप्रसिद्धं प्रधानमेव जगत्कारणं वेदान्तवाक्यैः प्रतिपाद्यते ॥

(सिद्धान्तः)

इति प्राप्ते प्रचक्ष्महे—कारणत्वेनचाकाशादिषु यथाव्यपदिष्टोक्तेः—चशब्दस्तुशब्दार्थे ; सर्वज्ञात्सर्वेश्वरात्सत्यसङ्कल्पान्निरस्तनिखिलदोषगन्धात्परस्माद्ब्रह्मण एव जगदुत्पद्यत इति निश्चेतुं शक्यते। कुतः ? आकाशादिषु कारणत्वेन यथाव्यपदिष्टस्योक्तेः—सर्वज्ञत्वादिविशिष्टत्वेन [१]“जन्माद्यस्य यतः” इत्येवमादिषु प्रतिपादितं ब्रह्म यथाव्यपदिष्टमित्युच्यते, तस्यैकस्यैवाकाशादिषु कारणत्वेनोक्तेः। [२]“तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः” [३]“तत्तेजोऽसृजत” इत्यादिषु सर्वज्ञं ब्रह्मैव कारणत्वेनोच्यते। तथाहि [२]“सत्यं ज्ञानमनन्तं ब्रह्म”[२]“सोऽश्नुते सर्वान्कामान्त्सह ब्रह्मणा विपश्चिता”इति प्रकृतं विपश्चिदेव ब्रह्म [२]“तस्माद्वा एतस्मात्” इति परामृश्यते। तथा [३]“तदैक्षत बहु स्याम्”इति निर्दिष्टं सर्वज्ञं ब्रह्मैव [३]“तत्तेऽजोऽसृजत”इति परामृश्यते।एवं सर्वत्र सृष्टिवाक्येषु द्रष्टव्यम्।अतो ब्रह्मैककारणं जगदिति निश्चीयते ॥

ननु [४]“असद्वा इदमग्र आसीत्” इत्यसदेव कारणत्वेन व्यपदिश्यते ; तत्कथमिव सर्वज्ञस्य सत्यसङ्कल्पस्य ब्रह्मण एव कारणत्वं निश्चीयत इत्यत आह—

१. शारी. १-१-२ ॥
२. तै. आ. १ ॥
३. छा. ६-२-३ ॥
४. तै. आ. ७-१ ॥

# समाकर्षात् । १ । ४ । १५ ॥

[१]"असद्वा इदमग्र आसीत्" इत्यत्रापि विपश्चिदानन्दमयं सत्यसङ्कल्पं ब्रह्मैव समाकृष्यते।कथम्? [२]"तस्माद्वा एतस्माद्विज्ञानमयात्।अन्योऽन्तर आत्माऽनन्दमयः" [३]"सोऽकामयत। बहु स्यां प्रजायेयेति" [३]"इदं सर्वमसृजत।यदिदं किंच।तत्सृष्ट्वा।तदेवानुप्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत्" इत्यादिना ब्राह्मणेनाऽनन्दमयं ब्रह्म सत्यसङ्कल्पं सर्वस्य स्रष्टृ सर्वानुप्रवेशेन सर्वात्मभूतमभिधाय[३]"तदप्येष श्लोको भवति' इत्युक्तस्यार्थस्य सर्वस्य साक्षित्वेनोदाहृतोऽयं श्लोकः [४]"असद्वा इदमग्र आसीत्"इति। तथोत्तरत्र[५]"भीषाऽस्माद्वातः पवते"इत्यादिना तदेव ब्रह्म समाकृष्य सर्वस्य प्रशासितृत्वनिरतिशयानन्दत्वादयोऽभिधीयन्ते । अतोऽयं मन्त्रस्तद्विषय एव। तदानीं नामरूपविभागाभावेन तत्सम्बन्धितयाऽस्तित्वाभावाद्ब्रह्मैवासच्छब्देनोच्यते। [६]"असदेवेदमग्र आसीत्"इत्यत्राप्ययमेव निर्वाहः। यदुक्तं [७]"तद्धेदं तर्ह्यव्याकृतमासीत्" इति प्रधानमेव जगत्कारणत्वेनाभिधीयत इति; नेत्युच्यते, तत्राप्यव्याकृतशब्देनाव्याकृतशरीरं ब्रह्मैवाभिधीयते [७]"स एष इह प्रविष्ट आनखाग्रेभ्यः पश्यंश्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मन आत्मेत्येवोपासीत" इत्यत्र[८]"स एषः" इति तच्छब्देनाव्याकृतशब्दनिर्दिष्टस्यान्तः प्रविश्य प्रशासितृत्वेनानुकर्षात्, [८]"तत्सृष्ट्वा तदेवानुप्राविशत्" [९]"अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति स्रष्टुस्सर्वज्ञस्य परस्य ब्रह्मणः कार्यानुप्रवेशनामरूपव्याकरणप्रसिद्धेश्च।[१०]"अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा"

१. तै. आ. ७-१ ॥ २. तै. आ. ५ ॥
३. तै. आ. ६ ॥ ४. तै. आ. ७ ॥
५. तै. आ. ८ ॥
६. छा. ३-१९-१ ॥
७. बृ. ३ ४-७ ॥
८. तै. आ. ६ ॥
९. छा. ६-३-२ ॥
१०. आरणे. १-३.२१ ॥

इति नियमनार्थत्वादनुप्रवेशस्य प्रधानस्याचेतनस्यैवंरूपोऽनुप्रवेशो न सम्भवति। अतः अव्याकृतम्—अव्यकृतशरीरं ब्रह्म १"तन्नामरूपाभ्यां व्याक्रियत" इति तदेवाविभक्तनामरूपं ब्रह्म सर्वज्ञं सत्यसङ्कल्पं स्वेनैव विभक्तनामरूपं स्वयमेव व्याक्रियतेत्युच्यते।एवं च सतीक्षणादयो मुख्या एव भवन्ति। ब्रह्मात्मशब्दावपि निरतिशयबृहत्त्वनियमनार्थव्यापित्वाभावेन प्रधाने न कथंचिदुपपद्येते। अतो ब्रह्मैककारणं जगदिति स्थितम्॥

इति श्रीशारीरकमीमांसाभाष्ये कारणत्वाधिकरणम् ॥ ४ ॥

---

वेदान्तसारे—कारणत्वेनचाकाशादिषु यथाव्यपदिष्टोक्तेः॥ आकाशादिषु कार्यवर्गेषु कारणत्वेन सर्वत्र वेदान्तवाक्येषु२"असद्वा इदमग्र आसीत्" १"तद्धेदन्तर्ह्यव्याकृतमासीत्" इत्यादिष्वनिर्ज्ञातविशेषेषु ३"आत्मा वा इदमेक एवाग्र आसीत् स ईक्षत लोकान्नु सृजै" इति विशेषवाचिवाक्यनिर्दिष्टस्यैवोक्तेः न तान्त्रिकाव्याकृतादिकारणवादप्रसङ्गः॥ १४॥

समाकर्षात्॥ ४"सोऽकामयत। बहु स्यां प्रजायेय"इति पूर्वनिर्दिष्टस्यैव सर्वज्ञस्य २"असद्वा इदमग्र आसीत्" इत्यत्र समाकर्षात्स एवेति गम्यते। १"तद्धेदं तर्ह्यव्याकृतमासीत्" इति निर्दिष्टस्यैव १"स एष इह प्रविष्ट आनखाग्रेभ्यः" ५"पश्यत्यचक्षुः" इत्यत्र समाकर्षात् एष एवाव्याकृत इति निश्चीयते। असदव्याकृतशब्दौ हि तदानीन्नामरूपविभागाभावादुपपद्येते॥ १५॥

इति वेदान्तसारे कारणत्वाधिकरणम् ॥ ४ ॥

---

वेदान्तदीपे—कारणत्वेनचाकाशादिषु यथाव्यपदिष्टोक्तेः॥ जगत्कारणवादीनि वेदान्तवाक्यानि किं प्रधानकारणतावादैकान्तानि, उत ब्रह्मकारणतावादैकान्तानीति संशयः। प्रधानकारणतावादैकान्तानीति पूर्वः पक्षः, ६"सदेव सोम्येदमग्र आसीत्" इति क्वचित्सत्पूर्विका सृष्टिराम्नायते ; अन्यत्र ६"असदेवेदमग्र आसीत्"७"असद्वा इदमग्र आसीत्",तथा१"तद्धेदं तर्ह्यव्या-

---

१. बृ. ३-४-७॥
२. तै. आ. ७-१॥
३. ऐतरेये. १-१॥
४. तै. आ. ६-२॥
५. श्वे. ३-१९॥ ६. छा. ६-२-१॥
७. तै. आ. ७-१॥

कृतमासीत्तन्नामरूपाभ्यां व्याक्रियत" इति। अव्याकृतं हि प्रधानम्। अतः प्रधानकारणतावादनिश्चयात्तदेकान्तान्येव। राद्धान्तस्तु—१"सत्यं ज्ञानमनन्तं ब्रह्म" इत्युपक्रम्य१"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः"२"तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्यादिषु सर्वज्ञस्य परस्य ब्रह्मणः कारणत्वप्रतिपादनात्तस्यैव ब्रह्मणः कारणावस्थायां नामरूपविभागसम्बन्धितया सद्भावाभावात् असदव्याकृतादिशब्देन व्यपदेश इति ब्रह्मकारणतावादैकान्तान्येव। सूत्रार्थस्तु—आकाशादिपदचिह्नितेषु१"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" इत्यादिषु सर्वज्ञस्य परस्य ब्रह्मणः कारणत्वप्रतिपादनात्, सर्वेषु सृष्टिवाक्येषु यथाव्यपदिष्टस्यैव कारणत्वेनोक्तेः ब्रह्मकारणतावादैकान्तानि। यथाव्यपदिष्टं सार्वात्म्यादियुक्ततयाऽस्माभिर्व्यपदिष्टम् ॥ १४ ॥

तथा सति ३"असद्वा इदमग्र आसीत्" इति किं ब्रवीतीत्यत आह—

समाकर्षात्—४"सोऽकामयत। बहु स्यां प्रजायेयेति" इति बहुभवनसङ्कल्पपूर्वकं जगत्सृजतो ब्रह्मणस्सर्वज्ञस्य३"असद्वा इदमग्र आसीत्"इत्यत्र समाकर्षात् कारणावस्थायां नामरूपसम्बन्धित्वाभावेन असदिति ब्रवीति। एवं ५"तद्धेदं तर्ह्यव्याकृतमासीत्" इत्यादिषु५"स एष इहानुप्रविष्ट आनखाग्रेभ्यः"६"पश्यत्यचक्षुः" इत्यादिपूर्वापरपर्यालोचनया तत्रतत्र सर्वज्ञस्य समाकर्षो द्रष्टव्यः॥

इति वेदान्तदीपे कारणत्वाधिकरणम् ॥ ४ ॥

---

( श्रीशारीरकमीमांसाभाष्ये जगद्वाचित्वाधिकरणम् ॥५॥ )

---

# जगद्वाचित्वात् । १ । ४ । १६ ॥

पुनरपि साङ्ख्यः प्रत्यवतिष्ठते—यद्यपि वेदान्तवाक्यानि चेतनं जगत्कारणत्वेन प्रतिपादयन्ति, तथापि तन्त्रसिद्धप्रधानपुरुषातिरिक्तं वस्तु

१. तै. आ. १ ॥
२. छा. ६-२-३ ॥
३. तै. आ. ७-१ ॥
४. तै. आ. ६-२ ॥
५. बृ. ३-४-७ ॥
६. श्वे. ३-१९ ॥

जगत्कारणं वेद्यतया न तेभ्यः प्रतीयते। तथाहि—भोक्तारमेव पुरुषं कारणं वेद्यतयाऽधीयते कौषीतकिनो बालाक्यजातशत्रुसंवादे [1]"ब्रह्म ते ब्रवाणि" इत्युपक्रम्य [1]"यो वै बालक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः" इति। उपक्रमे वक्तव्यतया बालाकिनोपक्षिप्तं ब्रह्माजानते तस्मा एवाजातशत्रुणा [1]"स वै वेदितव्यः" इति ब्रह्मोपदिश्यते। [1]"यस्य वैतत्कर्म" इति कर्मसम्बन्धात्प्रकृत्यध्यक्षो भोक्ता पुरुषो वेदितव्यतयोपदिष्टं ब्रह्मेति निश्चीयते, नार्थान्तरम्, तस्य कर्मसम्बन्धानभ्युपगमात्। कर्म च पुण्यापुण्यलक्षणं क्षेत्रज्ञस्यैव सम्भवति। नच वाच्यम्—क्रियत इति कर्मेति व्युत्पत्त्या प्रत्यक्षादिप्रमाणोपस्थापितं जगदेतत्कर्मेति निर्दिश्यते, यस्यैतत्कृत्स्नं जगत्कर्म, स वेदितव्य इति क्षेत्रज्ञादर्थान्तरमेव प्रतीयते—इति; [1]"यो वै बालक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म" इति पृथङ्निर्देशवैयर्थ्यात्, कर्मशब्दस्य च लोकवेदयोः पुण्यपापरूप एव कर्मणि प्रसिद्धेः। तत्तद्भोक्तृकर्मनिमित्तत्वाज्जगदुत्पत्तेरेतेषां पुरुषाणां कर्तेति च भोक्तुरेवोपपद्यते। तदयमर्थः—एतेषामादित्यमण्डलाद्यधिकरणानां क्षेत्रज्ञभोग्यभोगोपकरणभूतानां पुरुषाणां यः कारणभूतः, एतत्कारणभावहेतुभूतं पुण्यापुण्यलक्षणं च कर्म यस्य, स वै वेदितव्यः—तत्स्वरूपं प्रकृतेर्विविक्तं वेदितव्यम्—इति। तथोत्तरत्र [1]"तौ ह सुप्तं पुरुषमाजग्मतुः तं यष्टिना चिक्षेप" इति सुप्तपुरुषागमनयष्टिघातोत्थापनादीनि च भोक्तृप्रतिपादन एव लिङ्गानि। तथोपरिष्टादपि भोक्तैव प्रतिपाद्यते [2]"तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाःश्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एनं भुञ्जन्ति" इति। तथा [1]"क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्कुत एतदागात्" इति पृष्टमर्थमजानते तस्मै स्वयमेवाजातशत्रुरुवाच [3]"हिता नाम नाड्यस्तासु तदा

१. कौषीतकी. ४. १८॥ २. कौषी ४-२०॥ ३. कौषी. ४-१९॥

भवति यदा सुप्तस्स्वप्नं न कथंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिस्सहाप्येति मनस्सर्वैर्ध्यानैस्सहाप्येति स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतस्सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" इति। सुषुप्त्याधारतया स्वप्नसुषुप्तिजागरितावस्थासु वर्तमानं वागादिकरणाप्ययोद्गमस्थानमेव जीवात्मानम्[१] "अथास्मिन् प्राण एवैकधा भवति" इत्युक्तवान्। अस्मिन् जीवात्मनि प्राणभृत्त्वनिबन्धनोऽयं प्राणशब्दः [१]"स यदा प्रतिबुध्यते" इति प्राणशब्दनिर्दिष्टस्य प्रबोधश्रवणात् मुख्यप्राणस्येश्वरस्य च सुषुप्तिप्रबोधयोरसम्भवात्। अथवा [१]"अस्मिन्प्राणे" इति व्यधिकरणे सप्तम्यौ; अस्मिन्नात्मनि वर्तमाने प्राण एवैकधा भवति वागादिकरणग्राम इति। प्राणशब्दस्य मुख्यप्राणपरत्वेऽपि जीव एवास्मिन्प्रकरणे प्रतिपाद्यते, स्वतः प्राणस्य जीवोपकरणत्वात्। अतो वक्तव्यतयोपक्रान्तं ब्रह्म पुरुष एवेति तद्व्यतिरिक्तेश्वरासिद्धिः। कारणगताश्चेक्षणादयश्चेतनधर्मा अस्मिन्नेवोपपद्यन्त इत्येतदधिष्ठितं प्रधानमेव जगत्कारणम् ॥

(सिद्धान्तः)

इति प्राप्ते प्रचक्ष्महे—जगद्वाचित्वात्—अत्र पुण्यापुण्यपरवशः क्षुद्रः क्षेत्रज्ञस्स्वस्मिन् प्रकृतिधर्माध्यासेन तत्परिणामहेतुभूतः पुरुषो नाभिधीयते; अपितु निरस्तसमस्ताविद्यादिदोषगन्धोऽनवधिकातिशयासङ्ख्येयकल्याणगुणनिधिर्निखिलजगदेककारणभूतः पुरुषोत्तमोऽभिधीयते। कुतः? [२]"यस्य वैतत्कर्म" इत्यत्रैतच्छब्दान्वितस्य कर्मशब्दस्य परमपुरुषकार्यभूतजगद्वाचित्वात्। एतच्छब्दो ह्यर्थप्रकरणादिभिरसङ्कुचितवृत्तिरविशेषेण प्रत्यक्षादिप्रमाणोपस्थापितनिखिलचिदचिन्मिश्रजगद्विषयः। नच पुण्यापुण्यलक्षणं कर्मात्र कर्मशब्दाभिधेयं [२]"ब्रह्म ते ब्रवाणि" इत्युपक्रम्य ब्रह्मत्वेन बालाकिना निर्दिष्टानामादित्यमण्डलाद्यधिकरणानां पुरुषाणाम-

१. कौषी. ४-१९ ॥ २. कौषी. ४-१८ ॥

ब्रह्मत्वेन [१]"मृषा वै खलु मा संवादयिष्ठाः" इति तमब्रह्मवादिनमपोद्य तेनाविदितब्रह्मज्ञानायाजातशत्रुणेदं वाक्यमवतारितं [१]"यो वै बालके" इत्यादि। पुण्यापुण्यलक्षणकर्मसम्बन्धिन आदित्याद्यधिकरणास्तत्सजातीयाश्च पुरुषास्तेनैव विदिता इति तदविदितपुरुषविशेषज्ञापनपरोऽयं कर्मशब्दो न पुण्यापुण्यमात्रवाची; क्रियामात्रवाची वा; अपि तु कृत्स्नस्य जगतः कार्यत्ववाची। एवमेव खल्वविदितोऽर्थ उपदिष्टो भवति। पुरुषस्य कर्मसम्बन्धोपलक्षितस्वाभाविकस्वरूपस्याज्ञातस्य वेदितव्यत्वोपदेशे च लक्षणा, कर्मसम्बन्धमात्रस्यैव वेदितव्यस्वरूपलक्षणत्वाद्यस्य कर्म स वेदितव्य इत्येतावतैव तत्सिद्धेः, [१]"यस्य वैतत्कर्म" इत्येतच्छब्दवैयर्थ्यं च। [१]"य एतेषां कर्ता यस्य वैतत्कर्म" इति पृथङ्निर्देशस्य चायमभिप्रायः–ये त्वया ब्रह्मत्वेन निर्दिष्टाः पुरुषाः, तेषां यः कर्ता, ते यत्कार्यभूताः, किं विशिष्याभिधीयते, कृत्स्नं जगद्यस्य कार्यम्, उत्कृष्टा अपकृष्टाश्चेतना अचेतनाश्च सर्वे पदार्था यत्कार्यत्वे तुल्याः, स परमकारणभूतः पुरुषोत्तमो वेदितव्यः–इति। जगदुत्पत्तेर्जीवकर्मनिबन्धनत्वेऽपि न जीवस्स्वभोग्यभोगोपकरणादेस्स्वयमुत्पादकः, अपि तु स्वकर्मानुगुण्येनेश्वरसृष्टं सर्वं भुङ्क्ते; अतो न तस्य पुरुषान्प्रति कर्तृत्वमुपपद्यते। अतस्सर्ववेदान्तेषु परमकारणतया प्रसिद्धं परं ब्रह्मैवात्र वेदितव्यतयोपदिश्यते ॥ १६ ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम्। १। ४। १७॥

अथ यदुक्तम्–जीवलिङ्गान्मुख्यप्राणसङ्कीर्तनाच्च लिङ्गाज्जीवोक्तैवास्मिन्प्रकरणे प्रतिपाद्यते, न परमात्मा–इति; तद्व्याख्यातम्—तस्य नि-

---

१. कौषी. ४-१८ ॥

र्वाहः प्रतर्दनविद्यायामभिहितः। एतदुक्तं भवति—यत्रोपक्रमोपसंहारपर्यालोचनया ब्रह्मपरं वाक्यमिति निश्चितम्, तत्रान्यलिङ्गानि तदनुरोधेन वर्णनीयानीति तत्र प्रतिपादितम्। अत्राप्युपक्रमे [१]"ब्रह्म ते ब्रवाणि" इति ब्रह्मोपक्षिप्तम्; मध्ये च [१]"यस्य वैतत्कर्म" इति निर्दिष्टं न पुरुषमात्रम्, अपि तु निखिलजगदेककारणं ब्रह्मैवेत्युक्तम्। उपसंहारे च [२]"सर्वान्पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद" इति ब्रह्मोपासनैकान्तं सर्वपापापहतिपूर्वकं स्वाराज्यं च फलं श्रुतम्; अतोऽस्य वाक्यस्य ब्रह्मपरत्वनिश्चयेन जीवमुख्यप्राणलिङ्गान्यपि तत्परतया वर्णनीयानि—इति। प्रातर्दने ह्युपासात्रैविध्येन जीवमुख्यप्राणलिङ्गानां ब्रह्मपरत्वमुक्तम्; अत्रापि [३]"अथास्मिन्प्राण एवैकधा भवति" इति सामानाधिकरण्यसम्भवे वैयधिकरण्यसमाश्रयणायोगाद्ब्रह्मण्येव प्राणशब्दप्रयोगनिश्चयेन च प्राणशरीरकब्रह्मोपासनार्थं प्राणसङ्कीर्तनं लिङ्गं युज्यते ॥ १७ ॥

जीवलिङ्गानां पुनः कथं ब्रह्मपरत्वमित्यत्राह—

## अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके। १। ४। १८॥

तुशब्दो जीवसङ्कीर्तनेन वाक्यस्य तत्परत्वसम्भावनाव्यावृत्त्यर्थः। अन्यार्थं जीवसङ्कीर्तनं जीवातिरिक्तब्रह्मस्वरूपप्रतिबोधनार्थमिति जैमिनिराचार्यो मन्यते। कुतः? प्रश्नव्याख्यानाभ्याम्; प्रश्नस्तावत् [१]"तौ ह सुप्तं पुरुषमाजग्मतुः" इत्यादिना सुप्तस्य प्रबुद्धप्राणस्यैव प्राणनामभिरामन्त्रणाश्रवणयष्टिघातोत्थापनाभ्यां प्राणादिव्यतिरिक्तं जीवं प्रतिबोध्य

१. कौषी. ४-१८ ॥
२. कौषी. ४-२०
३. कौषी. ४-१९ ॥

पुनर्जीवव्यतिरिक्तब्रह्मप्रतिबोधनपरो दृश्यते [1]"क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्कुत एतदागात्" इति। व्याख्यानमपि [2]"यदा सुप्तस्स्वप्नं न कथञ्चन पश्यत्यथास्मिन्प्राण एवैकधा भवति एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" इति जीवादर्थान्तरभूतपरमात्मपरमेव। सुषुप्तस्य हि जीवस्य यत्रोषितस्य जागरितस्वप्नदशासम्बन्धिविचित्रसुखदुःखानुभवकालुष्यविरहेण संप्रसन्नस्य स्वस्थतापत्तिः, पुनरप्यस्य यस्माद्भोगाय निष्क्रमणम्, सोऽयं परमात्मा। तथाहि [3]"सता सोम्य तदा सम्पन्नो भवति" [4]"प्राज्ञेनाऽत्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इति सुषुप्त्याधारतया प्रसिद्धो जीवादर्थान्तरभूतः प्राज्ञः परमात्मा। अतः प्रश्नप्रतिवचनाभ्यां जीवसङ्कीर्तनं जीवादर्थान्तरभूतपरमात्मप्रतिपादनार्थमिति निश्चीयते। यदुक्तं प्रश्नव्याख्याने जीवपरे सुषुप्तिस्थानं च नाड्य एव, करणग्रामश्च प्राणशब्दनिर्दिष्टे जीव एवैकधा भवति–इति; तदयुक्तम्, नाडीनां स्वप्नस्थानत्वात्, उक्तरीत्या ब्रह्मण एव सुषुप्तिस्थानत्वाच्च। प्राणशब्दनिर्दिष्टे ब्रह्मण्येव जीवस्य तदुपकरणभूतवागादिकरणग्रामस्य चैकतापत्तिविभागवचनाच्च। अपि चैवमेके–वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसंवादे सुषुप्ताद्विज्ञानमयाद्भेदेन तदाश्रयभूतं परमात्मानमामनन्ति [5]"य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत्कुत एतदागात्" [6]"यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदैतेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते" इति। आकाशशब्दश्च परमात्मनि प्रसिद्धः [7]"दहरोऽस्मिन्नन्तर आकाशः" इति। अतोऽत्र जीवसङ्कीर्तनं तस्मादर्थान्तरभूतस्य प्राज्ञस्य परस्य ब्रह्मणः प्रतिबोधनार्थमित्यवगम्यते।

---

१. कौषी. ४-१८ ॥
२. कौषी. ४-१९ ॥
३. छा. ६-८-१ ॥
४. बृ. ६-३-२१ ॥
५. ६. बृ. ४-१-१६-१७ ॥
७. छा. ८-१-१ ॥

तस्मादस्मिन्वाक्ये पुरुषादर्थान्तरभूतस्य निखिलजगत्कारणस्य परस्यैव ब्रह्मणो वेदितव्यतयाऽभिधानान्न तन्त्रसिद्धस्य पुरुषस्य तदधिष्ठितस्य वा प्रधानस्य कारणत्वं क्वचिदपि वेदान्ते प्रतीयत इति स्थितम्॥ १८ ॥

इति श्रीशारीरकमीमांसाभाष्ये जगद्वाचित्वाधिकरणम् ॥ ५ ॥

---

वेदान्तसारे–जगद्वाचित्वात् ॥ १"ब्रह्म ते ब्रवाणि" इत्युपक्रम्य १"यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः इत्यत्र कर्मशब्दस्यैतच्छब्दसामानाधिकरण्येन क्रियत इति व्युत्पत्त्या जगद्वाचित्वात् परमेव ब्रह्म वेदितव्यतयोपदिष्टम् ॥ १६ ॥

जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ २"एतैरात्मभिर्भुङ्क्ते" ३"अथास्मिन्प्राण एवैकधा भवति" इति च जीवादिलिङ्गान्न पर इति चेत्—एतत् प्रतर्दनविद्यायामेव परिहृतम्—पूर्वापरपर्यालोचनया ब्रह्मपरत्वे निश्चिते तदनुगुणतया नेयमन्यल्लिङ्गम्—इति ॥ १७ ॥

अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपिचैवमेके ॥ १"तौ ह सुप्तं पुरुषमाजग्मतुः" इत्यादिना देहातिरिक्तजीवसद्भावप्रतिपादनं तदतिरिक्तपरमात्मसद्भावज्ञापनार्थमिति, "क्वैष एतद्बालाके पुरुषोऽशयिष्ट" इति प्रश्नात्, ३"अथास्मिन्प्राण एवैकधा भवति" ४"सता सोम्य तदा सम्पन्नो भवति"इति वाक्यसमानार्थकात् प्रतिवचनाच्चावगम्यते। एके वाजसनेयिनोऽपि एतत्प्रतिवचनसरूपं वाक्यं स्पष्टमधीयते च, १"क्वैष एतत्" इत्यादि, ५"य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते" इत्यन्तम् ॥ १८ ॥

इति वेदान्तसारे जगद्वाचित्वाधिकरणम् ॥ ५ ॥

---

वेदान्तदीपे–जगद्वाचित्वात् ॥ कौषीतकिना १"ब्रह्म ते ब्रवाणि" इत्युपक्रम्य १"यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदित-

---

१. कौषी. ४-१८ ॥
२.
३. कौषी. ४-१९ ॥
४. छा. ६-८-१ ॥
५. बृ. ४-१-१७ ॥

व्यः'' इत्यत्र वेदितव्यतयोपदिष्टः साङ्ख्यतन्त्रसिद्धः पुरुषः, उत परमात्मेति संशयः।पुरुषएव प्रकृतिवियुक्त इति पूर्वः पक्षः १''यस्य वैतत्कर्म''इति पुण्यपापरूपकर्मसम्बन्धितयोपलक्षितत्वात्। राद्धान्तस्तु १''यस्य वैतत्कर्म''इति कर्मशब्दस्य क्रियत इति व्युत्पत्त्या जगद्वाचित्वात् कृत्स्नं जगद्यस्य कार्यम्, स परमपुरुष एव वेदितव्यतयोपदिष्टो भवतीति । सूत्रमपि व्याख्यातम् ॥ १६ ॥

जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥ २''एवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते'' इत्यादिभोक्तृत्वरूपजीवलिङ्गात्, ३''अथास्मिन्प्राण एवैकधा भवति'' इति मुख्यप्राणलिङ्गाच्च नायं परमात्मेति चेत्—तस्य परिहारः प्रतर्दनविद्यायामेव व्याख्यातः—पूर्वापरप्रकरणपर्यालोचनया परमात्मपरमिदं वाक्यमिति निश्चिते सति अन्यलिङ्गानि तदनुगुणतया नेतव्यानीत्यर्थः ॥ १७ ॥

ननु १''तौ ह सुप्तं पुरुषमाजग्मतुः'' इति प्राणनामभिरामन्त्रणाश्रवणयष्टिघातोत्थापनादिना शरीरेन्द्रियप्राणाद्यतिरिक्तजीवात्मसद्भावप्रतिपादनपरमिदं वाक्यमित्यवगम्यत इत्यत उत्तरं पठति—

अन्यार्थन्तु जैमिनिः प्रश्नव्याख्यानाभ्यामपिचैवमेके ॥ तुशब्दश्शङ्कानिवृत्त्यर्थः । जीवसङ्कीर्तनम् अन्यार्थम्—जीवातिरिक्तब्रह्मसद्भावप्रतिबोधनार्थमिति प्रश्नप्रतिवचनाभ्यामवगम्यते । प्रश्नस्तावज्जीवप्रतिपादनानन्तरं १''क्वैष एतद्बालाके पुरुषोऽशयिष्ट'' इत्यादिकः सुषुप्तजीवाश्रयविषयतया परमात्मपर इति निश्चितः। प्रतिवचनमपि३''अथास्मिन्प्राण एवैकधा भवति'' इत्यादिकं परमात्मविषयमेव । सुप्तपुरुषाश्रयतया हि प्राणशब्दनिर्दिष्टः परमात्मैव४''सता सोम्य तदा सम्पन्नो भवति'' इत्यादिभ्यः । जैमिनिग्रहणमुक्तस्यार्थस्य पूज्यत्वाय । अपिचैवमेके—एके वाजसनेयिनः इदमेव बालाक्यजातशत्रुसंवादगतं प्रश्नप्रतिवचनरूपं वाक्यं परमात्मविषयं स्पष्टमधीयते१''क्वैष एतत्'' इत्यादि ५''य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते'' इत्येतदन्तम् ॥ १८ ॥

इति वेदान्तदीपे जगद्वाचित्वाधिकरणम् ॥ ५ ॥

---

१. कौषी. ४-१८ ॥
२.
३. कौषी. ४-१९ ॥
४. छा. ६-८-१ ॥
५. बृ. ४-१-१७ ॥

## वाक्यान्वयात् । १ । ४ । १९ ॥

अत्रापि कापिलतन्त्रसिद्धपुरुषतत्त्वावेदनपरं वाक्यं क्वचिद्दृश्यत इति तदरिक्त ईश्वरो नाम न कश्चित्सम्भवतीत्याशङ्क्य निराकरोति । बृहदारण्यके मैत्रेयीब्राह्मणे श्रूयते[१] "न वा अरे पत्युः कामाय पतिः प्रियो भवति" इत्यारभ्य [१]"न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" इति । तत्र संशयः–किमस्मिन्वाक्ये द्रष्टव्यतयोपदिश्यमानस्तन्त्रसिद्धः पुरुष एव? अथवा सर्वज्ञस्सत्यसङ्कल्पस्सर्वेश्वरः? इति। किं युक्तम्? पुरुष इति। कुतः? आदिमध्यावसानेषु पुरुषस्यैव प्रतीतेः; उपक्रमे तावत्पतिजायापुत्रवित्तपश्वादिप्रियत्वयोगाज्जीवात्मैव प्रतीयते;मध्येऽपि[२]"विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ति" इत्युत्पत्तिविनाशयोगात्स एवावगम्यते; तथाऽन्तेच [३]"विज्ञातारमरे केन विजानीयात्" इति स एव ज्ञाता क्षेत्रज्ञ एव प्रतीयते,नेश्वरः। अतस्तन्त्रसिद्धपुरुषप्रतिपादनपरमिदं वाक्यमिति निश्चीयते । ननु "अमृतत्वस्य तु नाशाऽस्ति वित्तेन" इत्युपक्रमादमृतत्वप्राप्त्युपायोपदेशपरमिदं वाक्यमित्यवगम्यते। तत्कथं पुरुषप्रतिपादनपरत्वमस्य वाक्यस्य;तदुच्यते–अत एव ह्यत्र पुरुषप्रतिपादनम् । तन्त्रे ह्यचिद्धर्माध्यासवियुक्तपुरुषस्वरूपयाथात्म्यविज्ञानमेवामृतत्वहेतुत्वेनोच्यते। अतो जीवात्मनः प्रकृतिवियुक्तं स्वरूपमिहामृतत्वाय [१]"आत्मा वा अरे द्रष्टव्यः" इत्यादिनोपदिश्यते। सर्वेषामात्मनां प्रकृतिवियुक्तस्वात्मयाथात्म्यविज्ञानेन सर्व एवात्मानो विदिता भवन्तीत्यात्मवि-

१. बृ. ६-५-६ ॥
२. बृ. ४-४-१२ ॥
३. बृ. ६-५-१५ ॥

ज्ञानेन सर्वविज्ञानमुपपन्नम्; देवादिस्थावरान्तेषु सर्वेषु भूतेष्वात्मस्वरूपस्य ज्ञानैकप्रकारत्वात् [1]"इदं सर्वं यदयमात्मा" इत्यैकात्म्योपदेशः; देवाद्याकाराणामनात्माकारत्वात् [1]"सर्वं तं परादात्" इत्यादिनाऽन्यत्वनिषेधश्च; [2]"यत्र हि द्वैतमिव भवति" इति च नानात्वनिषेधेनैकस्वरूपे ह्यात्मनि देवादिप्रकृतिपरिणामभेदेन नानात्वं मिथ्येत्युच्यते; [3]"तस्य ह वा एतस्य महतो भूतस्य निश्श्वसितमेतद्यदृग्वेदः" इत्याद्यपि प्रकृतेरधिष्ठातृत्वेन पुरुषनिमित्तत्वाज्जगदुत्पत्तेरुपपद्यते। एवमस्मिन्वाक्ये पुरुषपरे निश्चिते सति तदैकार्थ्यात्सर्वे वेदान्तास्तन्त्रसिद्धं पुरुषमेवाभिदधतीति तदधिष्ठिता प्रकृतिरेव जगदुपादानम्, नेश्वरः—इति॥

(सिद्धान्तः)

एवं प्राप्ते प्रचक्ष्महे—वाक्यान्वयात्—इति। सर्वेश्वर एवास्मिन्वाक्ये प्रतीयते;कुतः?एवमेवहि वाक्यावयवानामन्योन्यान्वयस्समञ्जसो भवति। [4]"अमृतत्वस्य तु नाशाऽस्ति वित्तेन" इति याज्ञवल्क्येनाभिहिते [4]"येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहि" इत्यमृतत्वानुपायतया वित्ताद्यनादरेणामृतत्वप्राप्त्युपायमेव प्रार्थयमानायै मैत्रेय्यै तदुपायतया द्रष्टव्यत्वेनोपदिष्टोऽयमात्मा परमात्मैव [5]"तमेव विदित्वाऽतिमृत्युमेति" [6]"तमेवं विद्वानमृत इह भवति नान्यः पन्थाः" इत्यादिभिरमृतत्वस्य परमपुरुषवेदनैकोपायतया प्रतिपादनात्। परमपुरुषविभूतिभूतस्य प्राप्तुरात्मनस्स्वरूपयाथात्म्यमपवर्गसाधनपरमपुरुषवेदनोपयोगितयाऽवगन्तव्यम्; न स्वत एवोपायत्वेन। अतोऽत्र परमात्मैवामृतत्वोपायतया [7]"द्रष्टव्यः" इत्यादिनोपदिश्यते। तथा [8]"तस्य ह वा एतस्य

१. बृ. ६-५-७॥
२. बृ. ६-५-१५॥
३. बृ. ६-५-११॥
४. बृ. ६-५-३,४॥
५. श्वे. ३-८॥
६. पुरुषसू॥
७. बृ. ६-५-६॥
८. बृ. ६-५-११॥

महतो भूतस्य निश्श्वसितमेतद्यदृग्वेदः" इत्यादिना कृत्स्नस्य जगतः कारणत्वमुच्यमानं परमपुरुषादन्यस्य कर्मपरवशस्य मुक्तस्य निर्व्यापारस्य च पुरुषमात्रस्य न सम्भवति। तथा [१]"आत्मनो वा अरे दर्शनेन" इत्यादिना एकविज्ञानेन सर्वविज्ञानमभिधीयमानं सर्वात्मभूते परमात्मन्येवावकल्पते। यत्त्वेतदेकरूपत्वादात्मनामेकात्मविज्ञानेन सर्वात्मविज्ञानमुच्यत इति; तदयुक्तम्, अचेतनप्रपञ्चज्ञानाभावेन सर्वविज्ञानाभावात्। प्रतिज्ञोपपादनाय च [२]"इदं ब्रह्मेदं क्षत्रम्" इत्युपक्रम्य [२]"इदं सर्वं यदयमात्मा" इति प्रत्यक्षादिसिद्धं चिदचिन्मिश्रं प्रपञ्चम् 'इदम्' इति निर्दिश्य 'एतदयमात्मा' इत्यैकात्म्योपदेशश्च परमात्मन एवोपपद्यते। नहीदंशब्दवाच्यं चिदचिन्मिश्रं जगत्पुरुषेणाचित्संसृष्टेन तद्वियुक्तेन स्वरूपेण वाऽवस्थितेन चैक्यमुपगच्छति। अतएव [२]"सर्वं तं परादाद्योऽन्यत्राऽत्मनस्सर्वं वेद" इति व्यतिरिक्तत्वेन सर्ववेदननिन्दा च; तथा प्रथमेच मैत्रेयीब्राह्मणे [३]"महद्भूतमनन्तमपारम्" इति श्रुता महत्त्वादयो गुणाः परमात्मन एव सम्भवन्ति। अतस्स एवात्र प्रतिपाद्यते। यत्तूक्तं पतिजायापुत्रवित्तपश्वादिप्रियान्वयिनो जीवात्मन उपक्रमे त्वन्वेष्टव्यतया प्रतिपादनात्तद्विषयमेवेदं वाक्यमिति; तदयुक्तम्, [४]"आत्मनस्तु कामाय" इत्यात्मशब्देन जीवात्मसंशब्दने तस्य "आत्मा वा अरे द्रष्टव्यः"इत्यनेनानन्वयप्रसङ्गात्। [४]"आत्मा वा अरे द्रष्टव्यः" इत्यात्मनो द्रष्टव्यत्वोपयोगितया [४]"आत्मनस्तु कामाय"इत्युपदिष्टमिति प्रतीयते। आत्मनस्तु कामाय–आत्मनः कामसम्पत्तये; काम्यन्त इति कामाः;आत्मन इष्टसम्पत्तय इति यावत्।नच–जीवात्मन इष्टसम्पत्तये पत्यादयः प्रिया भवन्ति–इत्युक्ते सति तस्य जीवस्य स्वरूपमन्वेष्टव्यं भवति।

१. बृ. ४-४-५ ॥
२. बृ. ६-५-७ ॥
३. बृ. ४-४-१२ ॥
४. बृ. ६-५-६ ॥

प्रियमेव ह्यन्वेष्टव्यम् ; नतु प्रियं प्रति शेषिणः प्रियवियुक्तं स्वरूपम् । यस्मादात्मन इष्टसम्पत्तये पत्यादयः प्रिया भवन्ति, तस्मात्पत्यादि प्रियं परित्यज्य तद्वियुक्तमात्मस्वरूपमन्वेष्टव्यमित्यसङ्गतं भवति । प्रत्युत न पत्यादिशेषतया पत्यादीनां प्रियत्वम् ; अपित्वात्मनश्शेषतया पत्यादीनां प्रियत्वमित्युक्ते स्वशेषतया त एवोपादेयास्स्युः । [1]“आत्मनस्तु कामाय सर्वं प्रियं भवति” इत्यस्य परेणानन्वये वाक्यभेदः प्रसज्यते । अभ्युपगम्यमानेऽपि वाक्यभेदे पूर्ववाक्यस्य न किञ्चित्प्रयोजनं दृश्यते । अतः पत्यादि सर्वं प्रियं परित्यज्यात्मन एवान्येष्टव्यत्वं यथा प्रतीयते, तथा वाक्यार्थो वर्णनीयः; सोऽयमुच्यते—[2]“अमृतत्वस्य तु नाशाऽस्ति वित्तेन” इति वित्तादीनां नित्यनिर्दोषनिरतिशयानन्दरूपामृतत्वप्राप्त्यनुपायतामुक्त्वा वित्तपुत्रपतिजायादीनां सातिशयदुःखमिश्रकादाचित्कप्रियत्वमनुभूयमानं न पत्यादिस्वरूपप्रयुक्तम्, अपितु निरतिशयानन्दस्वभावपरमात्मप्रयुक्तम् । अतो य एव स्वयं निरतिशयानन्दस्सन्नन्येषामपि प्रियत्वलेशास्पदत्वमापादयति, स परमात्मैव द्रष्टव्य इत्युपदिश्यते। तदयमर्थः—[1]“न वा अरे पत्युः कामाय पतिः प्रियो भवति” न हि पतिजायापुत्रवित्तादयो मत्प्रयोजनायाहमस्य प्रियस्स्यामिति स्वसङ्कल्पात्प्रिया भवन्ति; अपि त्वात्मनः कामाय परमात्मनस्स्वाराधकप्रियप्रतिलम्भनरूपेष्टनिर्वृत्तय इत्यर्थः । परमात्मा हि कर्मभिराराधितस्तत्तत्कर्मानुगुणं प्रतिनियतदेशकालस्वरूपपरिमाणमाराधकानां तत्तद्वस्तुगतं प्रियत्वमापादयति [3]“एष ह्येवानन्दयाति” इति श्रुतेः। न तु तत्तद्वस्तु स्वरूपेण प्रियमप्रियंवा। यथोक्तं—
[4]“तदेव प्रीतये भूत्वा पुनर्दुःखाय जायते । तदेव कोपाय यतः प्रसादाय च जायते ॥ तस्माद्दुःखात्मकं नास्ति न च किञ्चित्सुखात्मकम्” इति ।

---

१. बृ. ६-५-६ ॥
२. बृ ६-५-३ ॥
३. तै. आ. ७ ॥
४.

[१]"आत्मनस्तु कामाय" इत्यस्य जीवात्मपरत्वेऽपि [१]"आत्मा वा अरे द्रष्टव्यः" इति तु परमात्मविषयमेव। तत्रायमर्थः–यस्मात्पत्यादीनामिष्टसम्पत्तये तत्परवशेन पत्यादयः प्रियत्वेन नोपादीयन्ते, अपित्वात्मेष्टसम्पत्तये स्वतन्त्रेण स्वप्रियत्वेनोपादीयन्ते ; तस्माद्य एवाऽत्मनो निरुपाधिकनिर्दोषनिरवधिकप्रियः परमात्मा;स एवहि द्रष्टव्यः;न दुःखमिश्राल्पसुखदुःखोदर्काः परायत्ततत्तत्स्वभावाः पतिजायापुत्रवित्तादयो विषयाः—इति। अस्मिंस्तु प्रकरणे जीवात्मवाचिशब्देनापि परमात्मन एवाभिधानात् [१]"आत्मनस्तु कामाय" [१]"आत्मा वा अरे द्रष्टव्यः" इति पूर्वोक्तप्रक्रिययोभयत्रात्मशब्दावेकविषयौ ॥ १९ ॥

मतान्तरेणापि जीवशब्देन परमात्माभिधानोपपादनायाह—

## प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः । १ । ४ । २० ॥

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धेरिदं लिङ्गम्, यज्जीवात्मवाचिशब्दैः परमात्मनोऽभिधानम्–इत्याश्मरथ्य आचार्यो मन्यतेस्म। यद्ययं जीवः परमात्मकार्यतया परमात्मैव न भवेत्,तदा तद्व्यतिरिक्ततया परमात्मविज्ञानादेतद्विज्ञानं न सेत्स्यति।[२]"आत्मा वा इदमेक एवाग्र आसीत्" इति प्राक्सृष्टेरेकत्वावधारणात्, [३]"यथा सुदीप्तात्पावकाद्विस्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद्विविधास्सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति" इत्यादिभिर्ब्रह्मणो जीवानामुत्पत्तिश्रवणात्तस्मिन्नेव लयश्रवणाच्च जीवानां ब्रह्मकार्यत्वेन ब्रह्मणैक्यमवगम्यते।अतो जीवशब्देन परमात्माभिधानमिति ॥ २० ॥

## उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ।१।४।२१॥

---

१. बृ. ६-५-६ ॥
२. ऐतरेये. १-१-१ ॥
३. मु. २-१-१ ॥

यदुक्तं जीवस्य ब्रह्मकार्यतया ब्रह्मणैक्येनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनार्थं ब्रह्मणो जीवशब्देन प्रतिपादनमिति, तदयुक्तं [१]"न जायते म्रियते वा विपश्चित्" इत्यादिनाऽजत्वश्रुतेर्जीवात्मनां प्राचीनकर्मफलभोगाय जगत्सृष्ट्यभ्युपगमाच्च, अन्यथा विषमसृष्ट्यनुपपत्तेश्च, ब्रह्मकार्यस्य जीवस्य ब्रह्मतापत्तिलक्षणो मोक्ष आकाशादिवदर्जनीय इति तदुपायविधानानुष्ठानानर्थक्याच्च, घटादिवत्कारणप्राप्तेर्विनाशरूपत्वेन मोक्षस्यापुरुषार्थत्वाच्च। जीवात्मन उत्पत्तिप्रलयवादोपपत्तिरुत्तरत्र प्रपञ्चयिष्यते। अतः [२]"एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" [३]"यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इत्युत्क्रमिष्यतः परमात्मभावाज्जीवशब्देन परमात्मनोऽभिधानमित्यौडुलोमिराचार्यो मन्यतेस्म ॥ २१ ॥

## अवस्थितेरिति काशकृत्स्नः । १ । ४ । २२ ॥

यदुक्तमुत्क्रमिष्यतो जीवस्य ब्रह्मभावाद्ब्रह्मणस्तच्छब्देनाभिधानमिति; तदप्ययुक्तम्, विकल्पासहत्वात्। अस्य जीवात्मन उत्क्रान्तेः पूर्वमनेवम्भावः किं स्वाभाविकः; उतौपाधिकः; तत्रापि पारमार्थिकः, अपारमार्थिको वेति। स्वाभाविकत्वे ब्रह्मभावो नोपपद्यते, भेदस्य स्वरूपप्रयुक्तत्वेन स्वरूपे विद्यमाने तदनपायात्। अथ भेदेन सह स्वरूपमप्यपैतीति, तथा सति विनष्टत्वादेव तस्य न ब्रह्मभावः, अपुरुषार्थत्वादिदोषप्रसङ्गश्च। पारमार्थिकौपाधिकत्वे प्रागपि ब्रह्मैवेति 'उत्क्रमिष्यत एवम्भावात्' इति विशेषो न युज्यते वक्तुम्। अस्मिन्पक्षेऽह्युपाधिब्रह्मव्यतिरेकेण वस्त्वन्तराभावान्निरवयवस्य ब्रह्मण उपाधिना च्छेदाद्यसम्भवाच्चोपाधिगत एव भेद इत्युत्क्रान्तेः प्रागपि ब्रह्मैव। औपाधिकस्य भेदस्यापारमार्थि-

१. कठ. १-२-१८ ॥ २. छा. ८-३-४ ॥ ३. मु. ३-२-८ ॥

कत्वे कस्यायमुत्क्रान्तौ ब्रह्मभाव इति वक्तव्यम्;ब्रह्मण एवाविद्योपाधितिरोहितस्वस्वरूपस्येति चेन्न, नित्यमुक्तस्वप्रकाशज्ञानस्वरूपस्याविद्योपाधितिरोधानासम्भवात्। तिरोधानं नाम वस्तुस्वरूपे विद्यमाने तत्प्रकाशनिवृत्तिः । प्रकाश एव वस्तुस्वरूपमित्यङ्गीकारे तिरोधानाभावस्स्वरूपनाशो वा स्यात् । अतो नित्याविर्भूतस्वस्वरूपत्वात्तस्योत्क्रान्तौ ब्रह्मभावे न कश्चिद्विशेष इति 'उत्क्रमिष्यतः' इति विशेषणं व्यर्थमेव । [१]"अस्माच्छरीरात्समुत्थाय" इति पूर्वमनेवंरूपस्य न तदानीं ब्रह्मतापत्तिमाह; अपितु पूर्वसिद्धस्वरूपस्याविर्भावम्। तथाहि वक्ष्यते [२]"सम्पद्याविर्भावस्स्वेनशब्दात्" इत्यादिभिः। अतः [३]"अनेन जीवेनाऽत्मनाऽनुप्रविश्य" [४]"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" [५]"योऽक्षरमन्तरे सञ्चरन्यस्याक्षरं शरीरं यमक्षरं न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" [६]"अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा" इति स्वशरीरभूते जीवात्मन्यात्मतयाऽवस्थितेर्जीवशब्देन ब्रह्मप्रतिपादनमिति काशकृत्स्न आचार्यो मन्यते स्म। जीवशब्दश्च जीवस्य परमात्मपर्यन्तस्यैव वाचको न जीवमात्रस्येति पूर्वमेवोक्तम् [३]"नामरूपे व्याकरवाणि" इत्यत्र। एवमात्मशरीरभावेन तादात्म्योपपादने परस्य ब्रह्मणोऽपहतपाप्मत्वसर्वज्ञत्वादिगोचरा जीवस्याविदुषश्शोचतो ब्रह्मोपासनान्मोक्षवादिन्यो जगत्सृष्टिप्रलयाभिधायिन्यो जगतो ब्रह्मतादात्म्योपदेशपराश्च सर्वाश्श्रुतयस्सम्यगुपपादिता भवन्तीति काशकृत्स्नीयमेव मतं सूत्रकारस्स्वीकृतवान्।अयमत्र वाक्यार्थः—

---

१. छा. ८-३-४ ॥
२. शारी. ४-४-१ ॥
३. छा. ६-३-२ ॥
४. बृ. ५-७-२२ ॥ मा. पा ॥
५. सुबाल. ७ ॥
६. आर. ३-३-२१ ॥

अमृतत्वोपाये मैत्रेय्या पृष्टे याज्ञवल्क्यः–[1]"आत्मा वा अरे द्रष्टव्यः" इत्यादिना परमात्मोपासनममृतत्वोपायमुक्त्वा [1]"आत्मनि खल्वरे दृष्टे" इत्यादिनोपास्यलक्षणम्, दुन्दुभ्यादिदृष्टान्तैश्चोपासनोपकरणभूतमनःप्रभृतिकरणनियमनं च सामान्येनाभिधाय [2]"स यथाऽऽर्द्रैधाग्नेः" इत्यादिना [3]"स यथा सर्वासामपां समुद्र एकायनम्"इत्यादिना चोपास्यभूतस्य परस्य ब्रह्मणो निखिलजगदेककारणत्वम्, सकलविषयप्रवृत्तिमूलकरणग्रामनियमनं च विस्तीर्णमुपदिश्य [4]"स यथा सैन्धवघनः" इत्यादिनाऽमृतत्वोपायप्रवृत्तिप्रोत्साहनाय जीवात्मस्वरूपेणावस्थितस्य परमात्मनोऽपरिच्छिन्नज्ञानैकाकारतामुपपाद्य तस्यैवापरिच्छिन्नज्ञानैकाकारस्य संसारदशायां भूतपरिणामानुवृत्तिं [5]"विज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति"इत्यभिधाय [5]"न प्रेत्य संज्ञाऽस्ति" इति मोक्षदशायां स्वाभाविकापरिच्छिन्नज्ञानसङ्कोचाभावेन भूतसङ्घातेनैकीकृत्याऽत्मनि देवादिरूपज्ञानाभावमुक्त्वा पुनरपि [6]"यत्र हि द्वैतमिव भवति" इत्यादिना अब्रह्मात्मकत्वेन नानाभूतवस्तुदर्शनमज्ञानकृतमिति निरस्तनिखिलाज्ञानस्य ब्रह्मात्मकं कृत्स्नं जगदनुभवतो ब्रह्मव्यतिरिक्तवस्त्वन्तराभावेन भेददर्शनं निरस्य [6]"येनेदं सर्वं विजानाति तं केन विजानीयात्" इतिच जीवात्मा स्वात्मतयाऽवस्थितेन येन परमात्मना आहितज्ञानस्सन्निदं सर्वं विजानाति, अयं तं केन विजानीयात्, न केनापीति परमात्मनो दुरवगमत्वमुपपाद्य [7]"स एष नेतिनेति" इत्यादिनाऽयं सर्वेश्वरस्स्वेतरसमस्तचिदचिद्वस्तुविलक्षणस्वरूप एव सर्वशरीरस्सर्वस्याऽत्मतयाऽवस्थित इति स्वशरीरभूतचिदचिद्वस्तुगतैर्दोषैर्न स्पृश्यत इत्य-

---

१. बृ. ६-५-६ ॥
२. बृ. ४-४-१० ॥
३. बृ. ४-४-११ ॥ ४. बृ. ६-५-१३॥
५. बृ. ४-४-१२ ॥
६. बृ. ४-४-१४ ॥
७. बृ. ६-५-१५ ॥

भिधाय [1]"विज्ञातारमरे केन विजानीयादित्युक्तानुशासनाऽसि मैत्रेय्येतावदरे खल्वमृतत्वम्"इति समस्तवस्तुविसजातीयं निखिलजगदेककारणभूतं सर्वस्य विज्ञातारं पुरुषोत्तममुक्तप्रकारादुपासनादृते केन विजानीयादितीदमेवोपासनममृतत्वोपायः; ब्रह्मप्राप्तिरेव चामृतत्वमभिधीयते—इत्युक्तवान्। अतः परं ब्रह्मैवास्मिन्वाक्ये प्रतिपाद्यत इति परमेव ब्रह्म जगत्कारणम्, न पुरुषस्तदधिष्ठिता च प्रकृतिरिति स्थितम् ॥

इति श्रीशारीरकमीमांसाभाष्ये वाक्यान्वयाधिकरणम् ॥ ६ ॥

वेदान्तसारे—वाक्यान्वयात् ॥ [2]"न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय" इत्यारभ्य, [2]"आत्मा वा अरे द्रष्टव्यः" इत्यादिनोपदिष्टः परमात्मा[3]"अमृतत्वस्य तु नाशाऽस्ति वित्तेन"इत्यारभ्य,[2]"आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" इत्यादि, [4]"येनेदं सर्वं विजानाति" इत्यन्तस्य कृत्स्नस्य वाक्यस्य परमात्मन्येवान्वयात् ॥ १९ ॥

अस्मिन्प्रकरणे प्रकरणान्तरे च जीववाचिशब्देन परमात्मनोऽभिधाने, तत्सामानाधिकरण्ये च कारणम्मतान्तरेणाह—

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥ [2]"आत्मनि खल्वरे दृष्टे" इत्यादिना परमात्मज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धये जीवस्य तत्कार्यतया तस्मादनतिरिक्तत्वं ज्ञापयितुं जीवशब्देन परमात्माभिधानमिति आश्मरथ्यः ॥ २० ॥

उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥ उत्क्रमिष्यतः मुक्तस्य परमात्मस्वरूपभावादात्मशब्देन परमात्माभिधानमिति औडुलोमिः ॥ २१ ॥

अवस्थितेरिति काशकृत्स्नः ॥ [5]"य आत्मनि तिष्ठन्नात्मनोऽन्तरः" इत्यादिना जीवात्मनि परमात्मन आत्मतया अवस्थितेरिति काशकृत्स्न आचार्यो मन्यते । इदमेव मतं सूत्रकारस्स्वीकृतवानिति, मतद्वयमुपन्यस्य तद्विरोध्येतदभिधानात्, अन्यस्यानभिधानाच्च निश्चीयते ॥ २२ ॥

इति वेदान्तसारे वाक्यान्वयाधिकरणम् ॥ ६ ॥

---

१. बृ. ६-५-१५ ॥
२. बृ. ६-५-६ ॥
३. बृ. ४ ४-२ ॥
४. बृ. ४-४-१४ ॥
५. बृ. ५-७-२२ ॥ मा. पा ॥

वेदान्तदीपे—वाक्यान्वयात् ॥ बृहदारण्यके मैत्रेयीब्राह्मणे १"न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय" इत्यारभ्य, १"आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादौ द्रष्टव्यतया निर्दिष्टः पुरुषः तन्त्रसिद्धः, उत परमात्मेति संशयः। तन्त्रसिद्धः पञ्चविंशक एवेति पूर्वः पक्षः। पतिजायापुत्रवित्तमित्रपश्वादिप्रियसम्बन्ध्यात्मा न परमात्मा भवितुमर्हति। स एवहि १"आत्मा वा अरे द्रष्टव्यः"इति प्रतिपाद्यते। राद्धान्तस्तु—न पत्यादीनां कामाय प्रत्यादयः प्रिया भवन्ति १"आत्मनस्तु कामाय" इत्युक्त्वा, १"आत्मा वा अरे द्रष्टव्यः"इति निर्दिष्ट आत्मा, जीवातिरिक्तस्सत्यसङ्कल्पस्सर्वज्ञः परमात्मैव; यत्सङ्कल्पायत्तं पत्यादीनां स्वसम्बन्धिनः प्रति प्रियत्वम्, सहि सत्यसङ्कल्पः परमात्मा। आत्मज्ञानेन सर्वज्ञानादयोऽपि वक्ष्यमाणाः परमात्मन्येव सम्भवन्ति ॥

सूत्रार्थस्तु—वाक्यस्य कृत्स्नस्य परमात्मन्येवान्वयाद्द्रष्टव्यतया निर्दिष्ट आत्मा परमात्मैव २"अमृतत्वस्य तु नाशाऽस्ति वित्तेन" १"आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" ३"इदं सर्वं यदयमात्मा" ४"तस्य ह वा एतस्य महतो भूतस्य निश्श्वसितमेतद्यदृग्वेदः" ५"येनेदं सर्वं विजानाति तं केन विजानीयात्" इति हि कृत्स्नस्य वाक्यस्य परमात्मन्यन्वयो दृश्यते ॥१९॥

६"एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति" इति जीवलिङ्गस्य मतान्तरेण निर्वाहमाह—

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः॥ एकविज्ञानेन सर्वविज्ञानप्रतिज्ञासिद्धये जीवस्य परमात्मकार्यतया परस्मादात्मनोऽनन्यो जीव इति जीवशब्देन परमात्मनोऽभिधानमित्याश्मरथ्यमतम् ॥ २० ॥

उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः ॥ ७"परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते"इति शरीरात् उत्क्रमिष्यतः अस्य जीवस्य परमात्मभावाज्जीवशब्देन परमात्मनोऽभिधानमिति औडुलोमिराचार्यो मेने ॥ २१ ॥

अवस्थितेरिति काशकृत्स्नः॥ ८"य आत्मनि तिष्ठन्"इत्यादिभिर्जीवा-

१. बृ. ६-५-६ ॥
२. बृ ४-४-२ ॥
३. बृ. ६-५-७ ॥ ४. बृ. ४-४-१० ॥
५. बृ. ४-४-१४ ॥
६. बृ. ४-४-१२ ॥ ७. छा. ८-३-४ ॥
८. बृ. ५-७-२२ ॥ मा. पा ॥

त्मन्यन्तरात्मतया परमात्मनः अवस्थितेः जीवात्मशब्दस्य परमात्मनि पर्यवसानाज्जीवात्मशब्देन परमात्मनोऽभिधानमिति काशकृत्स्न आचार्यो मन्यते । इदमेव सूत्रकाराभिमतमित्यवगम्यते, त्रयाणामन्योन्यविरोधात्, इतः परमवचनाच्च ॥ २२ ॥

इति वेदान्तदीपे वाक्यान्वयाधिकरणम् ॥ ६ ॥

---

(श्रीशारीरिकमीमांसाभाष्ये प्रकृत्यधिकरणम् ॥ ७ ॥)

---

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् । १।४।२३॥

एवं निरीश्वरसाङ्ख्ये निरस्ते सति सेश्वरसाङ्ख्यः प्रत्यवतिष्ठते—यद्यपीक्षणादिगुणयोगात्सर्वज्ञमीश्वरं जगत्कारणत्वेन वेदान्ताः प्रदिपादयन्ति; तथापि वेदान्तैरेव जगदुपादानतया प्रधानमेव प्रतिपाद्यत इति प्रतीयते । नहि वेदान्तास्सर्वज्ञस्यापरिणामिनोऽधिष्ठातुरीश्वरस्याधिष्ठेयेनाचेतनेन परिणामिना प्रधानेन विना जगतः कारणत्वमवगमयन्ति । तथाह्यपरिणामिनमेनं प्रकृतिं चैतदधिष्ठितां परिणामिनीमधीयते—[1]"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्"[2]"स वा एष महानज आत्माऽजरोऽमरः" [3]"विकारजननीमज्ञामष्टरूपामजां ध्रुवाम्" [3]"ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः । सूयते पुरुषार्थं च तेनैवाधिष्ठिता जगत् । गौरनाद्यन्तवती सा जनित्री भूतभाविनी" इति । तथा प्रकृतिमुपादानभूतामधिष्ठायैवेश्वरो विश्वं जगत्सृजतीति श्रूयते [4]"अस्मान्मायी सृजते विश्वमेतत्" [4]"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति । स्मृतिरपि [5]"मयाऽध्यक्षेण प्रकृतिस्सूयते सचराचरम्" इति । एवमश्रुतेऽपि

---

१. श्वे. ६-१९ ॥
२. बृ. ६-४-२५ ॥
३. मन्त्रिकोपनिषदि ॥
४. श्वे. ४-९, १० ॥
५. गी. ९-१० ॥

प्रधानोपादानत्वे ब्रह्मणो जगत्कारणत्वश्रुत्यन्यथानुपपत्त्यैव प्रधानस्वरूपं तस्येश्वराधिष्ठितस्य जगदुपादानत्वं च सिद्ध्यति। एवमेवहि लोके निमित्तोपादानयोरत्यन्तभेदो दृश्यते। मृत्सुवर्णादेरचेतनस्य घटकटकाद्युपादानत्वं चेतनस्य कुलालसुवर्णकारादेर्निमित्तत्वं च नियतमुपलभ्यते। कार्यनिष्पत्तिश्च नियमेनानेककारकसव्यपेक्षा दृष्टा। एवं निमित्तोपादानयोर्भेदनियमं कार्यनिष्पत्तेरनेककारकसव्यपेक्षत्वनियमं चातिक्रम्यैकमेव ब्रह्मोपादानं निमित्तं च प्रतिपादयितुं न प्रभवन्ति वेदान्तवाक्यानि। अतो ब्रह्म निमित्तकारणमेव, नोपादानम्। उपादानंतु तदधिष्ठितं प्रधानमेव—इति॥

(सिद्धान्तः)

एवं प्राप्तेऽभिधीयते–प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्–इति। प्रकृतिश्च—उपादानंच। न निमित्तकारणमात्रं ब्रह्म, उपादानकारणं च ब्रह्मैवेत्यर्थः। कुतः? प्रतिज्ञादृष्टान्तानुपरोधात्। एवमेवहि प्रतिज्ञादृष्टान्तौ नोपरुध्येते। प्रतिज्ञा तावत् [१]"स्तब्धोऽस्युत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इत्येकविज्ञानेन सर्वविज्ञानविषया। दृष्टान्तश्च [२]"यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" [३]"यथा सोम्यैकेन लोहमणिना" [४]"यथा सोम्यैकेन नखनिकृन्तनेन" इति कारणविज्ञानात्कार्यविज्ञानविषयः। यदि निमित्तकारणमेव जगतो ब्रह्म, तदा तद्विज्ञानान्न समस्तं जगद्विज्ञातं स्यात्। नहि कुलालादिविज्ञानेन घटादिर्विज्ञायते। अतः प्रतिज्ञादृष्टान्तयोर्बाध एव। ब्रह्मण एवोपादानत्वे उपादानभूतमृत्पिण्डलोहमणिनखनिकृन्तनविज्ञानेन घटमणिकटकमकुटवासीपरश्वथादितत्कार्यविज्ञानवन्निखिलजगदुपादानभूते ब्रह्मणि विज्ञाते तत्कार्यं निखिलं जगद्विज्ञातं स्यात्। कारण-

१. छा. ६-१-३॥
२. छा. ६-१-४॥
३. छा. ६-१-५॥
४. छा. ६-१-६॥

मेवावस्थान्तरापन्नं कार्यम्, न द्रव्यान्तरमिति कार्यकारणरूपेणावस्थितमृत्तद्विकारादिनिदर्शनेन प्रतिज्ञासमर्थनाद्ब्रह्म जगदुपादानं चेति निश्चीयते । यत्तु निमित्तोपादानयोर्भेदश्श्रुत्यैव प्रतीयत इति; तदसत्, निमित्तोपादानयोरैक्यप्रतीतेः[१] "उत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवति" इति । आदिश्यते प्रशिष्यतेऽनेनेत्यादेशः, [२]"एतस्य वा अक्षरस्य प्रशासने गार्गि" इत्यादिश्रुतेः । साधकतमत्वेन कर्ता विवक्षितः । तमादेष्टारमप्राक्ष्यः, येनाश्रुतं श्रुतं भवति, येनादेष्ट्राऽधिष्ठात्रा श्रुतेनाश्रुतमपि श्रुतं भवतीति निमित्तोपादानयोरैक्यं प्रतीयते, [३]"सदेव सोम्येदमग्र आसीदेकमेव" इति प्राक्सृष्टेरेकत्वावधारणादद्वितीयपदेनाधिष्ठात्रन्तरनिवारणाच्च । नन्वेवं सति [४]"विकारजननीम्" [४]"गौरनाद्यन्तवती" इत्यादिभिः प्रकृतेराद्यन्तविरहेण नित्यत्वं जगदुपादानत्वं च श्रूयमाणं कथमुपपद्यते । तदुच्यते—तत्राप्यविभक्तनामरूपं कारणावस्थं ब्रह्मैव प्रकृतिशब्देनाभिधीयते, ब्रह्मव्यतिरिक्तवस्त्वन्तराभावात् । तथाहि श्रुतयः [५]"सर्वं तं परादाद्योऽन्यत्राऽत्मनस्सर्वं वेद" [६]"यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इत्याद्याः ; [७]"सर्वं खल्विदं ब्रह्म" [८]"ऐतदात्म्यमिदं सर्वम्" इति कार्यावस्थं कारणावस्थं च सर्वं जगद्ब्रह्मात्मकमिति श्रवणाच्च । एतदुक्तं भवति—[९]"यः पृथिवीमन्तरे सञ्चरन्यस्य पृथिवी शरीरं यं पृथिवी न वेद" इत्यारभ्य [९]"योऽव्यक्तमन्तरे सञ्चरन्यस्याव्यक्तं शरीरं यमव्यक्तं न वेद योऽक्षरमन्तरे सञ्चरन्यस्याक्षरं शरीरं यमक्षरं न वेद" [१०]"यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति" इत्यारभ्य [११]"य

१. छा. ६-१-३ ॥ २. बृ. ५-८-९ ॥ ३. छा. ६-२-१ ॥ ४. मन्त्रिकोपनिषदि॥ ५. बृ. ६-५-७ ॥ ६. बृ. ६-५-१५ ॥ ७. छा. ३-१४-१ ॥ ८. छा. ६-८-७ ॥ ९. सुबा. ७॥ १०. बृ. ५-७-३ ॥ ११. बृ. ५-७-२२ ॥

आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्याऽऽत्मा शरीरं य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः" इति च सर्वचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतं परं ब्रह्म कदाचिद्विभक्तनामरूपम्, कदाचिच्चाविभक्तनामरूपम्; यदा विभक्तनामरूपं तदा तदेव बहुत्वेन कार्यत्वेन चोच्यते; यदा चाविभक्तनामरूपं तदैकमद्वितीयं कारणमिति च। एवं सर्वदा चिदचिद्वस्तुशरीरस्य परस्य ब्रह्मणोऽविभक्तनामरूपा या कारणावस्था सा [1]"गौरनाद्यन्तवती" [1]"विकारजननीमज्ञाम्"[2]"अजामेकाम्"इत्यादिभिरभिधीयते—इति। ननु च [3]"महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते" इति प्रलयश्रुतेरव्यक्तस्योत्पत्तिप्रलयौ प्रतीयेते; तथा च महाभारते [4]"तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम" [5]"अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये सम्प्रलीयते" इति। नैष दोषः, अचिद्वस्तुशरीरस्य ब्रह्मणोऽव्यक्तशब्दवाच्यायास्त्रिगुणावस्थायाः कार्यत्वात्। [6]"यदा तमस्तन्न दिवा न रात्रिः" इति कृत्स्नप्रलयदशायामपि ब्रह्मात्मकस्यातिसूक्ष्मस्याचिद्वस्तुनस्स्थित्यभिधानाज्जगत्कारणस्य परस्य ब्रह्मणः प्रकारभूतमतिसूक्ष्मं चाचिद्वस्तु नित्यमेवेति तत्प्रकारं ब्रह्मैव [7]"गौरनाद्यन्तवती" इत्यादिष्वभिधीयते। अत एव च [8]"अक्षरं तमसि लीयते तमः परे देव एकी भवति" इति तमस एकीभावमात्रमेव श्रूयते; न तु लयः। एकीभाव इति तमोभिधानातिसूक्ष्माचित्प्रकारस्य ब्रह्मणोऽविभक्तनामरूपतयाऽवस्थानमभिधीयते। [9]"तम आसीत्तमसा गूढमग्रे प्रकेतं तमसस्तन्महिनाजायतैकम्" इत्याद्यप्येतदेव वदति। तथा च मानवं वचः [10]"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमवि-

१. मन्त्रिकोप॥
२. श्वे. ४-५॥
३. सुबा. २॥
४,५. भारते. शान्ति. मोक्ष. ८-१३,१४॥
६.
७. मन्त्रिकोप.॥ ८. सुबा. २॥
९.
१०. मनुः. २-५॥

ज्ञेयं प्रसुप्तमिव सर्वतः" इति। [१]"अस्मान्मायी सृजते विश्वमेतत्" इत्याद्यनन्तरमेवोपपादयिष्यते; ब्रह्मणोऽपरिणामित्वश्रुतयश्च। यत्त्वेकस्य निमित्तत्वमुपादानत्वं च न सम्भवति, एककारकनिष्पाद्यत्वं च कार्यस्य; लोके तथा नियमदर्शनात्। अतोऽग्निना सिञ्चेदितिवद्वेदान्तवाक्यान्येकस्मादेवोत्पत्तिं प्रतिपादयितुं न प्रभवन्तीति। अत्रोच्यते—सकलेतरविलक्षणस्य परस्य ब्रह्मणस्सर्वशक्तेस्सर्वज्ञस्यैकस्यैव सर्वमुपपद्यते। मृदादेरचेतनस्य ज्ञानाभावेनाधिष्ठातृत्वायोगादधिष्ठातुः कुलालादेर्विचित्रपरिणामशक्तिविरहादसत्यसङ्कल्पतया च तथा दर्शननियमः। अतो ब्रह्मैव जगतो निमित्तमुपादानं च ॥ २३ ॥

## अभिध्योपदेशाच्च । १ । ४ । २४ ॥

इतश्चोभयं ब्रह्मैव, [२]"सोऽकामयत बहु स्यां प्रजायेयेति" [३]"तदैक्षत बहु स्यां प्रजायेय"इति स्रष्टुर्ब्रह्मणस्स्वस्यैव बहुभवनसङ्कल्पोपदेशात्। विचित्रचिदचिद्रूपेणाहमेव बहु स्यां तथा प्रजायेयेति सङ्कल्पपूर्विका हि सृष्टिरुपदिश्यते ॥ २४ ॥

## साक्षाच्चोभयाम्नानात् । १ । ४ । २५ ॥

न केवलं प्रतिज्ञादृष्टान्ताभिध्योपदेशादिभिरयमर्थो निश्चीयते, ब्रह्मण एव निमित्तत्वमुपादानत्वं च साक्षादाम्नायते [४]"किं स्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद्भुवनानि धारयन्। ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा विब्रवीमि वो ब्रह्माध्यतिष्ठद्भु-

---

१. श्वे ४-९ ॥
२. तै. आ. ६-२ ॥
३. छा. ६-२-३ ॥
४. अष्ट. २-प्र. ८. अनु. ७-पं-८ ॥

वनानि धारयन्" इति । अत्र हि स्रष्टुर्ब्रह्मणः किमुपादानं कानि चोपकरणानीति लोकदृष्ट्या पृष्टे सकलेतरविलक्षणस्य ब्रह्मणस्सर्वशक्तियोगो न विरुद्ध इति ब्रह्मैवोपादानमुपकरणानि चेति परिहृतम् । अतश्चोभयं ब्रह्म ॥ २५ ॥

## आत्मकृतेः । १ । ४ । २६ ॥

[१]"सोऽकामयत बहु स्यां प्रजायेय" इति सिसृक्षुत्वेन प्रकृतस्य ब्रह्मणः [२]"तदात्मानं स्वयमकुरुत" इति सृष्टेः कर्मत्वं कर्तृत्वं च प्रतीयत इत्यात्मन एव बहुत्वकरणात्तस्यैव निमित्तत्वमुपादानत्वं च प्रतीयते । अविभक्तनामरूप आत्मा कर्ता, स एव विभक्तनामरूपः कार्यमिति कर्तृत्वकर्मत्वयोर्न विरोधः । स्वयमेवाऽत्मानं तथाऽकुरुतेति निमित्तमुपादानं च ॥ २६ ॥

[३]"सत्यं ज्ञानमनन्तं ब्रह्म" [४]"आनन्दो ब्रह्म" [५]"अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः" [६]"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" [७]"स वा एष महानज आत्माऽजरोऽमरः" इति स्वभावतो निरस्तसमस्तचेतनाचेतनवर्तिदोषगन्धस्य निरतिशयज्ञानानन्दैकतानस्य परस्य ब्रह्मणो विचित्रानन्तापुरुषार्थास्पदचिदचिन्मिश्रप्रपञ्चरूपेणाऽत्मनो बहुभवनसङ्कल्पपूर्वकं बहुत्वकरणं कथमुपपद्यत इत्याशङ्क्याह—

## परिणामात् । १ । ४ । २७ ॥

परिणामस्वाभाव्यात्;नात्रोपदिश्यमानस्य परिणामस्य परस्मिन्ब्र-

---

१. तै. आ. ६-२ ॥
२. तै. आ. ७-१ ॥
३. तै. आ. १-१ ॥
४. तै भृ. ६ ॥
५. छा. ८-१-५ ॥
६. श्वे. ६-१९ ॥
७. बृ. ६-४-२५ ॥

ह्माणि दोषावहत्वं स्वभावः,प्रत्युत निरङ्कुशैश्वर्यावहत्वमेवेत्यभिप्रायः। एवमेव हि परिणाम उपदिश्यते; अशेषहेयप्रत्यनीककल्याणैकतानं स्वेतरसमस्तवस्तुविलक्षणं सर्वज्ञं सत्यसङ्कल्पमवाप्तसमस्तकाममनवधिकातिशयानन्दं स्वलीलोपकरणभूतसमस्तचिदचिद्वस्तुजातशरीरतया तदात्मभूतं परं ब्रह्म स्वशरीरभूते प्रपञ्चे तन्मात्राहङ्कारादिकारणपरम्परया तमश्शब्दवाच्यातिसूक्ष्माचिद्वस्त्वेकशेषे सति, तमसि च स्वशरीरतयापि पृथङ्निर्देशानर्हातिसूक्ष्मदशापत्त्या स्वस्मिन्नेकतामापन्ने सति, तथाभूततमश्शरीरं ब्रह्म पूर्ववद्विभक्तनामरूपचिदचिन्मिश्रप्रपञ्चशरीरं स्यामिति सङ्कल्प्याप्ययक्रमेण जगच्छरीरतया आत्मानं परिणमयतीति सर्वेषु वेदान्तेषु परिणामोपदेशः। तथैव बृहदारण्यके कृत्स्नस्य जगतो ब्रह्मशरीरत्वं ब्रह्मणस्तदात्मत्वं चाम्नायते [1]"यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः" इत्यारभ्य [1]"यस्यापश्शरीरम्"[1]"यस्याग्निश्शरीरं" [1]"यस्यान्तरिक्षं शरीरम्" [1]"यस्य वायुश्शरीरम्" [1]"यस्य द्यौश्शरीरम्"[1]"यस्यादित्यश्शरीरम्" [1]"यस्य दिशश्शरीरम्" [1]"यस्य चन्द्रतारकं शरीरम्" [1]"यस्याकाशश्शरीरम्" [1]"यस्य तमश्शरीरम्" [1]"यस्य तेजश्शरीरम्" [1]"यस्य सर्वाणि भूतानि शरीरम्" [1]"यस्य प्राणश्शरीरम्"[1]"यस्य वाक्छरीरम्"[1]"यस्य चक्षुश्शरीरम्"[1]"यस्य श्रोत्रं शरीरम्" [1]"यस्य मनश्शरीरम्"[1]"यस्य त्वक्छरीरम्" [1]"यस्य विज्ञानं शरीरम्" [1]"यस्य रेतश्शरीरम्" इत्येवमन्तेन काण्वपाठे; माध्यन्दिने तु पाठे विज्ञानस्थाने 'यस्याऽत्मा शरीरम्' इति विशेषः। लोकयज्ञवेदानां परमात्मशरीरत्वमधिकम्। सुबालोपनिषदि च पृथिव्यादीनां तत्त्वानां परमात्मशरीरत्वमभिधाय वाजसनेयकेऽनुक्तानामपि तत्त्वा-

१. बृ.५-७-३ वाक्यमारभ्य २३ वाक्यपर्यन्तम्॥

नां शरीरत्वं ब्रह्मण आत्मत्वं च श्रूयते[१] "यस्य बुद्धिश्शरीरम्"[१] "यस्याहङ्कारश्शरीरम्" [१] "यस्य चित्तं शरीरं"[१] "यस्याव्यक्तं शरीरम्"[१] "यस्याक्षरं शरीरम् यो मृत्युमन्तरे सञ्चरन्यस्य मृत्युश्शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति । अत्र मृत्युशब्देन परमसूक्ष्ममचिद्वस्तुतमश्शब्दवाच्यमभिधीयते, [२] "अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते" इति तस्यामेवोपनिषदि क्रमप्रत्यभिज्ञानात् । सर्वेषामात्मनां ज्ञानावरणानर्थमूलत्वेन तदेव हि तमो मृत्युशब्दव्यपदेश्यम् । सुबालोपनिषद्येव ब्रह्मशरीरतया तदात्मकानां तत्त्वानां ब्रह्मण्येव प्रलय आम्नायते[२] "पृथिव्यप्सु प्रलीयते आपस्तेजसि लीयन्ते तेजो वायौ लीयते वायुराकाशे लीयते आकाशमिन्द्रियेष्विन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति लीयते महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते तमः परे देव एकी भवति" इति ।अविभागापत्तिदशायामपि चिदचिद्वस्त्वतिसूक्ष्मं सकर्मसंस्कारं तिष्ठतीत्युत्तरत्र वक्ष्यते—[३] "न कर्माविभागादितिचेन्नानादित्वादुपपद्यते चाप्युपलभ्यतेच" इति । एवं स्वस्माद्विभागव्यपदेशानर्हतया परमात्मनैकीभूतात्यन्तसूक्ष्मचिदचिद्वस्तुशरीरादेकस्मादेवाद्वितीयान्निरतिशयानन्दात्सर्वज्ञात्सत्यसङ्कल्पाद्ब्रह्मणो नामरूपविभागार्हस्थूलचिदचिद्वस्तुशरीरतया बहुभवनसङ्कल्पपूर्वको जगदाकारेण परिणामश्श्रूयते । [४] "सत्यं ज्ञानमनन्तं ब्रह्म" [५] "तस्माद्वा एतस्माद्विज्ञानमयात्।अन्योऽन्तर आत्माऽऽनन्दमयः" [६] "एष ह्येवानन्दयाति" [७] "सोऽकामयत बहु स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत यदिदं कि-

१. सुबा. ७ ॥
२. सुबा. २ ॥
३. शारी. २-१-३५ ॥
४. तै. आ. १-१ ॥
५. तै. आ. ५-२ ॥
६. तै. आ. ७-७॥
७. तै. आ. ६-२ ॥

श्च तत्सृष्ट्वा तदेवानुप्राविशत् तदनु प्रविश्य सच्च त्यच्चाभवत् निरुक्तं चानिरुक्तंच निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवत्" इति। अत्र तपश्शब्देन प्राचीनजगदाकारपर्यालोचनरूपं ज्ञानमभिधीयते [१]"यस्य ज्ञानमयं तपः" इत्यादिश्रुतेः।प्राक्सृष्टं जगत्संस्थानमालोच्येदानीमपि तत्संस्थानं जगदसृजदित्यर्थः;तथैव हि ब्रह्म सर्वेषु कल्पेष्वेकरूपमेव जगत्सृजति [२]"सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्।दिवं च पृथिवीं चान्तरिक्षमथो सुवः" [३]"यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये। दृश्यन्ते तानितान्येव तथा भावा युगादिषु" इति श्रुतिस्मृतिभ्यः। तदयमर्थः—स्वयमपरिच्छिन्नज्ञानानन्दस्वभावोऽत्यन्तसूक्ष्मतयाऽसत्कल्पस्वलीलोपकरणचिदचिद्वस्तुशरीरतया तन्मयः परमात्मा विचित्रानन्तक्रीडनकोपादित्सया स्वशरीरभूतप्रकृतिपुरुषसमष्टिपरम्परया महाभूतपर्यन्तमात्मानं तत्तच्छरीरकं परिणमय्य तन्मयः पुनस्सत्त्यच्छब्दवाच्यविचित्रचिदचिन्मिश्रदेवादिस्थावरान्तजगद्रूपोऽभवत्—इति। [४]"तदेवानुप्राविशत्तदनुप्रविश्य" इति कारणावस्थायामात्मतयाऽवस्थितः परमात्मैव कार्यरूपेण विक्रियमाणद्रव्यस्याप्यात्मतयाऽवस्थाय तत्तदभवदित्युच्यते। एवं परमात्मचिदचित्सङ्घातरूपजगदाकारपरिणामे परमात्मशरीरभूतचिदंशगतास्सर्व एवापुरुषार्थाः ; तथाभूताचिदंशगताश्च सर्वे विकाराः; परमात्मनि कार्यत्वम् ; तदवस्थयोस्तयोर्नियन्तृत्वेनात्मत्वम् ; परमात्मा तु तयोस्स्वशरीरभूतयोर्नियन्तृतयात्मभूतस्तद्गतापुरुषार्थैर्विकारैश्च न स्पृश्यते; अपरिच्छिन्नज्ञानानन्दमयस्सर्वदैकरूप एव जगत्परिवर्तनलीलयाऽवतिष्ठते। तदेतदाह [४]"सत्यं चानृतं च सत्यमभवत्" इति। विचित्रचिदचिद्रूपेण विक्रियमाणमपि ब्रह्म सत्यमेवाभवत्—निरस्तनिखिलदोषगन्ध-

---

१. मु. १-१-९ ॥
२. तै. नारा. ६-२४ ॥
३. वि. पु-१-५-६५ ॥
४. तै. आ. ६-३ ॥

मपरिच्छिन्नज्ञानानन्दमेकरूपमेवाभवदित्यर्थः। सर्वाणि चिदचिद्वस्तूनि सूक्ष्मदशापन्नानि स्थूलदशापन्नानि च परस्य ब्रह्मणो लीलोपकरणानि;सृष्ट्यादयश्च लीलेति भगवद्द्वैपायनपराशरादिभिरुक्तम्[1] "अव्यक्तादिविशेषान्तं परिणामर्धिसंयुतम्।क्रीडा हरेरिदं सर्वं क्षरमित्युपधार्यताम्" [2]"क्रीडतो बालकस्येव चेष्टां तस्य निशामय"[3]"बालः क्रीडनकैरिव" इत्यादिभिः। वक्ष्यतिच [4]"लोकवत्तु लीलाकैवल्यम्"इति। [5]"अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः"इति ब्रह्मणि जगद्रूपतया विक्रियमाणेऽपि तत्प्रकारभूताचिदंशगतास्सर्वे विकारास्तत्प्रकारभूतक्षेत्रज्ञगताश्चापुरुषार्था इति विवेक्तुं प्रकृतिपुरुषयोर्ब्रह्मशरीरभूतयोस्तदानीं तथा निर्देशानर्हातिसूक्ष्मदशापत्त्या ब्रह्मणैकीभूतयोरपि भेदेन व्यपदेशः, [6]"तदात्मानं स्वयमकुरुत" इत्यादिभिरैकार्थ्यात्। तथाच मानवं वचः[7]"सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः। अप एव ससर्जादौ तासु वीर्यमपासृजत्" इति। अत एव ब्रह्मणो निर्दोषत्वनिर्विकारत्वश्रुतयश्चोपपन्नाः। अतो ब्रह्मैव जगतो निमित्तमुपादानञ्च॥ २७॥

## योनिश्चहि गीयते।१।४।२८॥

इतश्च जगतो निमित्तमुपादानञ्च ब्रह्म,यस्माद्योनित्वेनाप्यभिधीयते [8]"कर्तारमीशं पुरुषं ब्रह्म योनिम्" इति। [9]"यद्भूतयोनिं परिपश्यन्ति धीराः" इति च।योनिशब्दश्चोपादानवचन इति [10] "यथोर्णनाभिस्सृजते गृह्णते च" इति वाक्यशेषादवगम्यते॥ २८॥

इति श्रीशारीरकमीमांसाभाष्ये प्रकृत्यधिकरणम्॥ ७॥

---

१.
२. वि. पु. १-२-१८॥
३. वायुपु. उत्तरखं. ३६-९६॥
४. शारी. २-१-३३॥
५. श्वे. ४-९. ६. तै. आ. ७॥
७. मनु. १-८॥
८.मु. ३-१-३॥
९,१०. मु. १-१-६,७॥

वेदान्तसारे–प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ जगदुपादानकारणमपि परं ब्रह्म, न निमित्तमात्रम्, १"स्तब्धोऽस्युत तमादेशमप्राक्ष्यः येनाश्रुतं श्रुतं भवति" इति येन आदेष्ट्रा निमित्तभूतेन विज्ञातेन चेतनाचेतनात्मकं कृत्स्नं जगद्विज्ञातं भवतीति आदेष्टृविज्ञानेन सर्वविज्ञानप्रतिज्ञातदुपपादनरूपमृत्कार्यदृष्टान्तानुपरोधात्।आदिश्यते अनेनेति आदेशः—इत्यादेशशब्देनादेष्टाभिधीयते। आदेशः प्रशासनम्, २"एतस्य वा अक्षरस्य प्रशासने गार्गि" इत्यादिश्रुतेः ॥ २३ ॥

अभिध्योपदेशाच्च ॥ ३"तदैक्षत बहु स्यां प्रजायेय" इति निमित्तभूतस्येक्षितुः विचित्रचिदचिद्रूपेण जगदाकारेणाऽत्मनो बहुभवनसङ्कल्पोपदेशाच्च उपादानमपीति विज्ञायते ॥ २४ ॥

साक्षाच्चोभयाम्नानात् ॥ ४"ब्रह्म वनं ब्रह्म स वृक्ष आसीत्...ब्रह्माध्यतिष्ठद्भुवनानि धारयन्" इति उपादानं निमित्तञ्च ब्रह्मैवेति स्वशब्देन उभयाम्नानाच्च ॥ २५ ॥

आत्मकृतेः ॥ ५"सोऽकामयत" इति निमित्तभूतस्य स्वस्यैव जगदाकारेण कृतेः ६"तदात्मानं स्वयमकुरुत" इत्युपदिश्यमानायाः परमपुरुषो जगन्निमित्तमुपादानञ्चेति विज्ञायते ॥ २६ ॥

परस्य ब्रह्मणो निरवद्यत्वसत्यसङ्कल्पत्वादेः तद्विपरीतानन्तापुरुषार्थाश्रयजगदाकारेण आत्मकृतेश्चाविरोधः कथमित्याशङ्क्याह—

परिणामात् ॥ अत्रोपदिश्यमानात् परिणामात् तदविरोध एव। अविभक्तनामरूपातिसूक्ष्मचिदचिद्वस्तुशरीरकः कारणावस्थः परमपुरुषस्स्वयमेव ५"सोऽकामयत बहु स्यां प्रजायेय" इति विभक्तनामरूपचिदचिद्वस्तुशरीरको भवेयमिति सङ्कल्प्य५"इदं सर्वमसृजत यदिदं किञ्च" इति स्वशरीरभूतमतिसूक्ष्मश्चिदचिद्वस्तु स्वस्माद्विभज्य ५"तत्सृष्ट्वा तदेवानुप्राविशत्" इति स्वस्माद्विभक्ते चिदचिद्वस्तुनि स्वयमेवात्मतयाऽनुप्रविश्य५"सच्च त्यच्चाभवत्। निरुक्तञ्चानिरुक्तञ्च। निलयनञ्चानिलयनञ्च। विज्ञानञ्चाविज्ञानञ्च। सत्यञ्चानृतञ्च सत्यमभवत्" इति हि स्वस्य बहुभवनरूपपरिणाम उपदिश्यते; अतो न कश्चिद्विरोधः।

१. छा. ६-१-३ ॥
२. बृ. ५-८-९ ॥
३. छा. ६-२-३ ॥
४. अष्ट. २-प्र. ८-अनु. ७-८ ॥
५. तै. आ. ६-२ ॥
६. तै. आ. ७-१ ॥

अविभागावस्थायामपि जीवस्तत्कर्म च सूक्ष्मरूपेण तिष्ठतीति वक्ष्यति[१] "न कर्माविभागादितिचेन्नानादित्वादुपपद्यते चाप्युपलभ्यते च" इति ॥ २७ ॥

योनिश्च हि गीयते ॥ [२] "यद्भूतयोनिम्" इत्यादिषु योनिश्च गीयते ; अतश्चोपादानमपि ॥ २८ ॥

इति वेदान्तसारे प्रकृत्यधिकरणम् ॥ ७ ॥

---

वेदान्तदीपे—प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्॥ परं ब्रह्म किं जगतो निमित्तकारणमात्रम्, उतोपादानकारणमपीति संशयः। निमित्तकारणमात्रमिति पूर्वः पक्षः, मृत्कुलालादौ निमित्तोपादानयोर्भेददर्शनात् ; [३] "अस्मान्मायी सृजते विश्वमेतत्" इत्यादिभिर्भेदप्रतिपादनात्, ब्रह्मणोऽविकारत्वश्रुतिविरोधाच्च। राद्धान्तस्तु—[४] "येनाश्रुतं श्रुतम्" इति ब्रह्मविज्ञानेन सर्वविज्ञानप्रतिज्ञानान्यथानुपपत्त्या [५] "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयम्" इति मृत्सत्कार्यदृष्टान्तेन तदुपपादनाच्च जगदुपादानकारणमपि ब्रह्मैवेति विज्ञायते। प्रमाणान्तरावसितसकलवस्तुविलक्षणस्य शास्त्रैकसमधिगम्यस्य परस्य ब्रह्मणस्सर्वज्ञस्य सर्वशक्तेः कार्यकारणोभयावस्थायामपि स्वशरीरभूतचिदचित्प्रकारतयाऽवस्थितस्यैकस्यैव निमित्तत्वमुपादानत्वं चाविरुद्धम्। शरीरभूताचिद्वस्तुगतो विकार इति कार्यावस्थावस्थितस्यापि शरीरिणः परमात्मनोऽविकारित्वं सिद्धमेव। चिदचिद्वस्तुशरीरस्य ब्रह्मण एवोपादानत्वेऽपि ब्रह्मण्यपुरुषार्थविकारास्पर्शप्रदर्शनाय हि [३] "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः" इति व्यपदेशः। प्रतिज्ञादृष्टान्तानुपरोधात् उपादानं च ब्रह्मैवेति सूत्रार्थः ॥ २३ ॥

अभिध्योपदेशाच्च ॥ [६] "सोऽकामयत बहु स्याम्" [७] "तदैक्षत बहु स्यां प्रजायेय" इति स्रष्टुर्ब्रह्मणस्स्वस्यैव जगदाकारेण बहुभवनचिन्तनोपदेशाच्च जगदुपादानं निमित्तं च ब्रह्मैवेति निश्चीयते ॥ २४ ॥

साक्षाच्चोभयाम्नानात् ॥ [८] "किं स्विद्वनं क उ स वृक्ष आसीत्" इत्यादिना जगदुपादाननिमित्तादौ पृष्टे [८] "ब्रह्म वनं ब्रह्म स वृक्ष आसीत्" [८] "ब्रह्माध्य-

---

१. शारी. २-१-३५ ॥
२. मु. १-१-६ ॥
३. श्वे. ४-९ ॥
४. छा. ६-१-३ ॥
५. छा ६, १-४ ॥
६. तै. आ. ६-२ ॥
७. छा. ६-२-३ ॥
८. अष्ट. २-प्र. ८-अनु. ७-८ ॥

